माध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतव्याकरणम् - २४६

## पुस्तकम् - ३

विद्याधनम् सर्वधनं प्रधानम्


**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# माध्यमिककक्षा - संस्कृतव्याकरणम् (२४६)

## मन्त्रणामण्डलम्


**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यविषय-निर्मिति-समितिः


**प्रो. डॉ. अर्कनाथ-चौधरी (समितेः अध्यक्षः)**
उप-कुलपतिः
श्रीसोमनाथ-संस्कृत-विश्वविद्यालयः
वेरावल -३६२२६६ (गुर्जरप्रदेशः)

**डॉ. नीरजकुमारभार्गवः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. हरि-राम-मिश्रः**
सहायकप्राध्यापकः (संस्कृतविभागः)
जवाहरलाल-नेहरू-विश्वविद्यालयः
नवदेहली

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. विजेन्द्र-सिंहः**
वरिष्ठ-प्राध्यापकः (संस्कृतम्)
शिक्षानिदेशालयः, केन्द्रसर्वकारः, देहली

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यक्रम-समन्वयकः


**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १-९)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १०-१४)**
**श्रीमान् जयदेवदिण्डा**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १५-१८)**
**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**(पाठः १९-२५)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २६-२९)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।

पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्णाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतव्याकरणस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा

अध्यक्षः

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतव्याकरणस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।<br>
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।<br>
दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।<br>
शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।<br>
स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।<br>
मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।

श्री संजय-कुमार-सिन्हा<br>
निदेशकः (शैक्षिकम्)<br>
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै।। ॐ शान्तिः शान्तिः शान्तिः।।

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

संस्कृतव्याकरणस्य अध्ययनं सोपानक्रमेण भवति। अतः सोपानस्य प्रति पर्व आरोहणं क्रमेणैव कर्तव्यमिति इत्यतः पाणिनीयाम् अष्टाध्यायीं विद्वांसः भिन्नक्रमेणापि व्याख्यातवन्तः। सोऽयं प्रक्रियाक्रमः। तं क्रमम् अवलम्ब्य निर्मिता इयं सामग्री सोपनपर्वक्रमेणैव आयोजिता अस्ति। माध्यमिककक्षायां एकः भागः उच्चमाध्यमिककक्षायां च अवशिष्टः भागः वर्तते। एतेन पाणिनीयतन्त्रे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री पाणिनीयतन्त्रस्य सश्रद्धम् अध्ययने प्रवेशाय प्रोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति। अस्य अध्ययनेन व्याकरणस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। सूत्राणि सूत्रव्याख्या, उदाहरणानि, उदाहरणेषु सूत्रस्य प्रवृत्तिः, रूपनिष्पत्तिश्च इति लक्ष्यलक्षणात्मकोऽयं व्याकरणप्रपञ्चः अत्र वर्तते।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय।। ॐ शान्तिः शान्तिः शान्तिः।।

भवत्कल्याणकामी

राम-नारायण-मीणा

पाठ्यक्रमसमन्वयकः (शैक्षिकम्)

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### संज्ञापरिभाषम्

१. व्याकरणपरिचयः

२. संज्ञाप्रकरणम् - १

३. संज्ञाप्रकरणम् - २

४.संज्ञाप्रकरणम् - ३

५.परिभाषाप्रकरणम्

### सन्धिप्रकरणम्

६.अच्सन्धौ यण्-अयवायावादिसन्धिः

७.अच्सन्धौ एकादेशः प्रकृतिभाश्च

८.हल्सन्धौ रुत्व-श्चुत्वादिसन्धिः

९.हल्सन्धौ अनुस्वारसन्धिः विसर्गसन्धिश्च

## पुस्तकम्- २

### सुबन्तप्रकरणम्

१०. अजन्तपुंलिङ्गे अदन्तशब्दरूपाणि

११. अजन्तपुंलिङ्गे अदन्तशब्दानां सर्वनाम्नां च रूपाणि

१२. अजन्तपुंलिङ्गे इकारादिशब्दानां रूपाणि

१३. अजन्तस्त्रीलिङ्गे रमानदीशब्दरूपाणि

१४.अजन्तनपुंसकलिङ्गम्

१५. हलन्तप्रकरणे लिह्-दुह् इत्यादिशब्दानां रूपाणि

१६. हलन्तप्रकरणे इदम् राजन् इत्यादिशब्दानां रूपाणि

१७.हलन्तप्रकरणे तत् इत्यादिशब्दानां रूपाणि

१८. हलन्तप्रकरणे महत् इत्यादिशब्दानां रूपाणि

## पुस्तकम्- ३

### कारकविभक्त्यर्थप्रकरणम्

१९. कारकसामान्यपरिचयः, प्रथमाकारकविभक्तिः

२०. द्वितीयाकारकविभक्तिः -१

२१. द्वितीयाकारकविभक्तिः - २

२२.कारकविभक्तौ तृतीया, चतुर्थी च

२३. कारकविभक्तौ पञ्चमी षष्ठी सप्तमी च

### उपपदविभक्त्यर्थप्रकरणम्

२४.उपपदविभक्तौ द्वितीया, तृतीया, चतुर्थी, पञ्चमी च

२५.उपपदविभक्तौ षष्ठी, सप्तमी च

### कृदन्तप्रकरणम्

२६.कृत्यप्रकरणम्

२७.पूर्वकृदन्तप्रकरणम्-१

२८.पूर्वकृदन्तप्रकरणम्-२

२९.उत्तरकृदन्तप्रकरणम्

# संस्कृतव्याकरणम्

# माध्यमिककक्षा

## तृतीयं स्वाध्यायसोपानम्

| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|

११

# कारकसामान्यपरिचयः प्रथमाविभक्तिश्च।

## प्रस्तावना

अस्मिन् जगति न हि कश्चित् क्षणमपि निष्क्रियः तिष्ठति। गीतमपि गीतायाम् "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति। एवञ्च सर्वदैव जीवाः क्रियारताः भवन्ति। क्रिया च कारकाधीना भवति। राजा गां हस्तेन विप्राय गोष्ठात् गङ्गातीरे ददाति इत्यत्र यथा दानक्रियां प्रति राजा कर्ता, गौः कर्म, हस्तः करणम्, विप्रः सम्प्रदानम्, गोष्ठः अपादानम्, गङ्गातीरं च अधिकरणमस्ति। एवञ्चात्र दानक्रिया कर्त्रादिकारकाधीना वर्तते। यतो हि तत्तत्कारकाभावे दानक्रिया नैव भवितुमर्हति। एवमन्यत्रापि क्रिया कारकाधीना भवति। एवञ्च भवति जिज्ञासा। किं नाम कारकम् यदधीना क्रिया भवति इति। अतः आदौ कारकसामान्यस्वरूपं प्रतिपाद्यते। अपि च संस्कृतभाषायां कारकाणां बोधनाय प्रथमाद्वितीयेत्यादयः सप्त विभक्तयः सन्ति। तासु प्रथमं प्रथमाविभक्तिः कुत्र भवति इति प्रतिपाद्यते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- कारकस्वरूपं कारकभेदं च ज्ञातुं प्रभवेत्।
- विभक्तिस्वरूपं विभक्तिभेदं च ज्ञातुं प्रभवेत्।
- धात्वर्थं प्रातिपदिकार्थं च जानीयात्।
- प्रथमाविभक्तिः कुत्र कुत्र भवति इति ज्ञातुं शक्नुयात्।।
- वाक्येषु प्रथमाविभक्तेः शुद्धप्रयोगं कर्तुं शक्नुयात्।

### ☛ कारकसामान्यपरिचयः

कृञ् इति धातोः ण्वुल्तृचौ (३.१.१३३) इति सूत्रेण कर्त्तरि अर्थे ण्वुल् -प्रत्यये अनुबन्धलोपे कृ वु इति स्थितौ युवोरनाकौ इति सूत्रेण वु इत्यस्य स्थाने अक इत्यादेशे अचो ञ्णिति (७.२.११५) इति सूत्रेण ऋकारस्य स्थाने आर् इति वृद्धौ सत्यां कारक इति शब्दः सिध्यति। अस्य कारकशब्दस्यार्थो भवति करोति इति। करोति इति पदस्य चात्र जनयति इत्यर्थो भवति। एवञ्च यत् करोति = जनयति तत्



कारकम् इत्युच्यते। तत्र किं जनयति इति जिज्ञासायां क्रियामिति पदमध्याह्रियते, ततश्च यत् क्रियां जनयति तत् कारकमित्युच्यते, अर्थात् यत् क्रियाजनकं तत्कारकम्। एवञ्च क्रियाजनकत्वं कारकत्वम् इति कारकस्य लक्षणं भवति। तत्र जनकत्वं नाम कारणत्वं, ततश्च क्रियाकारणत्वं कारकत्वमिति लक्षणं फलति। कारणत्वं च कार्यनियतपूर्ववृत्तित्वम्। एवञ्च क्रियानियतपूर्ववृत्तित्वं कारकत्वमिति कारकस्य निष्कृष्टं लक्षणं सिध्यति। तानि च कारकाणि - कर्ता कर्म करणं सम्प्रदानम् अपादानम् अधिकरणम् इत्येतानि षट् सन्ति। कथमेषां षण्णां क्रियानियतपूर्ववृत्तित्वमस्ति इति चेदुच्यते। चैत्रेण गम्यते इत्यत्र गमनक्रियायाः पूर्वं नियमेन चैत्रः अस्ति, यतो हि चैत्रस्य गमनक्रियायाः पूर्वं चैत्रः नास्ति चेत् तु गमनक्रिया नैव सम्भवति। अतः गमनक्रियानियतपूर्ववृत्तित्वात् चैत्रः गमनक्रियां प्रति कारकमस्ति। तच्च गमनक्रियां प्रति कर्ता अपि अस्ति, एवञ्च चैत्रः कर्तृ कारकम्। एवमेव चैत्रेण पच्यते, लिख्यते पठ्यते, इत्यादौ सर्वत्रैव बोध्यम्। चैत्रः ग्रामं गच्छति इत्यत्र ग्रामः अपि गमनक्रियायाः नियतपूर्ववृत्तिः अस्ति, यतोहि गमनक्रियायाः पूर्वं ग्रामस्य अभावे सति कश्चिदपि ग्रामं गन्तुं नैव शक्नोति, तस्मात् ग्रामस्यापि गमनक्रियानियतपूर्ववृत्तित्वात् कारकत्वम्, तच्च गमनक्रियां प्रति कर्म अस्तीति कृत्वा ग्रामः कर्म कारकमित्युच्यते। एवं चैत्रः रथेन गच्छति इत्यत्र रथः अपि गमनक्रियानियतपूर्ववृत्तिः अस्ति, यतोहि गमनात् पूर्वं रथाभावे सति न हि रथेन गन्तुं शक्यते, तस्मात् रथस्यापि कारकत्वम्। तच्च गमनं प्रति करणमस्तीति कृत्वा रथः करणं कारकमित्युच्यते। एवं चैत्रः विप्राय धनं ददाति इत्यत्र विप्रः अपि दानक्रियायाः पूर्वमस्ति। यतो हि दानक्रियायाः पूर्वं विप्रस्याभावे सति न हि कोऽपि विप्राय किमपि दातुं शक्नोति। अतः दानक्रियानियतपूर्ववृत्तित्वात् दानक्रियां प्रति विप्रः अपि कारकमस्ति। तच्च दानं प्रति सम्प्रदानमपि अस्ति। अतः विप्रः सम्प्रदानं कारकमित्युच्यते। वृक्षात् पत्रं पतति इत्यत्र पतनक्रियायाः पूर्वमेव वृक्षः अस्ति, यतोहि पतनात् पूर्वं वृक्षाभावे सति न हि वृक्षात् पतनं भवितुमर्हति, अतः पतनक्रियानियतपूर्ववृत्तित्वात् वृक्षः पतनक्रियां प्रति कारकमस्ति। तच्च पतनं प्रति अपादानमस्ति। अतः वृक्षः अपादानं कारकमित्युच्यते। एवं चैत्रः स्थाल्यां तण्डुलं पचति इत्यत्र पाकक्रियायाः पूर्वं स्थाली अस्ति। यतोहि पाकात् पूर्वं स्थाल्यभावे नहि स्थाल्यां पाकः केनापि कर्तुं शक्यते। तस्मात् पाकक्रियानियतपूर्ववृत्तित्वात् स्थाली पाकक्रियां प्रति कारकमस्ति। सा च पाकं प्रति अधिकरणमस्ति। अतः स्थाली अधिकरणं कारकमिति उच्यते। परन्तु ब्राह्मणस्य पुत्रेण गम्यते इत्यत्र गमनं प्रति ब्राह्मणस्य पूर्ववृत्तित्वस्य सम्भवे अपि नियतपूर्ववृत्तित्वं नास्ति। यतोहि ब्राह्मणस्य मरणात् परमपि ब्राह्मणस्य पुत्रेण गन्तुं शक्यते। तस्मात् गमनादिक्रियां प्रति सम्बन्धस्य नियतपूर्ववृत्तित्वाभावेन सम्बन्धः न कारकमिति भावः। एवञ्च कारकाणि षट् इति सिद्धं भवति।

पुनः उक्तानुक्तभेदेन सर्वाणि अपि कारकाणि द्विविधानि भवन्ति। ततश्च कारकं द्वादशविधमिति सिद्धम्। तथाहि उक्तः कर्ता, अनुक्तः कर्ता। उक्तं कर्म अनुक्तं कर्म। उक्तं करणम् अनुक्तं करणम्। उक्तं सम्प्रदानम् अनुक्तं सम्प्रदानम्। उक्तम् अपादानम् अनुक्तम् अपादानम्। उक्तम् अधिकरणम् अनुक्तम् अधिकरणम्।

तथाहि कारिका -

**कर्ता कर्माथ करणं सम्प्रदानं तथैव च।**
**अपादानाधिकरणे कारकाणि षडेव हि।।**
**उक्तानुक्ततया द्वेधा कारकाणि भवन्ति षट्।**
**उक्ते तु प्रथमैव स्यादनुक्ते तु यथाक्रमम्।।**

अधः पट्टिकायाम् एतानि कारकाणि प्रदर्शितानि सन्ति।

| उक्तः कर्ता | अनुक्तः कर्ता |
|---|---|
| उक्तम् कर्म | अनुक्तम् कर्म |
| उक्तम् करणम् | अनुक्तम् करणम् |
| उक्तम् सम्प्रदानम् | अनुक्तम् सम्प्रदानम् |
| उक्तम् अपादानम् | अनुक्तम् अपादानम् |
| उक्तम् अधिकरणम् | अनुक्तम् अधिकरणम् |

## ☛ विभक्तिसामान्यपरिचयः

भगवान् पाणिनिः विभक्तिसंज्ञाविधायकं विभक्तिश्च इति सूत्रं प्रणीतवान्। तस्य सूत्रस्यार्थो भवति सुप् तिङ् च विभक्तिसंज्ञौ भवतः इति। तेन च सुपां तिङां च विभक्तिसंज्ञा अस्ति इति लभ्यते। तत्र सुप् इत्यनेन सु औ जस् इत्याद्येकविंशतेः प्रत्ययानां ग्रहणं भवति। तिङ् इत्यनेन च तिप् तस् झि इत्याद्यष्टादशानां प्रत्ययानां च ग्रहणं भवति। तेन एकविंशतिः सुप्प्रत्ययाः अष्टादश तिङ्प्रत्ययाश्च विभक्तिसंज्ञाः सन्ति इति फलितम्। अत्र च पाठे केवलं सुप्प्रत्ययानां विषये एव विचारः क्रियते, न तु तिङ्प्रत्ययानां विषये इति विज्ञेयम्। लोके सुप् -प्रत्ययाः एव विभक्तिप्रत्ययाः इति प्रसिद्धिः। परन्तु सा निर्मूला। तत्र सुप्प्रत्ययानां पुनः सप्तसु विभक्तिषु विभागः अस्ति। तत्र सु औ जस् इति प्रथमाविभक्तिः। अम् औट् शस् इति द्वितीयाविभक्तिः। टा भ्याम् भिस् इति तृतीयाविभक्तिः। ङे भ्याम् भ्यस् इति चतुर्थीविभक्तिः। ङसि भ्याम् भ्यस् इति पञ्चमीविभक्तिः। ङस् ओस् आम् इति षष्ठीविभक्तिः। ङि ओस् सुप् इति सप्तमीविभक्तिः।

तथाहि कारिका -

प्रथमा च द्वितीया च तृतीया च यथाक्रमम्।
चतुर्थी पञ्चमी षष्ठी सप्तमी चेति ताः क्रमात्।।

अयमेव विभागः पट्टिकायां सुबोधाय प्रदीयते अधः।

| **सुप् -प्रत्ययः** | **विभक्तिनाम** |
|---|---|
| सु औ जस् | प्रथमाविभक्तिः। |
| अम् औट् शस् | द्वितीयाविभक्तिः। |
| टा भ्यास् भिस् | तृतीयाविभक्तिः। |
| ङे भ्याम् भ्यस् | चतुर्थीविभक्तिः। |
| ङसि भ्याम् भ्यस् | पञ्चमीविभक्तिः। |
| ङस् ओस् आम् | षष्ठीविभक्तिः। |
| ङि ओस् सुप् | सप्तमीविभक्तिः। |

**विभक्तिभेदः** - पूर्वोक्ताः सप्तापि सुब्विभक्तयः कारकोपपदभेदेन द्विविधाः भवन्ति। कारकप्रथमाविभक्तिः उपपदप्रथमाविभक्तिः। कारकद्वितीयाविभक्तिः उपपदद्वितीयाविभक्तिः। कारकतृतीयाविभक्तिः उपपदतृतीयाविभक्तिः। कारकचतुर्थीविभक्तिः उपपदचतुर्थीविभक्तिः। कारकपञ्चमीविभक्तिः उपपदपञ्चमीविभक्तिः। कारकषष्ठीविभक्तिः उपपदषष्ठीविभक्तिः। कारकसप्तमीविभक्तिः उपपदसप्तमीविभक्तिः।

अयमेव विभागः पट्टिकायां सुबोधाय प्रदीयते अधः।

| **कारकविभक्तिः** | **उपपदविभक्तिः** |
|---|---|
| कारकप्रथमाविभक्तिः | उपपदप्रथमाविभक्तिः |
| कारकद्वितीयाविभक्तिः | उपपदद्वितीयाविभक्तिः |
| कारकतृतीयाविभक्तिः | उपपदतृतीयाविभक्तिः |
| कारकचतुर्थीविभक्तिः | उपपदचतुर्थीविभक्तिः |
| कारकपञ्चमीविभक्तिः | उपपदपञ्चमीविभक्तिः |
| कारकषष्ठीविभक्तिः | उपपदषष्ठीविभक्तिः |
| कारकसप्तमीविभक्तिः | उपपदसप्तमीविभक्तिः |

## ☛ धात्वर्थविचारः

तिङ्प्रत्ययाः यस्माद् भवन्ति सः धातुः कथ्यते। यथा भवति इति रूपे भू इत्यस्मात् शब्दात् तिप्प्रत्ययः जातः। अतः भू इति धातुः इत्युच्यते संस्कृतभाषायाम्। तत्र एतेषां धातूनां कः अर्थः इति

विषये शास्त्रेषु विचारः अस्ति। तत्र प्रत्येकं धातूनां द्वौ अर्थौ भवतः **फलं व्यापार**श्च। तद्यथा गच्छति इत्यादौ गम् इति धातुः अस्ति। तत्र अस्माभिः वाक्यप्रयोगकाले कदा गम् धातोः प्रयोगः क्रियते। यदा कश्चित् अन्यत् स्थानं प्राप्तुं चलनं करोति। छात्रः विद्यालयं गच्छति इत्यत्र छात्रः विद्यालयं प्राप्तुं चलनं करोति। अतः अस्माभिः उच्यते यद् छात्रः विद्यालयं गच्छति इति। एवञ्च अनेन इदं सिद्धं भवति यद् चलनरूपम् अर्थं बोधयितुं गम् धातोः प्रयोगः क्रियते। अतः चलनं गम् इति धातोः अर्थः। चलनं च एका क्रिया अस्ति। क्रियायाः कृते च व्याकरणशास्त्रे व्यापारशब्दस्य प्रयोगः भवति। तस्मादत्र वक्तुं शक्यते यद् चलनरूपः व्यापारः गम् -धातोः अर्थः। एवं चलनेन छात्रस्य विद्यालयेन सह संयोगः भवति। अतः चलनस्य फलं संयोगः भवति। तस्मात् संयोगरूपं फलम् अपि गम् इति धातोः अर्थः। तस्माद् अत्र वक्तुं शक्यते गम् इति धातोः चलनरूपव्यापारः संयोगरूपं फलं चेति अर्थः। एवमेव यदा कश्चित् जनः पाकशालायामस्ति। सः अग्निं ज्वालयति, तण्डुलादिपदार्थान् प्रक्षालयति, स्थालीं स्थापयति, तदा अस्माभिः उच्यते यद् अयं जनः तण्डुलान् पचति इति। एतेन इदं ज्ञातं भवति पाककरणाय यद् अग्निप्रज्वालनादिकं, तण्डुलादिपदार्थानां प्रक्षालनादिकं च क्रियते तस्यैव बोधाय अस्माभिः पच् इति धातोः प्रयोगः क्रियते। अतः अग्निप्रज्वालनादिकं पच् इति धातोः अर्थः। अग्निप्रज्वालनादिकं च क्रिया वर्तते, तेन अग्निप्रज्वालनादिव्यापारः पच् इति धातोः अर्थः। एवम् अग्निप्रज्वालनादिव्यापारेण पाकरूपं फलं जायते। तस्मात् पाकरूपं फलमपि पच् इति धातोः अर्थः। तेन इदं वक्तुं शक्यते यत् अग्निप्रज्वालनादिव्यापारः पाकरूपफलं च पच् इति धातोः अर्थः। एवमेव प्रत्येकं धातूनां कश्चित् व्यापारः किमपि फलं चार्थः भवति। तत्र प्रयोगानुसारं छात्रैः स्वयमेव विचारणीयम्। अत्र विस्तरभयात् न लिख्यते।

यदा धातूनाम् अर्थनिर्देशः क्रियते तदा फलानुकूलव्यापारः, संयोगानुकूलव्यापारः इति एवं वाक्यानि प्रयुज्यन्ते। तत्र अनुकूलशब्दस्य अर्थः जनकः इति। तदा फलजनकः व्यापारः इति अर्थः आयाति। एवं तत्र तत्र बोध्यम्।

## ☛ प्रातिपदिकार्थविचारः

यस्मात् स्वादिविभक्तयः भवन्ति तत् प्रातिपदिकम् इत्युच्यते। तस्य कः अर्थः इति चेद् वैयाकरणनये त्रयः अर्थाः भवन्ति। जातिः, व्यक्तिः, लिङ्गं च। यथा घट इति प्रातिपदिकमस्ति। तस्य घटत्वम् इति जातिः, घटः इति व्यक्तिः, पुंस्त्वम् इति लिङ्गं च अर्थाः भवन्ति। एवमेव पट इत्यादिप्रातिपदिकानामपि बोध्यम्। लक्ष्मी इति प्रातिपदिकस्य लक्ष्मीत्वम् इति जातिः, लक्ष्मी इति व्यक्तिः, स्त्रीत्वम् इति लिङ्गं चार्थः। एवमेव श्री इत्यादिप्रातिपदिकानामपि बोध्यम्। ज्ञान इति प्रातिपदिकस्य ज्ञानत्वम् इति जातिः, ज्ञानम् इति व्यक्तिः, नपुंसकत्वम् इति लिङ्गं चार्थाः भवन्ति। एवमेव धनम् इत्यादिप्रातिपदिकानामपि बोध्यम्। अत्रेदमपि ज्ञेयं यत् केषाञ्चित् प्रातिपदिकानां द्वे लिङ्गे भवतः। केषाञ्चित् प्रातिपदिकानां च त्रीणि लिङ्गानि अपि भवन्ति। केषाञ्चित् च लिङ्गमर्थः नैव भवति।

## प्रथमाविभक्तिविचारः

अत्र प्रथमाविभक्तिः कस्मिन् अर्थे भवति, केन सूत्रेण भवति इति विमृश्यते। तत्र पाणिनीयव्याकरणे प्रथमाविभक्तिविधायकं सूत्रद्वयं वर्तते। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा, सम्बोधने च इति। अत्र क्रमेणोभयोरपि व्याख्या क्रियते। तथाहि -

### [१९.१] प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा॥ (२.३.४६)

**सूत्रार्थः** - प्रातिपदिकार्थमात्रबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा भवति। प्रातिपदिकार्थलिङ्गमात्रबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा भवति। प्रातिपदिकार्थलिङ्गपरिमाणबोधकात् प्रातिपादिकात् परिमाणे प्रथमा भवति। संख्याबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा भवति।

**व्याख्या** - विधिसूत्रमिदम्। अत्र सूत्रे प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे इति सप्तम्यन्तं पदम्। प्रथमा इति प्रथमान्तं पदम्। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे इति समस्तं पदमस्ति। अत्र द्वन्द्वगर्भतत्पुरुषसमासो वर्तते। तथाहि प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं चेति प्रातिपदिकार्थलिङ्गपरिमाणवचनानि। प्रातिपदिकार्थलिङ्गपरिमाणवचनानि एव इति प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रम्। तस्मिन् प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे। तत्र द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायेन द्वन्द्वान्ते श्रूयमाणस्य मात्रशब्दस्य प्रत्येकं द्वन्द्वावयवैः सह सम्बन्धो भवति। ततश्च प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे च प्रथमाविभक्तिः भवतीति वाक्यं निष्पद्यते। अत्र लिङ्गमात्रे इत्यस्य स्थाने लिङ्गमात्राधिक्ये इत्यर्थो बोध्यः। कारणं न हि कुत्रापि लिङ्गमात्रस्य प्रतीतिः भवति। एवं परिमाणमात्रे इत्यस्य स्थाने अपि परिमाणमात्राधिक्ये इत्यर्थो बोध्यः। तत्र कस्मात् प्रथमा भवतीति जिज्ञासायामत्र प्रातिपदिकात् इति सम्बध्यते। सुपां प्रातिपदिकादेव विधानात्। एवञ्च प्रातिपदिकार्थमात्रे प्रातिपदिकात् प्रथमाविभक्तिः भवति। लिङ्गमात्राधिक्ये प्रातिपदिकात् प्रथमाविभक्तिः भवति। परिमाणमात्राधिक्ये प्रातिपदिकात् प्रथमाविभक्तिः भवति। वचनमात्रे प्रातिपदिकात् प्रथमाविभक्तिः भवति इति चत्वारि वाक्यानि प्रतिफलन्ति। अत्र क्रमेण समेषामधः विचारः प्रस्तूयते।

**प्रातिपदिकार्थमात्रे प्रातिपदिकात् प्रथमाविभक्तिः भवति** - अत्र प्रातिपदिकस्य अर्थः इति प्रातिपदिकार्थः इति षष्ठीतत्पुरुषसमासः। तन्मात्रे प्रातिपदिकात् प्रथमाविभक्तिः भवति। अर्थात् प्रातिपदिकार्थमात्रबोधकात् प्रातिपदिकात् प्रथमाविभक्तिः भवति। तत्र कस्मिन् अर्थे अनेन वचनेन प्रथमाविभक्तिः भवति इति चेद् अत्र अर्थविशेषस्य अनिर्देशेन स्वार्थे एव प्रथमा भवतीति प्रतिफलति। तेन प्रातिपदिकार्थमात्रबोधकात् प्रातिपदिकात् स्वार्थे प्रथमाविभक्तिः भवति इति निष्कृष्टार्थः समागच्छति। तत्र कः प्रातिपदिकार्थः इति चेत् मीमांसानये घटत्वादिजातिः एव प्रातिपादिकार्थः भवति। नैयायिकनये घटादिव्यक्तिः प्रातिपदिकार्थः भवति। वैयाकरणनये च घटत्वादिजातिः घटादिव्यक्तिः पुंस्त्वादिलिङ्गं च प्रातिपदिकार्थः भवतीति सिद्धान्तः। एवञ्च वैयाकरणमतानुसारं घटत्वादिजातेः घटादिव्यक्तेः पुंस्त्वादिलिङ्गस्य च प्रातिपदिकार्थपदेन ग्रहणं भवति। ततश्च प्रातिपदिकार्थमात्रबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा भवति इति कथनेन जातिव्यक्तिलिङ्गमात्रबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा भविष्यति

इति लभ्यते। एवञ्च लिङ्गबोधकात् प्रातिपदिकात् अपि प्रथमेन वाक्येनैव प्रथमा सिद्धा तर्हि लिङ्गग्रहणं किमर्थमिति चेद् व्यर्थम्। तच्च व्यर्थीभूय ज्ञापयति अस्मिन् सूत्रे प्रातिपदिकार्थपदेन नियतोपस्थितिकस्यैव अर्थस्य ग्रहणं नतु त्रयाणामिति। तथा चोक्तं भट्टोजिदीक्षितेन नियतोपस्थितिकः प्रातिपदिकार्थः। नियतोपस्थितिकः इत्यत्र बहुव्रीहिसमासो वर्तते। ततश्च नियता उपस्थितिः यस्य अर्थस्य सः नियतोपस्थितिकः अर्थः। अर्थात् यस्मात् प्रातिपदिकात् यस्य अर्थस्य नियमेन सर्वदा उपस्थितिः भवति, स एव अर्थः प्रातिपदिकार्थः भवति। यथा राम इति प्रातिपदिकात् रामत्वं, राम, पुंस्त्वम् इति त्रयाणामर्थानां नियमेन सर्वदा उपस्थितिः भवति। तस्मात् रामशब्दस्य रामत्वं, राम, पुंस्त्वम् इत्येते त्रयः अर्थाः प्रातिपदिकार्थाः भवन्ति। किन्तु तटशब्दस्य तटत्वं, तटः, पुंस्त्वं, स्त्रीत्वं, नपुंसकत्वम् इत्येते अर्थाः सन्ति। तेषु तट इति प्रातिपदिकात् तटत्वं, तटः इत्यनयोरेवार्थयोः नियमेनोपस्थितिः भवति। पुंस्त्वं, स्त्रीत्वं, नपुंसकत्वम् च इत्येतेषां तु नियमेन उपस्थितिः नैव भवति। तथाहि तटः इति विसर्गसमभिव्याहृतात् तट इति प्रातिपदिकात् तटत्वं, तटः, पुंस्त्वम्, इत्येतेषाम् अर्थानाम् उपस्थितिः भवति। तटी इति ङीप्प्रत्ययसमभिव्याहृतात् तट इति प्रातिपदिकात् तटत्वं, तटः, स्त्रीत्वम् च इत्येतेषाम् अर्थानाम् उपस्थितिः भवति। तटम् इति अम्प्रत्ययसमभिव्याहृतात् तट इति प्रातिपदिकात् तटत्वं, तटः, नपुंस्कत्वम् च इत्येतेषाम् अर्थानाम् उपस्थितिः भवति। एवञ्च सुस्पष्टमिदं यत् पुंस्त्वं, स्त्रीत्वं, नपुंस्कत्त्वम् च इत्येते अर्थाः नैव तटप्रातिपदिकात् नियतोपस्थिताः भवन्ति। एवञ्च तटशब्दस्य अर्थेषु मध्ये तटत्वं तटः च इत्यनयोरेव प्रातिपदिकार्थत्वं, तयोः नियतोपस्थितिकत्वात्। न तु पुंस्त्वं, स्त्रीत्वं, नपुंसकत्वम् च इत्येषामपि प्रातिपदिकार्थत्वम्। तेषाम् अनियतोपस्थितिकत्वात्। एवञ्चात्र कः अर्थः नियतो भवति कश्च अनियतः इति विषये तात्पर्यरूपेण वक्तुं शक्यते यत् नियतलिङ्गकानां शब्दानां जातिः व्यक्तिः लिङ्गं चेत्येते त्रयः अर्थाः नियताः भवन्ति। अतः नियतलिङ्गकेभ्यः शब्देभ्यः अनेनैव वाक्येन प्रथमा सिध्यति। अनियतलिङ्गानां शुक्लतटादिशब्दानां तु द्वौ एव अर्थौ नियतौ जातिः व्यक्तिश्चेति किन्तु लिङ्गरूपः अर्थः तु अनियतः। तस्माद् अनियतलिङ्गानां शुक्लादिशब्दानां वाच्यं लिङ्गं न प्रातिपदिकार्थः। एवञ्च प्रातिपदिकार्थमात्रे प्रथमा भवति इति वाक्येन नियतलिङ्गेभ्यः प्रातिपदिकेभ्यः रामकृष्णादिशब्देभ्यः, अलिङ्गेभ्यः अव्ययेभ्यः एव प्रथमा भविष्यति, न तु अनियतलिङ्गेभ्यः तटादिशब्देभ्यः प्रथमा। तस्मात् तेभ्यः प्रथमाविधानाय द्वितीयं वाक्यमारब्धम् इति भावः।

**लिङ्गमात्राधिक्ये प्रातिपदिकात् प्रथमाविभक्तिः भवति** - लिङ्गमात्राधिक्ये प्रातिपदिकात् प्रथमाविभक्तिः भवति। तत्र आधिक्यं सापेक्षं भवतीति कृत्वा आधिक्यमिति श्रुत्वैव किमपेक्षया आधिक्यं ग्राह्यमिति जिज्ञासा भवति। अतः अत्र किमपेक्षया आधिक्यं ग्राह्यमिति चेद् उपस्थितत्वात् प्रातिपदिकार्थापेक्षया एवात्र आधिक्यं स्वीक्रियते। ततश्च प्रातिपदिकार्थलिङ्गमात्रबोधकात् प्रातिपदिकात् प्रथमा भविष्यति इत्यर्थो भवति। तत्र कस्मिन् अर्थे अनेन वचनेन प्रथमाविभक्तिः भवति इति चेद् अत्र अर्थविशेषस्य अनिर्देशेन स्वार्थे एव प्रथमा भवतीति प्रतिफलति। एवञ्चात्र वक्तुं शक्यते यद् अनियतोपस्थितिकलिङ्गबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा भवतीति भावः। यथा तटः तटी तटम्। अत्र तटशब्दः नियतोपस्थितिकयोः तटतटत्वयोः बोधको वर्तते अपि च अनियतलिङ्गस्यापि बोधको वर्तते, एवञ्च अनियतोपस्थितिकलिङ्गबोधकात् तट इति प्रातिपदिकात् अनेन द्वितीयवाक्येन प्रथमा

सिध्यति। अत्र प्रथमेन वाक्येन तु प्रथमा भवितुं नार्हति तटशब्दस्य नियतोपस्थितिकार्थमात्रबोधकत्वाभावात्। एवमेव शुक्लः शुक्ला शुक्लम् इत्यादावपि बोध्यम्। एवञ्चास्य वाक्यस्य उदाहरणानां विषये वक्तुं शक्यते यत् अनियतलिङ्गाः अर्थात् द्विलिङ्गाः त्रिलिङ्गाश्च शब्दाः वाक्यस्योदाहरणानि भवन्ति।

**परिमाणमात्रे प्रातिपदिकात् प्रथमाविभक्तिः भवति** - परिमाणबोधकात् प्रातिपदिकात् परिमाणार्थे प्रथमाविभक्तिः भवति इति तृतीयवाक्यस्यार्थो वर्तते। यथा द्रोणो व्रीहिः इत्यत्र परिमाणबोधकं प्रातिपदिकमस्ति द्रोण इति। तस्मात् परिमाणे अर्थे प्रथमाविभक्तिः भवति। व्रीहिः इत्यत्र प्रथमेन वाक्येन प्रथमाविभक्तिः भवति। ततश्च द्रोण सु व्रीहि सु इत्यत्र द्रोणपदस्यार्थो भवति द्रोण इति तदुत्तरसुविभक्तेरर्थो भवति परिमाण इति। द्रोण इति परिमाणविशेषो वर्तते। तस्मात् सामान्यविशेषयोः अभेदः इति नियमेन प्रकृत्यर्थस्य द्रोणस्य प्रत्ययार्थे परिमाणे अभेदेन सम्बन्धेन अन्वयः सिध्यति। ततश्च द्रोणः इत्यस्य द्रोणाभिन्नपरिमाणम् इत्यर्थो भवति। सुप्रत्ययार्थस्य परिमाणस्य च व्रीहौ परिच्छिन्नत्वसम्बन्धेन अन्वयो भवति। ततश्च द्रोणो व्रीहिः इत्यस्य वाक्यस्यार्थो भवति - द्रोणाभिन्नपरिमाणपरिच्छिन्नव्रीहिः। अथ द्रोणः व्रीहिः इत्यत्र परिमाणबोधकद्रोणशब्दस्य द्रोणत्वं, द्रोणः, परिमाणत्वं, पुंस्त्वम् इत्येते अर्थाः सन्ति। ते च द्रोण इति प्रातिपदिके उच्चारिते नियमेन सर्वदा उपस्थिताः भवन्ति। तस्मात् द्रोणत्वम्, द्रोणः, परिमाणत्वम्, पुंस्त्वम् च इत्येते अर्थाः प्रातिपदिकार्थाः एव सन्ति। एवञ्च परिमाणबोधकात् द्रोणादिशब्दात् प्रातिपदिकार्थमात्रे प्रथमा भवति इति प्रथमेन वाक्येनैव प्रथमा सिद्धा। किमर्थं सूत्रे परिमाणग्रहणं कृतमिति चेद्। शृणु - नीलः घटः इत्यादौ उभाभ्यां शब्दाभ्यां प्रातिपदिकार्थे प्रथमा अस्ति। एवञ्च एकस्य प्रातिपदिकार्थस्य द्वितीये प्रातिपदिकार्थे अभेदसम्बन्धेन अन्वयः भवति, नामार्थयोरभेदान्वयः इति नियमस्य बलेन। ततश्च नील इति प्रादिपदिकार्थस्य घट इति प्रातिपदिकार्थे अभेदेनान्वयः भवति, ततश्च नीलः घटः इत्यस्य नीलाभिन्नः घटः इत्यर्थो भवति। तथैव द्रोणः व्रीहिः, इत्यत्र व्रीहिशब्दात् तु प्रातिपदिकार्थे प्रथमा अस्त्येव, द्रोणशब्दात् अपि प्रातिपदिकार्थे प्रथमास्वीकारे, द्रोणः व्रीहिः इत्यत्रापि प्रोक्तनियमबलेन नीलः घटः इतिवत् द्रोणप्रातिपदिकार्थस्य व्रीहिप्रातिपदिकार्थे अभेदेनान्वयः स्यात् ततश्च द्रोणः व्रीहिः इत्यस्य द्रोणाभिन्नः व्रीहिः इत्यर्थः स्यात्। स च नेष्टः। अतः परिमाणबोधकेभ्यः प्रातिपदिकेभ्यः परिमाणे अर्थे प्रथमा स्यात्। तदर्थं परिमाणग्रहणमिति भावः।

**वचनमात्रे प्रथमाविभक्तिः भवति** - संख्याबोधकात् प्रातिपदिकात् स्वार्थे प्रथमाविभक्तिः भवति। अस्य वाक्यस्य उदाहरणानि तावत् एकः द्वौ बहवः। अथ अस्य वाक्यस्य का आवश्यकता वर्तते। यतोहि - एकशब्दस्य एकत्वम् इत्यर्थस्तु नियतः वर्तते। एवं द्विशब्दस्य द्वित्वरूपः अर्थः नियतः अस्ति। बहुशब्दस्य च बहुत्वार्थः नियतः अस्ति। तस्मात् प्रातिपदिकार्थमात्रे प्रथमा इति अनेनैव एकादिशब्देभ्यः प्रथमा भवितुमर्हति। यदि चोच्यते एते अपि अनियतलिङ्गाः शब्दाः। तस्मात् प्रथमेन वाक्येन प्रथमा भवितुं नार्हति इति चेद् लिङ्गमात्राधिक्ये प्रथमा भवति इति अनेन वाक्येन प्रथमा भविष्यति। तस्मात् सूत्रे वचनग्रहणं किमर्थमिति प्रश्नः। अत्रोच्यते - अस्ति तावत् न्यायः उक्तार्थानामप्रयोगः। अस्य न्यायस्य अर्थस्तावत् उक्तः अर्थः येषां ते उक्तार्थाः शब्दाः इति। तेषाम् अप्रयोगः। अर्थात् उक्तार्थानां शब्दानां

प्रयोगो न कर्तव्य इति भावः। एवञ्च एकशब्देन एकत्वरूपः अर्थः उक्तः। स एव च सुप्रत्ययस्यार्थो वर्तते। एवञ्च एकशब्देनैव सुप्रत्ययस्यार्थः उक्तः। ततश्च सुप्रत्ययः उक्तार्थः वर्तते। तस्मात् तस्य प्रयोगः न स्यात्। एवञ्च एकशब्दात् एकवचनं न स्यात्। एवं द्विशब्दस्यार्थः द्वित्वम्। तदेव च औ इति द्विवचनस्यापि वर्तते। एवञ्च द्विशब्देन द्विवचनस्य द्वित्वरूपः अर्थः उक्तः, अतः द्विवचनम् उक्तार्थः। अतः द्विशब्दात् द्विवचनं न स्यात्। एवं बहुशब्दस्यार्थः बहुत्वम्। स एव चार्थः जस् इति बहुवचनस्य। ततश्च बहुशब्देन बहुवचनस्यार्थः बहुत्वम् उक्तः। अतः बहुवचनम् उक्तार्थः। ततश्च बहुशब्दात् बहुवचनं न स्यात्। अतः एतेभ्यः शब्देभ्यः प्रथमा सिद्ध्यर्थं वचनग्रहणमिति भावः। एवञ्च वचनग्रहणबलादत्र उक्तार्थानामप्रयोगः इति न्यायस्य प्रवृत्तिः नैव भवतीति कृत्वा एकशब्दात् एकवचनं, द्विशब्दात् द्विवचनं, बहुशब्दात् बहुवचनं च सिध्यन्ति।

**निष्कर्षः** - अत्र संक्षेपेण सूत्रस्यास्य निष्कर्षः वक्तुं शक्यते यत्सूत्रे चत्वारि वाक्यानि भवन्ति। तत्र प्रथमं वाक्यं भवति प्रातिपदिकार्थमात्रे प्रथमा भवति। अस्य चार्थो भवति नियतोपस्थितिकार्थमात्रबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा भवति। अस्य च वाक्यस्य अलिङ्गाः अव्ययाः नियतलिङ्गाः रामादिशब्दाः च उदाहरणानि भवन्ति। द्वितीयं वाक्यं भवति लिङ्गमात्राधिक्ये प्रथमा भवति। अस्य चार्थो भवति नियतोपस्थितिकलिङ्गमात्रबोधकात् प्रातिपदिकात् स्वार्थे प्रथमा स्यात्। अस्य च वाक्यस्य अनियतलिङ्गाः शब्दाः उदाहरणानि भवन्ति। तृतीयं वाक्यं भवति परिमाणमात्रे प्रथमा भवति। अस्य च वाक्यस्यार्थो भवति नियतोपस्थितिकलिङ्गपरिमाणमात्रबोधकात् प्रातिपदिकात् परिमाणार्थे प्रथमाविभक्तिः स्याद्। अस्य चोदाहरणानि परिमाणबोधकशाब्दाः भवन्ति। चतुर्थं वाक्यं भवति वचनमात्रे प्रथमा भवति। अस्य च वाक्यस्यार्थो भवति संख्याबोधकात् प्रातिपदिकात् स्वार्थे प्रथमाविभक्तिः स्यात्। अस्य वाक्यस्य उदाहरणानि संख्याबोधकाः एकः द्वौ बहवः इत्यादिशब्दाः भवन्ति।

## [१९.२] सम्बोधने च॥ (२.३.४७)

**सूत्रार्थः** - प्रातिपदिकात् सम्बोधने अर्थे प्रथमा भवति।

**व्याख्या** - विधिसूत्रमिदम्। सम्बोधने इति सप्तम्यन्तं पदम्, च इति अव्ययपदम्, प्रथमा इति प्रथमान्तं पदमत्र अनुवर्तते। ततश्च सूत्रार्थो भवति सम्बोधने विद्यमानात् प्रातिपदिकात् प्रथमा विभक्तिः भवति। अथवा प्रातिपदिकात् सम्बोधने अर्थे प्रथमा विभक्तिः भवति। तत्र किं नाम सम्बोधनमिति चेद् अभिमुखीकृत्य ज्ञापनम्। अर्थात् यदा कश्चित् जनः यं कमपि जनं स्वाभिमुखीकृत्य किमपि बोधयितुम् इच्छति तदानीमेव सम्बोधनविभक्तेः प्रयोगो भवति। यथा कश्चित् भक्तः वदति - भो राम मां पाहि इति। अत्र अन्यत्र प्रवृत्तं रामं स्वाभिमुखीकृत्य स्वरक्षणं ज्ञापयति भक्तः। अतः रामस्य कृते तेन सम्बोधनं कृतमिति। ततश्चात्र सम्बोधने प्रथमा जाता। एवमन्यत्रापि बोध्यम्।

तथाहि पद्यानि -

**सम्बोधनविशेषार्थे प्रथमा नामतो भवेत्।**
**हे राम हे हरे विष्णो सम्बोधनपदं ततः।।**
**सम्बोधनेऽपि प्रथमा विभक्तिर्भवति ध्रुवम्।**
**यथा हे राम हे रामौ हे रामाः इत्यनुक्रमात्।।**
**हे शब्देन विनापि स्यात् क्वचिदन्तेऽपि हे भवेत्।**
**यथा राम प्रसीद त्वं राम हे त्वां भजाम्यहम्।।**

निम्नपद्ये सम्बोधनविभक्तिप्रयोगप्राचुर्यम् अस्ति -

**अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे।**
**स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु।।**

## ☛ उक्तानुक्तविचारः

प्रथमाविभक्तिः कुत्र भवति इति विषये सामान्यनियमः अस्ति यद् उक्ते अर्थे प्रथमाविभक्तिः भवति। अर्थात् उक्ते कर्तरि प्रथमाविभक्तिः भवति। उक्ते कर्मणि प्रथमा विभक्तिः भवति। उक्ते करणे प्रथमाविभक्तिः भवति। उक्ते सम्प्रदाने प्रथमाविभक्तिः भवति। उक्ते अपादाने प्रथमाविभक्तिः भवति। उक्ते अधिकरणे प्रथमाविभक्तिः भवति। उक्ते सम्बन्धे च प्रथमाविभक्तिः भवति।

उक्तः अभिहितः एतौ द्वौ शब्दौ समानार्थकौ। एवम् अनुक्तः अनभिहितः एतौ द्वौ शब्दौ च समानार्थकौ स्तः। तत्र विभक्तिविधानकाले उक्तानुक्तज्ञानं परमावश्यकं भवति। तस्मादत्र सामान्यरूपेण कः उक्तः भवति, कश्च अनुक्तः भवति इति प्रतिपाद्यते। पुनः अत्रेदमपि बोध्यं यत् उक्तानुक्तस्य व्यवस्था तिङ्प्रत्ययैः कृत्प्रत्ययैः समासेन तद्धितेन च भवति। परन्तु प्रकृते तिङ्प्रत्ययैः कृत्प्रत्ययैश्च कथम् उक्तानुक्तव्यवस्था भवति इति प्रतिपाद्यते। समासेन तद्धितेन च या उक्तानुक्तव्यवस्था भवति सा अत्र नैव प्रतिपाद्यते।

## ☛ तिङ्प्रत्ययद्वारा उक्तानुक्तव्यवस्थाविचारः

यस्मिन् अर्थे कश्चित् तिङ्प्रत्ययः भवति सः अर्थः उक्तः भवति। यस्मिन् च अर्थे कश्चित् तिङ्प्रत्ययः न भवति सः अर्थः अनुक्तः भवति। यथा "राजा गङ्गातीरे गोष्ठात् धेनुं हस्तेन विप्राय ददाति" इत्यत्र दा इति धातोः कर्तरि अर्थे तिङ्प्रत्ययः अस्ति। अतः कर्ता उक्तः अस्ति। अतः कर्तरि प्रथमाविभक्तिः अस्ति। परन्तु कर्म करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम् च अनुक्तम् अस्ति। अतः कर्मणि द्वितीयाविभक्तिः करणे तृतीयाविभक्तिः सम्प्रदाने चतुर्थीविभक्तिः अपादाने पञ्चमीविभक्तिः अधिकरणे सप्तमीविभक्तिः च भवति। एवमेव "राज्ञा गङ्गातीरे गोष्ठात् धेनुः हस्तेन विप्राय दीयते" इत्यत्र दाधातोः कर्मणि अर्थे तिङ्प्रत्ययः अस्ति। अतः कर्म उक्तम् अस्ति किन्तु कर्ता करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम् च अनुक्तम् अस्ति। तेन च उक्ते कर्मणि प्रथमाविभक्तिः भवति। अनुक्ते कर्तरि

तृतीयाविभक्तिः भवति। अनुक्ते करणे तृतीयाविभक्तिः। अनुक्ते सम्प्रदाने चतुर्थीविभक्तिः। अनुक्ते अपादाने पञ्चमीविभक्तिः। अनुक्ते अधिकरणे सप्तमीविभक्तिः भवति। चैत्रेण सुप्यते इत्यत्र च स्वप् इति धातोः भावे अर्थे तिङ्प्रत्ययः अस्ति। अतः भावः उक्तः अस्ति। कर्ता अनुक्तः अस्ति। एवञ्च अनुक्ते कर्तरि तृतीयाविभक्तिः भवति। एवञ्चात्र तिङ्प्रत्ययानां विषये वक्तुं शक्यते यत् तिङ्प्रत्ययैः कर्ता उक्तः भवति। कर्म उक्तं भवति भावश्च उक्तः भवति। अत एव यदा कर्ता उक्तः तदा इदं कर्तृवाच्यमिति व्यवहारः। यदा कर्म उक्तं भवति तदा इदं कर्मवाच्यम् इति व्यवहारः। यदा भावः उक्तः भवति तदा इदं भाववाच्यमिति व्यवहारः।

तथाहि कारिका -

**कर्तरि प्रथमा यत्र द्वितीयाऽथ च कर्मणि।**
**कर्तृ वाच्यं भवेत् तत्तु क्रिया कर्त्रनुसारिणी।।**

**अन्वयार्थः** - यत्र प्रयोगे कर्तरि प्रथमा दृश्यते, कर्मणि च द्वितीया दृश्यते, क्रियायाः वचनं पुरुषश्च कर्त्रनुसारि भवति तत् कर्तृ (तिङा) वाच्यम्।

**कर्मणि प्रथमा यत्र तृतीयाऽथ च कर्तरि।**
**कर्म वाच्यं भवेत् तत्तु क्रिया कर्मानुसारिणी।।**

**अन्वयार्थः** - यत्र प्रयोगे कर्मणि प्रथमा दृश्यते, कर्तरि च तृतीया दृश्यते, क्रियायाः वचनं पुरुषश्च कर्मानुसारि भवति तत् कर्म (तिङा) वाच्यम्।

**भाववाच्ये क्रियां वक्ति न कर्तारं न कर्म च।**
**तत्र कर्ता तृतीयायां क्रिया भावानुसारिणी।।**

**अन्वयार्थः** - यत्र प्रयोगे तिङ् भावं वक्ति, न कर्तारं न वा कर्म च वक्ति, तत्र तिङा भावः उक्तः अस्ति। एवञ्च कर्तरि तृतीया दृश्यते। क्रियायाः वचनं एकवचनमेव पुरुषश्च प्रथमपुरुष एव भवति। तदेव जनैः भाववाच्यमिति कथ्यते।

(इदमत्र अवधेयं यत् कर्तृवाच्यः कर्मवाच्य भाववाच्य इति एते शब्दाः समासेन न सिद्ध्यन्ति। तथापि साम्प्रतिकाः भ्रमाद् एतेषाम् शब्दानां बाहुल्येन प्रयोगं कुर्वन्ति। तत्स्थले कर्तरि प्रयोगः, उक्तकर्तरि प्रयोगः इत्यादिरूपेण समाधेयः।)

## ☛ कृत्प्रत्ययद्वारा उक्तानुक्तव्यवस्थाविचारः

यस्मिन् अर्थे यदा कश्चित् कृत्प्रत्ययः भवति तदा सः अर्थः उक्तः भवति। यस्मिन् च अर्थे यदा कश्चित् कृत्प्रत्ययः न भवति तदा सः अर्थः अनुक्तः भवति। यथा "राजा गङ्गातीरे गोष्ठात् धेनुं हस्तेन विप्राय दत्तवान्" इत्यत्र दा इति धातोः कर्तरि अर्थे क्तवतुप्रत्ययः अस्ति। अतः कर्ता उक्तः। कर्म, करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम् च अनुक्तम्। अतः उक्ते कर्तरि तु प्रथमाविभक्तिः अस्ति। किन्तु कर्मणि द्वितीयाविभक्तिः करणे तृतीयाविभक्तिः सम्प्रदाने चतुर्थीविभक्तिः अपादाने पञ्चमीविभक्तिः अधिकरणे सप्तमीविभक्तिः च भवति। एवमेव "राज्ञा गङ्गातीरे गोष्ठात् धेनुः हस्तेन विप्राय दत्ता" इत्यत्र दाधातोः कर्मणि अर्थे क्तप्रत्ययः अस्ति। अतः कर्म उक्तम् अस्ति किन्तु कर्ता, करणम्, सम्प्रदानम्,

अपादानम्, अधिकरणम् च अनुक्तम् अस्ति। तेन च उक्ते कर्मणि प्रथमाविभक्तिः भवति, अनुक्ते कर्तरि तृतीयाविभक्तिः भवति, अनुक्ते करणे तृतीयाविभक्तिः, अनुक्ते सम्प्रदाने चतुर्थीविभक्तिः, अनुक्ते अपादाने पञ्चमीविभक्तिः, अनुक्ते अधिकरणे सप्तमीविभक्तिः च भवति। एवं छात्रैः गतम् इत्यत्र भावे अर्थे क्तप्रत्ययः अस्ति। अतः भावस्तु उक्तः। कर्ता अनुक्तः अस्ति। तेन अनुक्ते कर्तरि तृतीयाविभक्तिः भवति। कृत् -प्रत्ययैः करणादयः अपि अर्था उक्ता भवन्ति। परन्तु तदत्र नोक्तम्। तत् कृत्प्रकरणे द्रष्टव्यम्।

## पाठगतप्रश्नाः

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१. कारकस्य किं लक्षणम्।

२. कति कारकाणि भवन्ति।

३. सुब्विभक्तयः कति सन्ति।

४. धातोः कति अर्थाः भवन्ति। के च ते।

५. प्रातिपदिकार्थलिङ्गपरिमाणवचनानि इत्यत्र कः समासः अस्ति।

६. प्रातिपदिकार्थः कः।

७. प्रातिपदिकार्थमात्रस्य उदाहरणं किम्।

८. लिङ्गाधिक्यस्य उदाहरणं किम्।

९. परिमाणमात्रस्य उदाहरणं किम्।

१०. वचनमात्रस्य उदाहरणं किम्।

११. सम्बोधने च इति सूत्रस्योदाहरणं किम्।

## पाठसारः

अत्र पाठे कारकस्य सामान्यलक्षणं प्रतिपादितम्। तच्च क्रियाजनकत्वम्। तानि च कारकाणि षट् भवन्ति। कर्ता कर्म करणम् सम्प्रदानम् अपादानम् अधिकरणम् चेति। पुनः उक्तानुक्तभेदन द्वादशभेदाः वर्णिताः। तत्र उक्ते कारकमात्रे प्रथमाविभक्तिः भवति इति सर्वदैव ज्ञेयम्। समेषां धातूनां द्वौ अर्थौ भवतः फलं व्यापारश्च। प्रत्येकं प्रातिपदिकानां त्रयः अर्थाः भवन्ति - जातिः व्यक्तिः लिङ्गं च। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रे प्रातिपदिकार्थपदेन नियतोपस्थितकस्य अर्थस्य ग्रहणं कर्तव्यम्। सम्बोधनं च अभिमुखीकृत्य ज्ञापनम् इति पाठसारः।

## योग्यतावर्धनम्

अधः कानिचन अत्यन्तं सुबोधानि रम्याणि पद्यानि प्रदत्तानि सन्ति। तानि च विरलानि सन्ति। न एकस्मिन् स्थाने झटिति लभ्यन्ते। बहुभ्यः ग्रन्थान्तरेभ्यः आकृष्य प्रदत्तानि सन्ति। तानि ध्यानेन पठनीयानि। तेषु एकैकस्य शब्दस्य सर्वासु विभक्तिषु प्रयोगः दृश्यते। यथा प्रथमपद्ये रामशब्दस्य सप्तसु विभक्तिषु प्रयोगः अस्ति। अतः सर्वेषु श्लोकेषु तथा पदानि अन्विष्य पृथक्कृत्य लेख्यानि। तेषां च विभक्तिनिर्णयः कर्तव्यः। एवञ्च किम् किम् कारकम् केन केन पद्येन ज्ञायते तदपि यथाशक्ति बोद्धव्यम्। एवञ्च तत् तत् कारकम् उक्तं वा अनुक्तं वा इति अवधेयम्।

**रामो राजमणिः सदा विजयते रामं रमेशं भजे**
**रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।**
**रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहम्**
**रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर।।**

**श्रीरामः शरणं समस्तजगतां रामं विना का गती**
**रामेण प्रतिहन्यते कलिमलं रामाय कार्यं नमः।**
**रामात् त्रस्यति कालभीमभुजगो रामस्य सर्वं वशे**
**रामे भक्तिरखण्डिता भवतु मे राम त्वमेवाश्रयः।।**

**कृष्णो रक्षतु मां चराचरगुरुः कृष्णं नमस्याम्यहम्**
**कृष्णेनामरशत्रवो विनिहताः कृष्णाय तस्मै नमः।**
**कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहम्**
**कृष्णे भक्तिरचञ्चलाऽस्तु भगवन् हे कृष्ण तुभ्यं नमः।।**

**रामो मेऽभिहितं करोतु सततं रामं भजे सादरम्**
**रामेणापहतं समस्तदुरितं रामाय दत्तं धनम्।**
**रामान्मुक्तिरभीप्सिता सरभसं रामस्य दासोऽस्म्यहम्**
**रामे रञ्जतु मे मनः करुणया भो राम मां पालय।।**

**श्रीमाता शरणं समस्तजगतां श्रीमातरं संनुमः।**
**श्रीमात्रा प्रतिहन्यते कलिमलं मात्रे नमः कोटिशः।**
**मातुस्त्रस्यति कालभीमभुजगो मातुश्च सर्वं वशे**
**भक्तिर्मातरि मे भवेदविचला मातस्त्वमेवाश्रयः।।**

गुरुरेव गतिः गुरुमेव भजे
गुरुणैव सहास्मि नमो गुरवे।
न गुरोः परमं शिशुरस्मि गुरोः
मतिरस्तु गुरौ मम पाहि गुरो।।

वृक्षस्तिष्ठति कानने कुसुमिते वृक्षं लताः संश्रिताः।
वृक्षेणाभिहता गजा निपतिता वृक्षाय देयं जलम्।।
वृक्षादानय मञ्जरीं कुसुमितां वृक्षस्य शाखोन्नता।
वृक्षे नीडमिदं कृतं शकुनिना हे वृक्ष किं पश्यसि।।

वीरः सर्वसुरासुरेन्द्रमहितो वीरं बुधाः संश्रिता
वीरेणाभिहतः स्वकर्मनिचयो वीराय नित्यं नमः।।
वीरात्तीर्थमिदं प्रवृत्तमतुलं वीरस्य घोरं तपः
वीरे श्रीधृतिकीर्तिकान्तिनिचयः श्रीवीर भद्रं दिश।।

## पाठान्तप्रश्नाः

अत्र स्वाध्यायपरीक्षोपयोगिनः प्रश्नाः प्रदीयन्ते।

१. कारकसामान्यस्वरूपं प्रतिपादयन्तु।
२. कारकस्वरूपं तद्भेदान् च वर्णयत।
३. विभक्तिस्वरूपं विभक्तिभेदान् च प्रतिपादयत।
४. धात्वर्थं प्रातिपदिकार्थं च प्रतिपादयन्तु।
५. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रस्य व्याख्या कार्या।
६. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रे लिङ्गग्रहणस्य फलं लिखन्तु।
७. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रे परिमाणग्रहणस्य फलं लिखन्तु।
८. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रे वचनग्रहणस्य फलं लिखन्तु।
९. सम्बोधने च इति सूत्रस्य व्याख्या कार्या।
१०. उक्तानुक्तव्यवस्था कथं भवति इति प्रतिपादयत।

## पाठगतप्रश्नोत्तराणि -

१. क्रियाजनकत्वं कारकत्वम्।

२. षट् कारकाणि भवन्ति।

३. सप्त सुब्विभक्तयः सन्ति।

४. प्रत्येकं धातूनां द्वौ अर्थौ भवतः। व्यापारः फलं च।

५. इतरेतरयोगद्वन्द्वसमासः अस्ति।

६. नियतोपस्थितिकः प्रातिपदिकार्थः।

७. रामः श्रीः ज्ञानम् इत्यादयः नियतलिङ्गाः शब्दाः।

८. तटः तटी तटम् इत्यादयः अनियतलिङ्गाः शब्दाः।

९. द्रोणो व्रीहिः इति।

१०. एकः द्वौ बहवः।

११. हे राम।

।।इति नवदशः पाठः।।

# २०

# द्वितीयाकारकविभक्तिः-१

## प्रस्तावना

पूर्वपाठे अस्माभिः पठितं यत् षट् कारकाणि भवन्ति। तेषु षट्सु कर्मकारकमपि अन्यतमं कारकम्। तस्य स्वरूपबोधनाय भगवता पाणिनिना अनेकानि सूत्राणि विरचितानि। तेषु कर्तुरीप्सिततमं कर्म, तथायुक्तं चानीप्सितम्, अधिशीङ्स्थासां कर्म, उपान्वध्याङ्वसः इत्येतानि सूत्राणि अपि सन्ति। तेषामत्र व्याख्यानं प्रस्तूयते। अपि च सप्त सुब्विभक्तयः भवन्ति। तत्र द्वितीयाविभक्तिः कुत्र भवति केन च सूत्रेण भवति इति प्रस्तूयते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- कर्मसंज्ञा कस्य भवति इति बोद्धुं शक्नुयात्।
- वाक्येषु किम् कर्मकारकम् इति ज्ञातुम् प्रभवेत्।
- वाक्यरचनाकाले कर्मणि द्वितीयायाः सम्यग् व्यवहारं कर्तुम् पारयेद्।
- सूत्रस्य अर्थः कथं क्रियते इति जानीयात्।
- विशेषस्थले आधारस्यापि कर्म कथं भवति इति जानीयात्।
- सूत्रार्थस्य उदाहरणे समन्वयं बुद्ध्वा स्वयं समन्वयं कर्तुं पारयेत्।

## [२०.१] कर्तुरीप्सिततमं कर्म॥ (१.४.४९)

**सूत्रार्थः** - कर्तृवृत्तिव्यापारजन्यफलाश्रयः कारकसंज्ञः सन् कर्मसंज्ञः भवति।

**सूत्रावतरणम्** - छात्रः ग्रामं गच्छति, छात्रः ग्रामं त्यजति, बालः तण्डुलं खादति, इत्यादिषु प्रयोगेषु ग्रामः, तण्डुलः च कर्म अस्ति इति व्यवहारः भवति। परन्तु कथं ग्रामः तण्डुलः च कर्म अस्ति। केन च ग्रामस्य तण्डुलस्य च कर्मसंज्ञा कृता इति एवं प्रश्नः जनानां मनसि जायते। तदा तस्य प्रश्नस्य समाधानाय भगवान् पाणिनिः कर्मसंज्ञाविधायकं सूत्रं रचितवान्। तच्च सूत्रं कर्तुरीप्सिततमं कर्म इति। तस्य अत्र व्याख्यानं क्रियते।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां कर्मसंज्ञां च करोति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। कर्तुः इति षष्ठ्येकवचनान्तं पदम्। ईप्सिततमम् इति प्रथमैकवचनान्तं पदम्। कर्म इति

प्रथमैकवचनान्तं पदम्। कारकम् इति अधिकारः अत्र आगच्छति। ईप्सिततमम् इत्यस्य व्यापारजन्यफलाश्रयः इत्यर्थः।

**सूत्रार्थविचारः - कर्तुः ईप्सिततमं कारकसंज्ञं सत् कर्मसंज्ञं भवति** इति वाक्ययोजना। ईप्सिततमम् इत्यस्य व्यापारजन्यफलाश्रयः इत्यर्थः। अत्र व्यापारः कर्तृवृत्तिः। एवं वृत्तित्वं व्यापारे। अतः कर्तुः व्यापारे वृत्तित्वसम्बन्धेनान्वयः भवति। ततश्च सूत्रार्थो भवति कर्तृवृत्तिव्यापारजन्यफलाश्रयः कारकसंज्ञः सन् कर्मसंज्ञः भवति।

**उदाहरणम् -** छात्रः ग्रामं गच्छति। छात्रः ग्रामं त्यजति। बालः तण्डुलं खादति।

**सूत्रार्थसमन्वयः -** छात्रः ग्रामं गच्छति। छात्रः गृहं त्यजति। बालः तण्डुलं खादति। इति त्रिषु उदाहरणेषु सूत्रार्थस्य समन्वयः क्रियते।

**छात्रः ग्रामं गच्छति।** अत्र वाक्ये ग्रामः कर्म अस्ति। तत्रैव अर्थस्य समन्वयः क्रियते। तत्र समन्वयात् पूर्वम् इदं प्रथमं ज्ञेयं यत् प्रत्येकं धातूनाम् अर्थद्वयं भवति फलं व्यापारश्च। अपि च व्यापारेण फलं जन्यमपि भवति। व्यापारः च कर्तृवृत्तिः भवति। एवञ्च प्रकृतवाक्ये गम् इति धातुः अस्ति। तस्य अर्थः अस्ति - गमनरूपव्यापारः संयोगरूपफलं च। तत्र अस्मिन् वाक्ये कर्ता अस्ति छात्रः। छात्रे च गमनरूपव्यापारः अस्ति। अतः छात्ररूपः यः कर्ता, तद्वृत्तिः व्यापारः गमनरूपव्यापारः। तादृशगमनरूपव्यापारेण संयोगः उत्पद्यते। अतः छात्ररूपकर्तृवृत्तिगमनरूपव्यापारजन्यः भवति संयोगः। तादृशसंयोगश्च ग्रामे अस्ति। अतः संयोगाश्रयः ग्रामः भवति। अर्थात् छात्ररूपकर्तृवृत्तिगमनरूपव्यापारजन्यसंयोगरूपफलाश्रयः ग्रामः भवति। एवञ्च कर्तुरीप्सिततमं कर्म इति सूत्रेण ग्रामस्य कारकसंज्ञा भूत्वा कर्मसंज्ञा च भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीयाविभक्तिः भवति। तेन छात्रः ग्रामं गच्छति इति वाक्यं सिध्यति।

**छात्रः ग्रामं त्यजति।** अत्र वाक्ये ग्रामः कर्म अस्ति। तत्रैव अर्थस्य समन्वयः क्रियते। तत्र समन्वयात् पूर्वम् इदं प्रथमं ज्ञेयं यत् प्रत्येकं धातूनाम् अर्थद्वयं भवति फलं व्यापारश्चेति। अपि च व्यापारेण फलं जन्यमपि भवति। व्यापारः च कर्तृवृत्तिः भवति। एवञ्च प्रकृतवाक्ये त्यज् इति धातुः अस्ति। तस्य अर्थः अस्ति - गमनरूपव्यापारः विभागरूपफलं च। तत्र अस्मिन् वाक्ये कर्ता अस्ति छात्रः। छात्रे च गमनरूपव्यापारः अस्ति। अतः छात्ररूपकर्तृवृत्तिः व्यापारः गमनरूपव्यापारः। तादृशगमनरूपव्यापारेण विभागः उत्पद्यते। अतः छात्ररूपकर्तृवृत्तिगमनरूपव्यापारजन्यः भवति विभागः। तादृशविभागश्च ग्रामे अस्ति। अतः विभागाश्रयः ग्रामः भवति। अर्थात् छात्ररूपकर्तृवृत्तिगमनरूपव्यापारजन्यविभागरूपफलाश्रयः ग्रामः भवति। एवञ्च कर्तुरीप्सिततमं कर्म इति सूत्रेण ग्रामस्य कारकसंज्ञा भूत्वा कर्मसंज्ञा च भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीयाविभक्तिः भवति। तेन छात्रः ग्रामं त्यजति इति वाक्यं सिध्यति।

## [२०.२] तथायुक्तं चानीप्सितम्॥ (१.४.५०)

**सूत्रार्थः -** कर्तृवृत्तिव्यापारजन्यफलाश्रयभूतं द्वेष्यम् उदासीनं वा कारकसंज्ञं सत् कर्मसंज्ञं भवति।

**सूत्रावतरणम् -** चैत्रः ग्रामं गच्छन् तृणं स्पृशति इति प्रयोगे ग्रामः कर्म अस्ति। एवञ्च तृणम् अपि कर्म अस्ति। तत्र ग्रामस्य कर्मसंज्ञा तु कर्तुरीप्सिततमं कर्म इति सूत्रेण भवति इति पठितम्। किन्तु तृणस्य कर्मसंज्ञा कर्तुरीप्सिततमं कर्म इति सूत्रेण भवितुं नार्हति। तृणस्य अनीप्सितत्वात्। तस्मात् कथं भवति तृणस्य कर्मसंज्ञा, केन च सूत्रेण भवति इति प्रश्नः मनसि भवति। तदा तस्य प्रश्नस्य समाधानाय भगवान् पाणिनिः कर्मसंज्ञाविधायकं द्वितीयं सूत्रं रचितवान्। तच्च सूत्रं तथायुक्तं चानीप्सितम् इति तस्य अत्र व्याख्यानं क्रियते।

**सूत्रव्याख्या -** इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां कर्मसंज्ञां च करोति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। तथायुक्तम् इति प्रथमैकवचनान्तं पदम्। च इति अव्ययपदम्। अनीप्सितम् इति प्रथमैकवचनान्तं पदम्। कर्तुरीप्सिततमं कर्म इति सूत्रात् कर्म इति प्रथमान्तम् पदमत्र अनुवर्तते। कारकम् इति अधिकारः अत्र आगच्छति। अत्र तथायुक्तमित्यस्य कर्तृवृत्तिव्यापारजन्यफलाश्रयः इत्यर्थः। अनीप्सितमित्यस्य द्वेष्यम् उदासीनं चार्थः।

**सूत्रार्थविचारः - तथायुक्तम् अनीप्सतं च कारकं कर्मसंज्ञं भवति इति वाक्ययोजना।** तत्र तथायुक्तमित्यस्य कर्तृवृत्तिव्यापारजन्यफलाश्रयः इत्यर्थः। अनीप्सितमित्यस्य द्वेष्यम् उदासीनं वार्थो वर्तते। एवञ्च सूत्रार्थो भवति - कर्तृवृत्तिव्यापारजन्यफलाश्रयभूतं द्वेष्यम् उदासीनं वा कारकसंज्ञं सत् कर्मसंज्ञं भवति।

**उदाहरणम् -** चैत्रः ग्रामं गच्छन् तृणं स्पृशति। मैत्रः ओदनं भुञ्जानो विषं भुङ्क्ते।

**सूत्रार्थसमन्वयः -** चैत्रः ग्रामं गच्छन् तृणं स्पृशति। मैत्रः ओदनं भुञ्जानो विषं भुङ्क्ते। इति द्वयोः उदाहरणयोः सूत्रार्थस्य समन्वयः क्रियते।

**चैत्रः ग्रामं गच्छन् तृणं स्पृशति।** अत्र ग्रामस्य कर्मसंज्ञा कर्तुरीप्सिततमं कर्म इति सूत्रेण भवति। तृणस्य च कर्मसंज्ञा अनेन सूत्रेण भवति। एवञ्च तृणे अस्य लक्षणस्य समन्वयः कर्तव्यः अस्ति।

तथाहि प्रकृतधातुः स्पृशिधातुः तद्वाच्यः तृणादिसंयोगानुकूलः हस्तसञ्चालनादिरूपव्यापारः। तत्र हस्तसञ्चालनादिव्यापारजन्यं तृणादिसंयोगरूपं फलम्, तदाश्रयभूतं च तृणमस्ति। तच्च उदासीनत्वात् अनीप्सितमपि अस्ति। यतो हि न हि चैत्रः इच्छया तृणस्य स्पर्शनं करोति, अपि तु ग्रामं प्रति गमनकाले मार्गे विद्यमानतृणैः सह अनायासेनैव स्पर्शः जायते। तस्मात् चैत्रस्य ग्रामं प्रति गमनस्यैव इच्छा वर्तते न तु तृणानां स्पर्शने। अतः ग्रामस्तु ईप्सितः, किन्तु तृणम् अनीप्सितम्। अतः तृणानां पूर्वसूत्रेण कर्मसंज्ञा नैव प्राप्ता। तस्माद् अनेन सूत्रेण भवतीति भावः। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीयाविभक्तिः भवति। तेन चैत्रः ग्रामं गच्छन् तृणं स्पृशति इति वाक्यं सिध्यति।

**मैत्रः ओदनं भुञ्जानो विषं भुङ्क्ते।** अत्र ओदनस्य कर्मसंज्ञा कर्तुरीप्सिततमं कर्म इति सूत्रेण भवति। किन्तु विषस्य कर्मसंज्ञा अनेन सूत्रेण भवति। अतः विषे सूत्रार्थस्य समन्वयः कर्तव्यः अस्ति। तथाहि - प्रकृतधातुः भुजिः, तद्वाच्यः प्रधानीभूतव्यापारः गलबिलाधःसंयोगानुकूलव्यापारः. तत्प्रयोज्यं फलं गलबिलाधःसंयोगरूपं फलम्, तदाश्रयभूतं विषमस्ति। अपि च विषं द्वेष्यमपि वर्तते। अतः अनेन

सूत्रेण तस्य कर्मसंज्ञा भवतीति भावः। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीयाविभक्तिः भवति। तेन मैत्रः ओदनं भुञ्जानो विषं भुङ्क्ते इति वाक्यं सिध्यति।

प्रोक्तसूत्रद्वयार्थप्रकाशकानि पद्यानि अधः सन्ति -

**कर्ता निजक्रियाद्वारो यत्प्राप्तुं यतते क्वचित्।**
**तदेव कर्म बोद्धव्यं द्वितीया कर्मणि सदा।।**

**अनुक्ते कर्मणि भवेत् द्वितीया सा तु दर्श्यते।**
**रामं रामौ च रामांश्च भजाम्यहमहर्निशम्।।**

**ग्रामं गच्छति सः भृत्यः मालां ग्रथ्नाति बालिका।**
**केशान् बध्नाति सा कन्या द्वितीयाऽत्रास्ति कर्मणि।।**

**ईप्सिताच्च द्वितीया स्यात् तथैवानीप्सितादपि।**
**क्रियया ईप्सितं कर्म तथैवानीप्सितं भवेत्।।**

**ओदनं दधि भुञ्जानो विषं भुङ्क्ते प्रयुज्यते।**
**ग्रामं गच्छन् जनः कोऽपि तृणं स्पृशति कथ्यते।।**

## [२०.३] अधिशीङ्स्थासां कर्म॥ (१.४.४६)

**सूत्रार्थः** - अधिपूर्वक -शीङ् -धातोः, अधिपूर्वकस्थाधातोः अधिपूर्वक -आस् -धातोः च प्रयोगे आधारः कारकसंज्ञः सन् कर्मसंज्ञः भवति।

**सूत्रावतरणम्** - हरिः वैकुण्ठम् अधिशेते इत्यादौ शीङ् इति धातोः अकर्मकत्वेन वैकुण्ठस्य कर्मसंज्ञा भवितुं नार्हति। एवञ्च कथं प्रोक्तप्रयोगे वैकुण्ठस्य कर्मसंज्ञा इति प्रश्नस्य समाधानाय भगवान् पाणिनिः कर्मसंज्ञाविधायकम् अपरं सूत्रं रचितवान्। तच्च सूत्रम् अधिशीङ्स्थासां कर्म इति। तस्य अत्र व्याख्यानं क्रियते।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां कर्मसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। अधिशीङ्स्थासाम् इति षष्ठीबहुवचनान्तं पदम्। कर्म इति प्रथमान्तं पदम्। आधारोऽधिकरणम् इति सूत्रात् आधारः इति पदमत्र अनुवर्तते। कारकम् इति अधिकारः अत्र आगच्छति। अत्र अधिशीङ्स्थासाम् इति पदं समस्तम् अस्ति। अस्य च विग्रहो भवति - शीङ् च स्था च आस् च इति शीङ्स्थासः। अधिः पूर्वः येषां ते अधिपूर्वाः। अधिपूर्वाः च ते शीङ्स्थासः इति अधिशीङ्स्थासः। तेषाम् अधिशीङ्स्थासाम्। द्वन्द्वाद्वौ श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायेन द्वन्द्वादौ श्रूयमाणस्य अधिशब्दस्य प्रत्येकं द्वन्द्वावयवैः सह सम्बन्धो भवति। एवञ्चास्य पदस्यार्थो भवति अधिपूर्वकशीङ्धातोः, अधिपूर्वकस्थाधातोः अधिपूर्वक -आस् -धातोः इति।

**सूत्रार्थविचारः -** अधिपूर्वकशीङ्धातोः, अधिपूर्वकस्थाधातोः अधिपूर्वकास्धातोः आधारः कारकसंज्ञः सन् कर्मसंज्ञः भवति इति वाक्ययोजना। अत्र प्रयोगे इत्यस्य अध्याहारः क्रियते। तेन च सूत्रार्थो भवति अधिपूर्वकशीङ्धातोः, अधिपूर्वकस्थाधातोः अधिपूर्वकास्धातोः च प्रयोगे आधारः कारकसंज्ञः सन् कर्मसंज्ञः भवति।

**उदाहरणम् -** हरिः वैकुण्ठम् अधिशेते। हरः कैलासम् अधितिष्ठति। इन्द्रः स्वर्गम् अध्यास्ते।

**सूत्रार्थसमन्वयः -**

**हरिः वैकुण्ठम् अधिशेते।** अस्मिन् वाक्ये वैकुण्ठः कर्म अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि यदा उपसर्गरहितस्य शीङः धातोः प्रयोगः क्रियते तदा हरिः वैकुण्ठे शेते इति प्रयोगः भवति। यतो हि यत्र शयनं क्रियते सः शयनस्य आधारः भवति। तेन आधारोऽधिकरणम् इति सूत्रेण तस्य अधिकरणसंज्ञा भवति। ततश्च सप्तम्यधिकरणे च इति सूत्रेण तत्र सप्तमी भवति। अत एव चैत्रः कटे शेते इत्यादयः प्रयोगाः भवन्ति। किन्तु प्रकृतवाक्ये अधिपूर्वकशीङः प्रयोगः अस्ति। अतः शयनस्य आधारस्य वैकुण्ठस्य प्राप्ताम् अधिकरणसंज्ञां प्रबाध्य अधिशीङ्स्थासां कर्म इति सूत्रेण कर्मसंज्ञा भवति। तेन च तत्र द्वितीया भवति। ततश्च हरिः वैकुण्ठम् अधिशेते इति प्रयोगः सिध्यति।

**हरः कैलासम् अधितिष्ठति।** अस्मिन् वाक्ये कैलासः कर्म अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि यदा उपसर्गरहितस्य स्थाधातोः प्रयोगः क्रियते तदा हरः कैलासे तिष्ठति इति प्रयोगः भवति। यतो हि यत्र पदार्थः तिष्ठति सः स्थितेः आधारः भवति। तेन आधारोऽधिकरणम् इति सूत्रेण तस्य अधिकरणसंज्ञा भवति। ततश्च सप्तम्यधिकरणे च इति सूत्रेण तत्र सप्तमी भवति। अत एव चैत्रः कटे तिष्ठति इत्यादयः प्रयोगाः भवन्ति। किन्तु प्रकृतवाक्ये अधिपूर्वकस्थाधातोः प्रयोगः अस्ति। अतः स्थितेः आधारस्य कैलासस्य प्राप्ताम् अधिकरणसंज्ञां प्रबाध्य अधिशीङ्स्थासां कर्म इति सूत्रेण कर्मसंज्ञा भवति। तेन च तत्र द्वितीया भवति। ततश्च हरः कैलासम् अधितिष्ठति इति प्रयोगः सिध्यति।

**इन्द्रः स्वर्गम् अध्यास्ते।** अस्मिन् वाक्ये स्वर्गः कर्म अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि यदा उपसर्गरहितस्य स्थाधातोः प्रयोगः क्रियते तदा इन्द्रः स्वर्गे आस्ते इति प्रयोगः भवति। यतो हि यत्र जनः आस्ते, सः आसनस्य आधारः भवति। तेन आधारोऽधिकरणम् इति सूत्रेण तस्य अधिकरणसंज्ञा भवति। ततश्च सप्तम्यधिकरणे च इति सूत्रेण तत्र सप्तमी भवति। अत एव चैत्रः कटे आस्ते इत्यादयः प्रयोगाः भवन्ति। किन्तु प्रकृतवाक्ये अधिपूर्वकास्धातोः प्रयोगः अस्ति। अतः आसनस्य आधारस्य स्वर्गस्य प्राप्ताम् अधिकरणसंज्ञां प्रबाध्य अधिशीङ्स्थासां कर्म इति सूत्रेण कर्मसंज्ञा भवति। तेन च तत्र द्वितीया भवति। ततश्च इन्द्रः स्वर्गम् अध्यास्ते इति प्रयोगः सिध्यति।

तथाहि कारिके -

**अधिपूर्वकशीङ्स्थासामाधारः कर्मसंज्ञकः।**
**अधिशेतेऽधितिष्ठति अध्यास्ते वैकुण्ठं हरिः।।**



**अधिपूर्वाणां शीङ्स्थासामाधारः कर्म तद्यथा।**
**अधिशेते वनं रामोऽध्यास्ते चाप्यधितिष्ठति।।**

## [२०.४] उपान्वध्याङ्वसः॥ (१.४.४८)

**सूत्रार्थः** - उपपूर्वक -वसः अनुपूर्वक -वसः अधिपूर्वक -वसः आङ्पूर्वक -वसः च प्रयोगे आधारः कारकसंज्ञः सन् कर्मसंज्ञः भवति।

**सूत्रावतरणम्** - हरिः वैकुण्ठम् उपवसति इत्यादौ वस् इति धातोः अकर्मकत्वेन वैकुण्ठस्य कर्मसंज्ञा भवितुं नार्हति। एवञ्च कथं प्रोक्तप्रयोगे वैकुण्ठस्य कर्मसंज्ञा इति प्रश्नस्य समाधानाय भगवान् पाणिनिः कर्मसंज्ञाविधायकम् अपरं सूत्रं रचितवान्। तच्च सूत्रम् उपान्वध्याङ्वसः इति। तस्य अत्र व्याख्यानं क्रियते।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां कर्मसंज्ञां च करोति। सूत्रेऽस्मिन् एकमेव पदम् अस्ति। उपान्वध्याङ्वसः इति षष्ठ्येकवचनान्तं पदम्। अत्र अधिशीङ्स्थासां कर्म इति सूत्रात् कर्म इति पदम् अनुवर्तते। आधारोऽधिकरणम् इति सूत्रात् आधारः इति पदमत्र अनुवर्तते। कारकम् इति अधिकारः अत्र आगच्छति। अत्र उपान्वध्याङ्वसः इति पदं समस्तम् अस्ति। अस्य च विग्रहो भवति - उपश्च अनुश्च आङ् च इति उपान्वध्याङः। उपान्वध्याङः पूर्वाः यस्य सः उपान्वध्याङ्पूर्वः। उपान्वध्याङ्पूर्वः चासौ वस् चेति उपान्वध्याङ्वस्। तस्य उपान्वध्याङ्वसः। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायेन द्वन्द्वान्ते श्रूयमाणस्य वस् -शब्दस्य प्रत्येकं द्वन्द्वावयवैः सह सम्बन्धो भवति। एवञ्चास्य पदस्यार्थो भवति उपपूर्वकवसः अनुपूर्वकवसः अधिपूर्वकवसः आङ्पूर्वकवसः इति।

**सूत्रार्थविचारः** - उपपूर्वकवसः अनुपूर्वकवसः अधिपूर्वकवसः आङ्पूर्वकवसः आधारः कारकसंज्ञः सन् कर्मसंज्ञः भवति इति वाक्ययोजना। अत्र प्रयोगे इत्यस्य अध्याहारः क्रियते। तेन च सूत्रार्थो भवति उपपूर्वकवसः अनुपूर्वकवसः अधिपूर्वकवसः आङ्पूर्वकवसः च प्रयोगे आधारः कारकसंज्ञः सन् कर्मसंज्ञः भवति।

**उदाहरणम्** - हरिः वैकुण्ठम् उपवसति। हरः कैलासम् अनुवसति। इन्द्रः स्वर्गम् अधिवसति। कृष्णः गोलोकम् आवसति।

**सूत्रार्थसमन्वयः -**

**हरिः वैकुण्ठम् उपवसति।** अस्मिन् वाक्ये वैकुण्ठः कर्म अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि यदा उपसर्गरहितस्य वस् -धातोः प्रयोगः क्रियते। तदा हरिः वैकुण्ठे वसति इति प्रयोगः भवति। यतो हि यत्र वासः क्रियते सः वासस्य आधारः भवति। तेन आधारोऽधिकरणम् इति सूत्रेण तस्य अधिकरणसंज्ञा भवति। ततश्च सप्तम्यधिकरणे च इति सूत्रेण तत्र सप्तमी भवति। अत एव चैत्रः ग्रामे वसति इत्यादयः प्रयोगाः भवन्ति। किन्तु प्रकृतवाक्ये उपपूर्वकवसः प्रयोगः अस्ति। अतः वासस्य आधारस्य वैकुण्ठस्य प्राप्ताम् अधिकरणसंज्ञां प्रबाध्य उपान्वध्याङ्वसः इति सूत्रेण कर्मसंज्ञा भवति। तेन च तत्र द्वितीया भवति। ततश्च हरिः वैकुण्ठम् उपवसति इति प्रयोगः सिध्यति।

**हरः कैलासम् अनुवसति।** अस्मिन् वाक्ये कैलासः कर्म अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि यदा उपसर्गरहितस्य वस् धातोः प्रयोगः क्रियते तदा हरः कैलासे वसति इति प्रयोगः भवति। यतो हि यत्र वासः क्रियते सः वासस्य आधारः भवति। तेन आधारोऽधिकरणम् इति सूत्रेण तस्य अधिकरणसंज्ञा भवति। ततश्च सप्तम्यधिकरणे च इति सूत्रेण तत्र सप्तमी भवति। अत एव चैत्रः ग्रामे वसति इत्यादयः प्रयोगाः भवन्ति। किन्तु प्रकृतवाक्ये अनुपूर्वकवसः प्रयोगः अस्ति। अतः वासस्य आधारस्य कैलासस्य प्राप्ताम् अधिकरणसंज्ञां प्रबाध्य उपान्वध्याङ्वसः इति सूत्रेण कर्मसंज्ञा भवति। तेन च तत्र द्वितीया भवति। ततश्च हरः कैलासम् अनुवसति इति प्रयोगः सिध्यति।

**इन्द्रः स्वर्गम् अधिवसति।** अस्मिन् वाक्ये स्वर्गः कर्म अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि यदा उपसर्गरहितस्य वस् धातोः प्रयोगः क्रियते तदा इन्द्रः स्वर्गे वसति इति प्रयोगः भवति। यतो हि यत्र वासः क्रियते सः वासस्य आधारः भवति। तेन आधारोऽधिकरणम् इति सूत्रेण तस्य अधिकरणसंज्ञा भवति। ततश्च सप्तम्यधिकरणे च इति सूत्रेण तत्र सप्तमी भवति। अत एव चैत्रः ग्रामे वसति इत्यादयः प्रयोगाः भवन्ति। किन्तु प्रकृतवाक्ये अधिपूर्वकवसः प्रयोगः अस्ति। अतः वासस्य आधारस्य स्वर्गस्य प्राप्ताम् अधिकरणसंज्ञां प्रबाध्य उपान्वध्याङ्वसः इति सूत्रेण कर्मसंज्ञा भवति। तेन च तत्र द्वितीया भवति। ततश्च इन्द्रः स्वर्गम् अधिवसति इति प्रयोगः सिध्यति।

**कृष्णः गोलोकम् आवसति।** अस्मिन् वाक्ये गोलोकः कर्म अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि यदा उपसर्गरहितस्य वस् धातोः प्रयोगः क्रियते तदा कृष्णः गोलोके वसति इति प्रयोगः भवति। यतोहि यत्र वासः क्रियते सः वासस्य आधारः भवति। तेन आधारोऽधिकरणम् इति सूत्रेण तस्य अधिकरणसंज्ञा भवति। ततश्च सप्तम्यधिकरणे च इति सूत्रेण तत्र सप्तमी भवति। अत एव चैत्रः ग्रामे वसति इत्यादयः प्रयोगाः भवन्ति। किन्तु प्रकृतवाक्ये आङ्पूर्वकवसः प्रयोगः अस्ति। अतः वासस्य आधारस्य गोलोकस्य प्राप्ताम् अधिकरणसंज्ञां प्रबाध्य उपान्वध्याङ्वसः इति सूत्रेण कर्मसंज्ञा भवति। तेन च तत्र द्वितीया भवति। ततश्च कृष्णः गोलोकम् आवसति इति प्रयोगः सिध्यति।

## [२०.५] कर्मणि द्वितीया॥ (२.३.२)

**सूत्रार्थः** - अनुक्ते कर्मणि द्वितीया विभक्तिः भवति।

**सूत्रावतरणम्** - तत्र तावत् प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी इति एताः सप्त विभक्तयः सन्ति। तत्र एतासु मध्ये द्वितीया कस्मिन् अर्थे भवति इति प्रतिपादयितुं कर्मणि द्वितीया इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं द्वितीयां विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः।कर्मणि इति सप्तम्येकवचनान्तं पदम्। द्वितीया इति प्रथमैकवचनान्तं पदम्। अनभिहिते इति अधिकारः अत्र आगच्छति। अत्र कर्मणि इत्यस्य कर्मार्थे इत्यर्थः। द्वितीया इत्यस्य द्वितीया विभक्तिः इत्यर्थः। अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। यस्मिन् अर्थे कश्चित् प्रत्ययादिः भवति सः अर्थः उक्तः भवति। यस्मिन् च अर्थे

कश्चित् प्रत्ययादिः न भवति, सः अर्थः अनुक्तः भवति। अत्र च केन अनुक्ते इति जिज्ञासायाम् उच्यते - तिङा कृता तद्धितेन समासेन वा अनुक्ते इति।

**सूत्रार्थविचारः** - अनभिहिते कर्मणि द्वितीया भवति इति वाक्ययोजना। अत्रः अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। कर्मणि इत्यस्य कर्मार्थे इत्यर्थः। द्वितीया इत्यस्य द्वितीया विभक्तिः इत्यर्थः। तेन च सूत्रार्थः भवति अनुक्ते कर्मणि द्वितीया विभक्तिः भवति।

**उदाहरणम्** - चैत्रः ग्रामं गच्छति। मैत्रः तण्डुलं पचति। छात्रः पत्रं लिखति।

**सूत्रार्थसमन्वयः** - चैत्रः ग्रामं गच्छति। मैत्रः तण्डुलं पचति। छात्रः पत्रं लिखति। इति त्रिषु उदाहरणेषु सूत्रार्थस्य समन्वयः क्रियते।

**चैत्रः ग्रामं गच्छति।** अस्मिन् वाक्ये ग्रामः कर्म अस्ति। तत् च अनुक्तम् अस्ति। यतो हि गम् -धातोः तिङ् कर्तरि विहितः अस्ति। अतः तिङा कर्ता अभिहितः, उक्तः अस्ति। कर्म च अनुक्तम् अस्ति। अतः अनुक्ते कर्मणि ग्रामे कर्मणि द्वितीया इति सूत्रेण द्वितीया विभक्तिः भवति।

**मैत्रः तण्डुलं पचति।** अस्मिन् वाक्ये तण्डुलः कर्म अस्ति। तत् च अनुक्तम् अस्ति। यतो हि पच् -धातोः तिङ् कर्तरि विहितः अस्ति। अतः तिङा कर्ता अभिहितः, उक्तः अस्ति। कर्म च अनुक्तम् अस्ति। अतः अनुक्ते कर्मणि तण्डुले कर्मणि द्वितीया इति सूत्रेण द्वितीया विभक्तिः भवति।

**छात्रः पत्रं लिखति।** अस्मिन् वाक्ये पत्रम् कर्म अस्ति। तत् च अनुक्तम् अस्ति। यतो हि लिख् -धातोः तिङ् कर्तरि विहितः अस्ति। अतः तिङा कर्ता अभिहितः, उक्तः अस्ति। कर्म च अनुक्तम् अस्ति। अतः अनुक्ते कर्मणि पत्रे कर्मणि द्वितीया इति सूत्रेण द्वितीया विभक्तिः भवति।

**चैत्रः ग्रामं गच्छन् तृणं स्पृशति।** अस्मिन् वाक्ये ग्रामः कर्म अस्ति एवञ्च पत्रमपि कर्म अस्ति। तदुभयमपि अनुक्तम् अस्ति। यतो हि स्पृश् -धातोः तिङ् कर्तरि विहितः अस्ति। अतः तिङा कर्ता अभिहितः, उक्तः अस्ति। कर्मद्वयम् च अनुक्तम् अस्ति। अतः अनुक्ते कर्मणि ग्रामे तृणे च कर्मणि द्वितीया इति सूत्रेण द्वितीया विभक्तिः भवति।

**रामः ओदनं भुञ्जानो विषं भुङ्क्ते।** अस्मिन् वाक्ये ओदनः कर्म अस्ति एवं विषं कर्म अस्ति। तदुभयमपि अनुक्तम् अस्ति। यतो हि भुज् -धातोः तिङ् कर्तरि विहितः अस्ति। अतः तिङा कर्ता अभिहितः, उक्तः अस्ति। कर्मद्वयम् च अनुक्तम् अस्ति। अतः अनुक्ते कर्मणि ओदने विषे च कर्मणि द्वितीया इति सूत्रेण द्वितीया विभक्तिः भवति।

## पाठसारः

धातोः अर्थः फलं व्यापारश्च। अस्मिन् पाठे कर्तुरीप्सिततमं कर्म इति सूत्रम्, अपि च तथायुक्तं चानीप्सितम् इति सूत्रं च पठितम्। तत्र उभाभ्यामपि सूत्राभ्यां धातुवाच्यस्य फलाश्रयस्यैव कर्मसंज्ञा क्रियते। परन्तु कर्तुरीप्सिततमं कर्म इति सूत्रं तस्यैव कर्मसंज्ञां करोति यः धातुवाच्यफलाश्रयः अपि स्यात् किञ्च इच्छायाः उद्देश्यम् अपि स्यात्। तथायुक्तं चानीप्सितम् इति सूत्रं तु यः धातुवाच्यफलाश्रयः भवेत् ,

अपि च इच्छायाः अनुद्देश्यमपि भवेत्, तस्य कर्मसंज्ञां करोति। इत्युभयोः सूत्रयोः मध्ये भेदः। अधिशीङ्स्थासां कर्म इति सूत्रेण, उपान्वध्याङ्वसः इति सूत्रेण च आधारस्य कर्मसंज्ञा क्रियते। ततः परं कर्मणि द्वितीया इति सूत्रम् आगच्छति। अनेन सूत्रेण च अनभिहिते कर्मणि द्वितीयाविभक्तिः क्रियते। कर्मणि द्वितीया इति सूत्रे कर्मपदेन कर्मसंज्ञकस्य ग्रहणं बोध्यम्। अतः यदा येन केनापि सूत्रेण कस्यचित् कर्मसंज्ञा भवति तदा कर्मणि द्वितीया इति सूत्रेण कर्मवाचाकशब्दात् द्वितीयाविभक्तिः क्रियते। अभिहिते तु कर्मणि प्रथमाविभक्तिः एव भवति इति।

## पाठगतप्रश्नाः

१. कर्तुरीप्सिततमं कर्म इति सूत्रं किं करोति।

२. तथायुक्तं चानीप्सितम् इति सूत्रं किं करोति।

३. ईप्सिततमम् इति पदस्य कः अर्थः।

४. तथायुक्तम् इति पदस्य कः अर्थः।

५. गम् इति धातोः कः अर्थः।

६. अनुक्ते कर्मणि का विभक्तिः भवति। उक्ते कर्मणि च का विभक्तिः भवति।

७. शीङ्स्थासः इति पदे कः समासः कश्च विग्रहः।

८. उपान्वध्याङः इति पदे कः समासः कश्च विग्रहः।

९. उपान्ध्याङ्वसः इत्यस्य एकम् उदाहरणम् लिखत।

१०. अधिशीङ् -स्थासां कर्म इत्यस्य एकम् उदाहरणम् लिखत।

११. हरः कैलासम् अनुवसति इति वाक्ये स्वर्गस्य कर्मसंज्ञा केन सूत्रेण।

१२. इन्द्रः स्वर्गम् अध्यास्ते इति वाक्ये स्वर्गस्य कर्मसंज्ञा केन सूत्रेण।

## पाठान्तप्रश्नाः

१. कर्तुरीप्सिततमं कर्म इति सूत्रस्य व्याख्यां लिखन्तु।

२. तथायुक्तं चानीप्सितम् इति सूत्रस्य व्याख्यां लिखत।

३. अधिशीङ्स्थासां कर्म इति सूत्रस्य व्याख्यां कुरुत।।

४. उपान्वध्याङ्वसः  इति सूत्रस्य व्याख्यां कुर्वन्तु।

५. छात्रः ग्रामं गच्छति इति प्रयोगस्य सिद्धिः कार्या।

६. छात्रः ग्रामं गच्छन् तृणं स्पृशति इति प्रयोगस्य सिद्धिः कार्या।

७. हरिः वैकुण्ठम् अधिशीते इति प्रयोगस्य सिद्धिः कार्या।

८. हरिः वैकुण्ठम् उपवसति इति प्रयोगस्य सिद्धिः दर्शनीया।

९. कर्मणि द्वितीया इति सूत्रस्य व्याख्यनं कुर्वन्तु।

१०. हरिः वैकुण्ठम् आवसति इति प्रयोगं साधयन्तु।

## पाठगतप्रश्नोत्तराणि

१. कर्तुरीप्सिततमं कर्म इति सूत्रं कर्मसंज्ञां करोति।

२. तथायुक्तं चानीप्सितम् इति सूत्रं कर्मसंज्ञां करोति।

३. ईप्सिततमम् इति पदस्य व्यापारजन्यफलाश्रयः इति अर्थः।

४. तथायुक्तम् इति पदस्य कर्तृवृत्तिव्यापारजन्यफलाश्रयः इति अर्थः।

५. गम् इति धातोः गति इति अर्थः।

६. अनुक्ते कर्मणि द्वितीयाविभक्तिः भवति। उक्ते कर्मणि च प्रथमाविभक्तिः भवति।

७. शीङ्स्थासः इति पदे इतरेतरयोगद्वन्द्वसमासः। अस्य च विग्रहः शीङ् च स्था च आस् इति इति शीङ्स्थासः।

८. उपान्वध्याङः इति पदे इतरेतरयोगद्वन्द्वसमासः। अस्य च विग्रहो उपश्च अनुश्च आङ् च इति उपान्वध्याङः।

९. हरिः वैकुण्ठम् उपवसति। हरः कैलासम् अनुवसति। इन्द्रः स्वर्गम् अधिवसति। कृष्णः गोलोकम् आवसति।

१०. हरिः वैकुण्ठम् अधिशेते। हरः कैलासम् अधितिष्ठति। इन्द्रः स्वर्गम् अध्यास्ते।

११. उपान्ध्याङ्वसः।

१२. अधिशीङ् -स्थासां कर्म।

।।इति विंशः पाठः।।

# २१

# द्वितीयाकारकविभक्तिः-२

## प्रस्तावना

संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम् चेति। एतेषु कर्म किं भवति इति प्रतिपादयितुं भगवान् पाणिनिः कर्मसंज्ञाविधायाकानि कानिचित् सूत्राणि रचितवान्। तत्र केषाञ्चित् कर्मसंज्ञाविधायकानां सूत्राणां व्याख्यानं द्वितीये पाठे कृतम्। अत्र च अकथितं च, गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इति एतयोः द्वयोः सूत्रयोः व्याख्या क्रियते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- अकथितं च इति सूत्राशयं ज्ञातुं शक्नुयात्।
- द्विकर्मधातवः के सन्ति इति ज्ञातुं प्रभवेत्।
- द्विकर्मकधातुघटितवाक्यानां सम्यग् व्यवहारं कर्तुम् पारयेद्।
- द्विकर्मकधातुषु गौणकर्म किम् प्रधानं कर्म किमिति निर्णेतुम् शक्नुयात्।
- यदा द्विकर्मकधातोः कर्मणि प्रत्ययः विधीयते तदा कतरत् कर्म उक्तं भवतीति ज्ञास्यति।
- ण्यन्तधातुघटितवाक्येषु कस्य कर्मसंज्ञा भवति इति ज्ञातुं प्रभवेत्।
- गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इति सूत्रस्यार्थं ज्ञातुं प्रभवेत्।

## [२१.१] अकथितं च॥ (१.४.५१)

**सूत्रार्थः** - अपादानत्वादिविशेषरूपेण अविवक्षितं दुह्यादिषोडशधातुवाच्यक्रियायाः मुख्यकर्मणा सह सम्बद्धं यत् तत्कारकसंज्ञं सत् कर्मसंज्ञं भवति।

**सूत्रावतरणम्** - संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम् चेति। एतेषु किमपि कारकं तत्कारकत्वेन अविवक्षितं चेत् कथं कर्म भवति इति प्रतिपादयितुम् अकथितं च इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या -** इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां कर्मसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। अकथितम् इति प्रथमैकवचनान्तं पदम्। च इति अव्ययपदम्। कारकम् इति अधिकृतम्। अकथितमित्यस्य अविवक्षितमित्यर्थः।

**सूत्रार्थविचारः -** अकथितं कारकं सत् कर्मसंज्ञं भवति इति वाक्ययोजना। अत्र अकथितमित्यस्य अविवक्षितमित्यर्थः। ततश्च जिज्ञासा भवति केन रूपेण अविवक्षितमिति। एवञ्च प्रकरणवशात् अत्र अपादानादिविशेषरूपेण अविवक्षितमिति स्वीक्रियते। पुनः अनेन सूत्रेण न यस्य कस्यापि कर्मसंज्ञा क्रियते, अपि तु यत् अविवक्षितं भवेत्, अपि च दुह् प्रपूरणे, टुयाचृ याच्ञायाम्, डुपचष् पाके, दण्ड दण्डनिपातने, रुधिर् आवरणे, प्रच्छ् ज्ञीप्सायाम्, चिञ् चयने, ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ, जि अभिभवे, मन्थ विलोडने, मुष स्तेये, णीञ् प्रापणे, हृञ् हरणे, कृष विलेखने, वह प्रापणे इत्येतद्धातुवाच्यक्रियायाः मुख्यकर्मणा सह सम्बद्धमपि भवेत् तस्यैव अनेन सूत्रेण कर्मसंज्ञा क्रियते। एवञ्च सूत्रार्थः प्रतिफलति - अपादानत्वादिविशेषरूपेण अविवक्षितं सत् यद् दुहादिषोडशधातुवाच्यक्रियायाः मुख्यकर्मणा सह सम्बद्धं भवति तदपि कारकसंज्ञं सत् कर्मसंज्ञं भवति इति।

अत्रायं विशेषः - कर्तुरीप्सिततमं कर्म इति सूत्रेण यस्य कर्मसंज्ञा भवति तदेव मुख्यं कर्म इत्युच्यते। अकथितं चेति सूत्रेण यस्य कर्मसंज्ञा भवति तद् गौणं कर्म इत्युच्यते। पुनः इदमपि अत्र बोध्यम् - अविवक्षा द्विविधा भवति प्राप्तिपूर्विका अप्राप्तिपूर्विका चेति।

**उदाहरणम् -** गोपः गां पयः दोग्धि। वामनः बलिं वसुधां याचते। विनीतः अविनीतं विनयं याचते। पाचकः तण्डुलान् ओदनं पचति। राजा गर्गान् शतं दण्डयति। गोपः व्रजं गाम् अवरुणद्धि। पथिकः माणवकं पन्थानं पृच्छति। बालकः वृक्षं फलानि अवचिनोति। गुरुः शिष्यं धर्मं ब्रूते। गुरुः शिष्यं धर्मं शास्ति। देवदत्तः यज्ञदत्तं शतं जयति। देवः क्षीरनिधिं सुधां मथ्नाति। चौरः देवदत्तं शतं मुष्णाति। गोपः ग्रामम् अजां नयति। गोपः ग्रामम् अजां हरति। गोपः ग्रामम् अजां कृषति। गोपः ग्रामम् अजां वहति।

**सूत्रार्थसमन्वयः -**

**गोपः गां पयः दोग्धि।** अत्र वाक्ये दुहिधातोः प्रयोगः अस्ति। गोपः कर्ता अस्ति। पयः मुख्यकर्म अस्ति। गौः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि अत्र वाक्ये दुहिधातोः विभागानुकूलव्यापारः अर्थः। एवञ्च विभागानुकूलव्यापारः गोपे अस्ति अतः व्यापाराश्रयत्वात् सः कर्ता। विभागरूपं फलं पयसि वर्तते। अतः फलाश्रयत्वात् तस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। पुनः दोहनेन पयसः गोः विभागः अभवत्। विभागाश्रयत्वात् गोः अपादानसंज्ञा भवति। अत्रैव यदा अपादानभूतस्य गोः अपादानत्वेन रूपेण अविवक्षा क्रियते तदा गौः अपादानत्वादिरूपेण अविवक्षिता भवति। अपि च दुहिधातुवाच्यक्रियायाः मुख्यकर्मणा पयसा सह गौः सम्बद्धा अपि अस्ति। अतः तस्या गोः अकथितं च इति सूत्रेण कर्मसंज्ञा भवति। कर्मत्वाच्च तत्र द्वितीया भवति। तेन गोपः गां पयः दोग्धि इति वाक्यं सिध्यति। यदा च अपादानत्वादिरूपेण अविवक्षा नैव क्रियते तदा अपादानसंज्ञा एव भवति। ततश्च अपादाने पञ्चमी भवति। तेन च गोपः गोः पयः दोग्धि इति वाक्यमपि सिध्यति।



**वामनः बलिं वसुधां याचते।** अत्र वाक्ये याचिधातोः प्रयोगः अस्ति। वामनः कर्ता अस्ति। वसुधा मुख्यकर्म अस्ति। बलिः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र याचिधातोः याचनानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः वामनः। अतः सः कर्ता। याचनारूपफलाश्रयत्वात् वसुधायाः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। बलेस्तु कारकत्वेऽपि न कापि विशिष्टा अपादानादिसंज्ञा प्राप्ता। अतस्तत्र नटस्य शृणोति इतिवत् षष्ठी प्राप्ता। एवञ्च बलेः अपादानत्वादिविशेषरूपेण सर्वथा अप्राप्तिपूर्विका अविवक्षा वर्तते। एवञ्च बलिः याचिधातुवाच्यक्रियायाः मुख्यकर्मणा वसुधया सह सम्बद्धः अपि अस्ति। अतः अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च वामनः बलिं वसुधां याचते इति प्रयोगः सिध्यति।

**माता तण्डुलान् ओदनं पचति।** अत्र वाक्ये पचिधातोः प्रयोगः अस्ति। माता कर्त्री अस्ति। ओदनः मुख्यकर्म अस्ति। तण्डुलः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र पचिधातोः पाकानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः माता। अतः सा कर्त्री। पाकरूपफलाश्रयत्वात् ओदनस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। तण्डुलश्च ओदनपाके प्रकृष्टोपकारकः भवति। अतः साधकतमं करणम् इति सूत्रेण तस्य करणसंज्ञा प्राप्ता भवति। तस्यैव यदा करणत्वादिविशेषरूपेण अविवक्षा क्रियते तदा सः करणत्वादिविशेषरूपेण अविवक्षितः भवति। एवञ्च पचिधातुवाच्यक्रियायाः मुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतः अकथितं चेति सूत्रेण तण्डुलस्य कर्मसंज्ञा भवति। तेन ततः अपि द्वितीया भवति। ततश्च माता तण्डुलान् ओदनं पचति इति वाक्यं सिध्यति।

**राजा गर्गान् शतं दण्डयति।** अत्र वाक्ये दण्डधातोः प्रयोगः अस्ति। राजा कर्ता अस्ति। शतं मुख्यकर्म अस्ति। गर्गाः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र दण्डधातोः ग्रहणानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः राजा। अतः सः कर्ता। ग्रहणरूपफलाश्रयत्वात् शतस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। यदा राजा गर्गेभ्यः शतस्य आदानं करोति तदा गर्गेभ्यः शतस्य विभागः भवति। अतः विभागाश्रयत्वात् गर्गाणाम् अपादानासंज्ञा प्राप्ता। किन्तु यदा अपादानत्वेन अविवक्षा क्रियते तदा तत् अपादानत्वेन रूपेण अविवक्षितं भवति। अपि च ते गर्गाः शतरूपमुख्यकर्मणा सह सम्बद्धा अपि सन्ति। अतः गर्गाणाम् अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च **राजा गर्गान् शतं दण्डयति** इति प्रयोगः सिध्यति।



**गोपः व्रजं गाम् अवरुणद्धि।** अत्र वाक्ये रुधिधातोः प्रयोगः अस्ति। गोपः कर्ता अस्ति। गौः मुख्यकर्म अस्ति। व्रजः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र रुध् -धातोः निर्गम -प्रतिबन्धकः चिरस्थित्यनुकूलः बन्धनादिरूपः व्यापारः अर्थः। एतादृशव्यापाराश्रयः गोपः। अतः सः कर्ता। गमन -प्रतिबन्धकः चिरस्थित्यनुकूलः बन्धनादिरूपः यो व्यापारः तज्जन्यगमनप्रतिबन्धक -चिरस्थितिरूपफलाश्रयत्वात् गोः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। व्रजस्य तु कर्मद्वारा फलाश्रयत्वात् अधिकरणसंज्ञा प्राप्ता। किन्तु यदा अधिकरणत्वेन अविवक्षा क्रियते तदा सः अधिकरणत्वेन रूपेण अविवक्षितः भवति। अपि च स गोरूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य व्रजस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च **गोपः व्रजं गाम् अवरुणद्धि** इति प्रयोगः सिध्यति।

**पथिकः माणवकं पन्थानं पृच्छति।** अत्र वाक्ये प्रच्छिधातोः प्रयोगः अस्ति। पथिकः कर्ता अस्ति। पन्थाः मुख्यकर्म अस्ति। माणवकः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र प्रच्छिधातोः जिज्ञासाविषयभूतार्थज्ञानानुकूलव्यापारः अर्थः। (पथिकस्य या जिज्ञासा तस्याः विषयः पन्था अस्ति। तज्ज्ञानानुकूलव्यापारः केन पथा गच्छामि इत्याकारकप्रश्नरूपः व्यापारः।) एतादृशव्यापाराश्रयः पथिकः। अतः सः कर्ता। जिज्ञासाविषयभूतार्थज्ञानरूपफलाश्रयत्वात् पथः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। माणवकस्य कारकत्वेऽपि न कापि विशिष्टा अपादानादिसंज्ञा प्राप्ता। अतस्तत्र नटस्य शृणोति इतिवत् षष्ठी प्राप्ता। एवञ्च माणवकस्य अपादानत्वादिविशेषरूपेण सर्वथा अप्राप्तिपूर्विका अविवक्षा वर्तते। एवञ्च माणवकः पृच्छ -धातुवाच्यक्रियायाः मुख्यकर्मणा पथा सह सम्बद्धः अपि अस्ति। अतस्तस्य माणवकस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च माणवकं पन्थानं पृच्छति इति प्रयोगः सिध्यति।

**बालकः वृक्षं फलानि अवचिनोति।** अत्र वाक्ये चिधातोः प्रयोगः अस्ति। बालकः कर्ता अस्ति। फलं मुख्यकर्म अस्ति। वृक्षः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र चिधातोः चयनानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः बालकः। अतः सः कर्ता। चयनरूपफलाश्रयत्वात् फलानां कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। चयनेन फलानां वृक्षात् विभागः भवति। विभागाश्रयत्वात् वृक्षस्य अपादानसंज्ञा प्राप्ता। किन्तु यदा अपादानत्वेन अविवक्षा क्रियते तदा सः अपादानत्वेन रूपेण अविवक्षितः भवति। अपि च स फलरूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य वृक्षस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च बालकः वृक्षं फलानि अवचिनोति इति प्रयोगः सिध्यति।

**गुरुः शिष्यं धर्मं ब्रूते।** अत्र वाक्ये ब्रूञ्धातोः प्रयोगः अस्ति। गुरुः कर्ता अस्ति। धर्मः मुख्यकर्म अस्ति। शिष्यः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र ब्रूञ्धातोः बोधनानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः गुरुः अस्ति। अतः सः कर्ता। बोधरूपफलाश्रयत्वात् धर्मस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। गुरुः शिष्यं कर्मणा धर्मेण सम्बन्धुम् इच्छति। अतः शिष्यस्य कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रेण सम्प्रदानसंज्ञा प्राप्ता। किन्तु यदा सम्प्रदानत्वेन अविवक्षा क्रियते तदा स सम्प्रदानत्वेन रूपेण अविवक्षितः भवति। अपि च स धर्मरूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य शिष्यस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति ततश्च गुरुः शिष्यं धर्मं ब्रूते इति प्रयोगः सिध्यति।

**गुरुः शिष्यं धर्मं शास्ति।** अत्र वाक्ये शासुधातोः प्रयोगः अस्ति। गुरुः कर्ता अस्ति। धर्मः मुख्यकर्म अस्ति। शिष्यः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र शासुधातोः शासनानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः गुरुः अस्ति। अतः सः कर्ता। शासनरूपफलाश्रयत्वात् धर्मस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। गुरुः शिष्यं कर्मणा धर्मेण सम्बन्धुम् इच्छति। अतः शिष्यस्य कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रेण सम्प्रदानसंज्ञा प्राप्ता। किन्तु यदा सम्प्रदानत्वेन अविवक्षा क्रियते तदा स सम्प्रदानत्वेन रूपेण अविवक्षितः भवति। अपि च स धर्मरूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य शिष्यस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति ततश्च गुरुः शिष्यं धर्मं शास्ति इति प्रयोगः सिध्यति।

**देवः क्षीरनिधिं सुधां मथ्नाति।** अत्र वाक्ये मन्थधातोः प्रयोगः अस्ति। देवः कर्ता अस्ति। सुधा मुख्यकर्म अस्ति। क्षीरनिधिः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र मन्थधातोः द्रवद्रव्यगतसारोद्भावनानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः देवः अस्ति। अतः सः कर्ता। द्रवद्रव्यगतसारोद्भावनरूपफलाश्रयत्वात् सुधायाः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। मन्थनेन क्षीरनिधेः सुधायाः विभागः भवति। अतः विभागाश्रयत्वात् क्षीरनिधेः अपादानसंज्ञा प्राप्ता। किन्तु यदा अपादानत्वेन अविवक्षा क्रियते तदा सः अपादानत्वेन रूपेण अविवक्षितः भवति। अपि च स सुधारूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य क्षीरनिधेः अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च देवः क्षीरनिधिं सुधां मथ्नाति इति प्रयोगः सिध्यति।



**चौरः देवदत्तं शतं मुष्णाति।** अत्र वाक्ये मुष्धातोः प्रयोगः अस्ति। चौरः कर्ता अस्ति। शतं मुख्यकर्म अस्ति। देवदत्तः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र मुष्धातोः हरणानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः चौरः अतः सः कर्ता। हरणरूपफलाश्रयत्वात् शतस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। शतविश्लेषे देवदत्तस्य अवधित्वेन अपादानसंज्ञा प्राप्ता। किन्तु यदा अपादानत्वेन अविवक्षा क्रियते तदा सः अपादानत्वेन रूपेण अविवक्षितः भवति अपि च, शतरूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य देवदत्तस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च चौरः देवदत्तं शतं मुष्णाति इति प्रयोगः सिध्यति।

**गोपः ग्रामम् अजां नयति।** अत्र वाक्ये नयतिधातोः प्रयोगः अस्ति। गोपः कर्ता अस्ति। अजा मुख्यकर्म अस्ति। ग्रामः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र नयतिधातोः देशान्तरसंयोगानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः गोपः अतः सः कर्ता। संयोगरूपफलाश्रयत्वात् अजायाः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। ग्रामस्य तु कर्मद्वाराफलाश्रयत्वात् अधिकरणसंज्ञा प्राप्ता। किन्तु यदा अधिकरणत्वेन अविवक्षा क्रियते तदा सः अधिकरणत्वेन रूपेण अविवक्षितः भवति। अपि च सः अजारूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य ग्रामस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च **गोपः ग्रामम् अजां नयति** इति प्रयोगः सिध्यति।

**गोपः ग्रामम् अजां हरति।** अत्र वाक्ये हरतिधातोः प्रयोगः अस्ति। गोपः कर्ता अस्ति। अजा मुख्यकर्म अस्ति। ग्रामः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र हरतिधातोः हरणानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः गोपः अस्ति। अतः सः कर्ता। हरणरूपफलाश्रयत्वात् अजायाः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। ग्रामस्य तु कर्मद्वाराफलाश्रयत्वात् अधिकरणसंज्ञा प्राप्ता। किन्तु यदा अधिकरणत्वेन अविवक्षा क्रियते तदा सः अधिकरणत्वेन रूपेण अविवक्षितः भवति। अपि च सः अजारूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य ग्रामस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च **गोपः ग्रामम् अजां हरति** इति प्रयोगः सिध्यति।

**गोपः ग्रामम् अजां कृषति।** अत्र वाक्ये कृषतिधातोः प्रयोगः अस्ति। गोपः कर्ता अस्ति। अजा मुख्यकर्म अस्ति। ग्रामः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र कृषतिधातोः कर्षणानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः गोपः अतः सः कर्ता। कर्षणरूपफलाश्रयत्वात् अजायाः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। ग्रामस्य तु



कर्मद्वाराफलाश्रयत्वात् अधिकरणसंज्ञा प्राप्ता। किन्तु यदा अधिकरणत्वेन अविवक्षा क्रियते तदा सः अधिकरणत्वेन रूपेण अविवक्षितः भवति। अपि च सः अजारूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य ग्रामस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च **गोपः ग्रामम् अजां कृषति** इति प्रयोगः सिध्यति।

**गोपः ग्रामम् अजां वहति।** अत्र वाक्ये वहतिधातोः प्रयोगः अस्ति। गोपः कर्ता अस्ति। अजा मुख्यकर्म अस्ति। ग्रामः गौणकर्म अस्ति। इति वाक्यस्य स्थितिः। गौणकर्म एवैतत्सूत्रस्य लक्ष्यं भवति। अतः तत्रैव सूत्रार्थस्य समन्वयः प्रस्तूयते।

तथाहि - अत्र वहतिधातोः वहनानुकूलव्यापारः अर्थः। एतादृशव्यापाराश्रयः गोपः अतः सः कर्ता। वहनरूपफलाश्रयत्वात् अजायाः कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति। ग्रामस्य तु कर्मद्वाराफलाश्रयत्वात् अधिकरणसंज्ञा प्राप्ता। किन्तु यदा अधिकरणत्वेन अविवक्षा क्रियते तदा सः अधिकरणत्वेन रूपेण अविवक्षितः भवति। अपि च सः अजारूपमुख्यकर्मणा सह सम्बद्धः अपि अस्ति। अतस्तस्य ग्रामस्य अकथितं चेति प्रकृतसूत्रेण कर्मसंज्ञा भूत्वा कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। ततश्च **गोपः ग्रामम् अजां वहति** इति प्रयोगः सिध्यति।

**अत्रायं विशेषः -** अथ एककर्मकाणां धातूनां प्रयोगकाले चैत्रः ग्रामं गच्छति इत्यादौ यदा कर्मणि प्रत्ययः क्रियते तदा कर्मणः उक्तत्वात् ततः प्रथमा भवति। कर्तुः अनभिहितत्वात् ततः तृतीया भवति। ततश्च चैत्रेण ग्रामः गम्यते इत्यादिप्रयोगाः भवन्ति। परन्तु गोपः गां पयः दोग्धि इत्यादौ द्विकर्मकधातुप्रयोगकाले कर्मणि प्रत्ययः भविष्यति चेद् अत्र तु कर्मद्वयं वर्तते तर्हि द्वयोर्मध्ये किं कर्म उक्तं भविष्यति इति चेद् उच्यते। कर्मद्विविधं भवति गौणं कर्म प्रधानं कर्म चेति। यस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति तत्प्रधानं कर्म इत्युच्यते। यस्य च अकथितं चेति सूत्रेण कर्मसंज्ञा भवति तत् गौणं कर्म इत्युच्यते। एवञ्च दुह् याच् पच् दण्ड् रुद् प्रच्छ चिञ् ब्रुञ् शास् जि मथ् मुष् इति एतेभ्यः द्वादशभ्यः धातुभ्यः गौणे कर्मणि कर्मप्रत्ययः भवति। णीञ् हृ कृष् वह् इति चतुर्भ्यः एतेभ्यः धातुभ्यः प्रधाने कर्मणि कर्मप्रत्ययः भवति।

**अर्थनिबन्धना इयं संज्ञा -** अस्मिन् सूत्रव्याख्याने षोडश धातवः द्विकर्मकाः इति प्रदर्शितम्। परन्तु येषां धातूनाम् अर्थः एतत् -षोडशधातुतुल्यः अस्ति, तेषामपि धातूनाम् द्विकर्मकत्वं भवति। तेन बलिं वसुधां भिक्षते इत्यादिप्रयोगः सम्भवति।

अत्र चतुरश्रे दुह्यादीनाम् द्वादशधातूनाम् कर्तरि कर्मणि प्रयोगः प्रदर्शितः -

| कर्तरि प्रयोगः | कर्मणि प्रयोगः |
|---|---|
| गोपः **गां** पयः दोग्धि | गोपेन **गौः** पयः दुह्यते |
| वामनः **बलिं** वसुधां याचते। | वामनेन **बलिः** वसुधां याच्यते। |
| पाचकः **तण्डुलान्** ओदनं पचति | पाचकेन **तण्डुलाः** ओदनं पच्यन्ते। |



| राजा **गर्गान्** शतं दण्डयति | राज्ञा **गर्गाः** शतं दण्ड्यन्ते |
|---|---|
| कृष्णः **व्रजं** गाम् अवरुणद्धि | कृष्णेन **व्रजः** गाम् अवरुध्यते |
| पथिकः **माणवकं** पन्थानं पृच्छति | पथिकेन **माणवकः** पन्थानं पृच्छयते |
| जनः **वृक्षं** फलानि अवचिनोति | जनेन **वृक्षः** फलानि अवचीयते |
| गुरुः **माणवकं** धर्मं ब्रूते | गुरुणा **माणवकः** धर्मम् उच्यते |
| गुरुः **माणवकं** धर्मं शास्ति | गुरुणा **माणवकः** धर्मं शिष्यते |

अत्र चतुरश्रे नीहृ -कृष् -वहाम् चतुर्णां धातूनाम् कर्तरि कर्मणि प्रयोगः प्रदर्शितः -

| कर्तरि प्रयोगः | कर्मणि प्रयोगः |
|---|---|
| गोपः **अजां** ग्रामं नयति | गोपेन **अजा** ग्रामं नीयते |
| गोपः **अजां** ग्रामं हरति | गोपेन **अजा** ग्रामं ह्रियते |
| गोपः **अजां** ग्रामं कृषति | गोपेन **अजा** ग्रामं कृष्यते |
| गोपः **अजां** ग्रामं वहति | गोपेन **अजा** ग्रामं उह्यते |

## [२१.२] गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ॥ (१.४.५२)

**सूत्रार्थः** - गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां शब्दकर्मणाम् अकर्मकाणाम् च प्रयोगे अनुत्पन्ने णिचि यः कर्ता सः णिचि उत्पन्ने सति कर्मसंज्ञः स्यात्।

**सूत्रावतरणम्** - संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम् चेति। एतेषु कर्म किं भवति इति प्रतिपादयितुं बहूनि सूत्राणि प्रणीतानि पाणिनिना। तेषु इदम् अन्यतमम् सूत्रम्।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां कर्मसंज्ञां च करोति। सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम् इति षष्ठीबहुवचनान्तं पदम्। अणिकर्ता इति प्रथमैकवचनान्तं पदम्। स इति प्रथमैकवचनान्तं पदम्। णौ इति सप्तमीबहुवचनान्तं पदम्। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम् इति पदं समस्तमस्ति। गतिश्च बुद्धिश्च प्रत्यवसानञ्च इति गतिबुद्धिप्रत्यवसानानि, अत्र इतरेतरयोगद्वन्द्वसमासः। गतिबुद्धिप्रत्यवसानानि अर्थाः येषां ते गतिबुद्धिप्रत्यवसानार्थाः, अत्र बहुव्रीहिसमासः। शब्दः कर्म येषां ते शब्दकर्माणः, अत्र बहुव्रीहिसमासः वर्तते। न विद्यते कर्म येषां ते अकर्मकाः, अत्रापि बहुव्रीहिसमासः। गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्च इति गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाः तेषां

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम् इति अत्र द्वन्द्वसमासः। एवञ्चास्य पदस्यार्थो भवति गत्यर्थकानाम्, ज्ञानार्थकानाम्, प्रत्यवसानार्थकानाम् शब्दकर्मणाम्, अकर्मकाणाम् इति। अत्र प्रत्यवसानशब्दस्यार्थो भवति भक्षणम्। अणिकर्ता इति पदमपि समस्तमस्ति। न णिः इति अणिः, अणेः कर्ता इति अणिकर्ता, अत्र नञ्तत्पुरुषगर्भषष्ठीतत्पुरुषसमासः।

**सूत्रार्थविचारः -** गत्यर्थकानां बुद्ध्यर्थकानां प्रत्यवसानार्थकानां शब्दकर्मणाम् अकर्मकाणां च धातूनाम् अणिकर्ता णौ कारकसंज्ञः सन् कर्मसंज्ञः भवति इति वाक्ययोजना। अत्र अणिकर्ता इति पदस्य अनुत्पन्ने णिचि यः कर्ता स एव अणिकर्ता इत्युच्यते। णौ इत्यस्य उत्पन्ने णिचि इत्यर्थः। एवञ्च सूत्रार्थो भवति - गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां शब्दकर्मणाम् अकर्मकाणाम् च प्रयोगे अनुत्पन्ने णिचि यः कर्ता सः णिचि उत्पन्ने सति कारकसंज्ञः सन् कर्मसंज्ञः स्यात् इति प्रतिफलति।

**उदाहरणम् -** माता बालं विद्यालयं गमयति। गुरुः शिष्यं वेदं वेदयति। माता शिशुं तण्डुलं भोजयति। गुरुः शिष्यं वेदं पाठयति। युवा वृद्धं स्थापयति।

**सूत्रार्थसमन्वयः -**

**माता बालं विद्यालयं गमयति।** इदं गत्यर्थकधातुयुक्तमुदाहरणमस्ति। एतस्य उदाहरणस्य सिद्धिः इत्थम् - अत्र बालः विद्यालयं गच्छति इति वाक्यम्। अत्र अण्यन्तस्य शुद्धस्य गमिधातोः प्रयोगः अस्ति। तस्य च संयोगानुकूलव्यापारः अर्थः। तत्र संयोगानुकूलव्यापाराश्रयत्वात् बालः कर्ता भवति। तस्य उक्तत्वेन ततः प्रथमा। संयोगरूपफलाश्रयत्वात् विद्यालयः कर्म भवति। तस्य चानुक्तत्वेन ततः द्वितीया। तेन बालः विद्यालयं गच्छति इति प्रयोगः भवति। अत्र च बालः अनुत्पन्ने णिचि कर्ता अस्ति। अतः स अणिकर्ता अस्ति। यदा गम् -धातोः णिच् -प्रत्ययः भवेत् तदा अस्य बालस्य प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च बालात् द्वितीया भविष्यति। तदा माता बालं विद्यालयं गमयति इति प्रयोगः भवति। अर्थात् बालः विद्यालयं गच्छति, तं माता प्रेरयति इति माता बालं विद्यालयं गमयति इति प्रयोगः सिद्ध्यति।

**गुरुः शिष्यं वेदं वेदयति।** इदं ज्ञानार्थकधातुयुक्तमुदाहरणमस्ति। एतस्य उदाहरणस्य सिद्धिः कथं भवति इति चेद् उच्यते। अत्र शिष्यः वेदं वेत्ति इति वाक्यम्। अत्र वाक्ये अण्यन्तस्य शुद्धस्य विदिधातोः प्रयोगो वर्तते। तस्य च ज्ञानानुकूलव्यापारः अर्थः। तत्र ज्ञानानुकूलव्यापारस्य आश्रयः शिष्यः। अतस्तस्य कर्तृसंज्ञा भवति। तस्य च उक्तत्वेन ततः प्रथमा विभक्तिः भवति। ज्ञानरूपफलस्य आश्रयः वेदः अस्ति। अतस्तस्य कर्मसंज्ञा भवति, तस्य अनुक्तत्वेन ततः द्वितीया भवति। एवञ्च शिष्यः वेदं वेत्ति इति प्रयोगो भवति। अत्र च शिष्यः अनुत्पन्ने णिचि कर्ता अस्ति। अतः स अणिकर्ता अस्ति। यदा विद् -धातोः णिच् -प्रत्ययः भवेत् तदा अस्य शिष्यस्य प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च शिष्यात् द्वितीया भविष्यति। तदा गुरुः शिष्यं वेदं वेदयति इति प्रयोगो भवति। शिष्यः वेदं वेत्ति, तं गुरुः प्रेरयति, इति गुरुः शिष्यं वेदं वेदयति इति प्रयोगः सिद्ध्यति।

**माता शिशुं तण्डुलं भोजयति।** इदं भोजनार्थकधातुयुक्तम् उदाहरणम् अस्ति। एतस्य उदाहरणस्य सिद्धिः कथं भवति इति चेद् उच्यते। शिशुः ओदनं भुङ्क्ते इति वाक्यम्। अत्र अण्यन्तस्य शुद्धस्य भुजिधातोः प्रयोगो वर्तते। तस्य च गलबिलाधःसंयोगानुकूलव्यापारः अर्थः। तत्र

गलबिलाधःसंयोगानुकूलव्यापारस्य आश्रयः शिशुः अस्ति। अतस्तस्य कर्तृसंज्ञा भवति, तस्योक्तत्वेन च ततः प्रथमा भवति। गलबिलाधःसंयोगरूपफलस्य आश्रयः तण्डुलः। अतस्तस्य कर्मसंज्ञा भवति। तस्यानुक्तत्वेन च ततः द्वितीया भवति। एवञ्च शिशुः तण्डुलं भुङ्क्ते इति प्रयोगो भवति। अत्र च शिशुः अनुत्पन्ने णिचि कर्ता अस्ति। अतः स अणिकर्ता अस्ति। यदा भुज् -धातोः णिच् -प्रत्ययः भवेत् तदा अस्य शिशोः प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च शिशोः द्वितीया भविष्यति। तेन माता शिशुम् तण्डुलं भोजयति इति प्रयोगः भवति। शिशुः तण्डुलं भुङ्क्ते, तं माता प्रेरयति, इति माता शिशुं तण्डुलं भोजयति इति प्रयोगः सिद्ध्यति।

**गुरुः शिष्यं वेदं पाठयति**। इदं शब्दकर्मकधातुयुक्तमुदाहरणम् अस्ति। एतस्य उदाहरणस्य सिद्धिः कथं भवति इति चेद् उच्यते। अत्र शिष्यः वेदं पठति इति वाक्यम्। अत्र वाक्ये अण्यन्तस्य शुद्धस्य पठिधातोः प्रयोगो वर्तते। तस्य ज्ञानानुकूलव्यापारः अर्थः। तत्र ज्ञानानुकूलव्यापारस्य आश्रयः शिष्यः। अतस्तस्य कर्तृसंज्ञा भवति। तस्य च उक्तत्वेन ततः प्रथमा विभक्तिः भवति। ज्ञानरूपफलस्य आश्रयः वेदः अस्ति। अतस्तस्य कर्मसंज्ञा भवति। तस्य अनुक्तत्वेन ततः द्वितीया भवति। एवञ्च शिष्यः वेदं पठति इति प्रयोगो भवति। अत्र च शिष्यः अनुत्पन्ने णिचि कर्ता अस्ति। अतः सः अणिकर्ता अस्ति। यदा पठ् -धातोः णिच् -प्रत्ययः भवेत् तदा अस्य शिष्यस्य प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च शिष्यात् द्वितीया भविष्यति। तदा गुरुः शिष्यं वेदं पाठयति इति प्रयोगो भवति। अर्थात् शिष्यः वेदं पठति, तं गुरुः प्रेरयति, इति गुरुः शिष्यं वेदं पाठयति इति प्रयोगः सिद्ध्यति।

अत्रेदं बोध्यम् - शब्दकर्म इति शब्दस्य अर्थो भवति - शब्दः कर्म कारकम् यस्य धातोः स धातुः शब्दकर्मा। यथा प्रकृतोदाहरणे पठ् -धातोः कर्म भवति वेदः। वेदः च शब्दराशिविशेष एव।

**युवा वृद्धं स्थापयति।** इदम् अकर्मकधातुयुक्तम् उदाहरणम् अस्ति। तस्य उदाहरणस्य सिद्धिः कथं भवति इति चेद् उच्यते। वृद्धः तिष्ठति इति वाक्यम्। अत्र अण्यन्तस्य शुद्धस्य स्थाधातोः प्रयोगो वर्तते। तस्य च स्थित्यनुकूलव्यापारः अर्थः। तस्य आश्रयः वृद्धः। अतस्तस्य कर्तृसंज्ञा भवति। तस्योक्तत्वेन ततः प्रथमा भवति। तेन वृद्धः तिष्ठति इति प्रयोगः सिध्यति। अत्र च वृद्धः अनुत्पन्ने णिचि कर्ता अस्ति। अतः सः अणिकर्ता अस्ति। यदा स्था -धातोः णिच् -प्रत्ययः भवेत् तदा अस्य वृद्धस्य प्रकृतसूत्रेण कर्मसंज्ञा भवति। ततश्च वृद्धाद् द्वितीया भविष्यति। ततश्च युवा वृद्धं स्थापयति इति प्रयोगः भवति। अर्थात् वृद्धः तिष्ठति, तं युवा प्रेरयति, इति युवा वृद्धं स्थापयति इति प्रयोगः सिद्ध्यति।

**अत्रायं विशेषः** - गत्यर्थकानां धातूनां ज्ञानार्थकानां धातूनां भक्षणार्थकानां धातूनां शब्दकर्मकाणां धातूनाम् अकर्मकाणां च धातूनां प्रयोगे एव प्रयोज्यकर्तुः कर्मसंज्ञा गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इति सूत्रेण क्रियते। अन्यधातूनां प्रयोगे तु प्रयोज्यकर्तुः कर्तृसंज्ञा एव भवति। ततश्च तेषां प्रयोगे काले प्रयोज्यकर्तृवाचकशब्दात् तृतीयाविभक्तिः भवति। यथा चैत्रः मैत्रेण तण्डुलं पाचयति इत्यादौ बोध्यम्।

**अत्रायञ्चापि विशेषः** - अथ एककर्मकाणां धातूनां प्रयोगकाले चैत्रः मैत्रेण तण्डुलं पाचयति इत्यादौ यदा कर्मणि प्रत्ययः क्रियते तदा कर्मणः उक्तत्वात् ततः प्रथमा भवति। कर्तुः अनभिहितत्वात्

ततः तृतीया भवति। ततश्च चैत्रेण मैत्रेण तण्डुलः पच्यते इत्यादिप्रयोगाः भवन्ति। परन्तु माता बालकं विद्यालयं गमयति इत्यादौ द्विकर्मकधातुप्रयोगकाले यदि कर्मणि प्रत्ययः भविष्यति एवञ्च अत्र कर्मद्वयं वर्तते तर्हि द्वयोर्मध्ये किं कर्म उक्तं भविष्यति इति चेद् उच्यते। कर्मद्विविधं भवति गौणं कर्म प्रधानं कर्म चेति। यस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मसंज्ञा भवति तत्प्रधानं कर्म इत्युच्यते। यस्य च गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इति सूत्रेण कर्मसंज्ञा भवति तत् गौणं कर्म इत्युच्यते। एवञ्च ज्ञानार्थकधातूनां भक्षणार्थकधातूनां शब्दकर्मकधातूनां च प्रयोगकाले स्वेच्छया गौणे कर्मणि प्रधाने कर्मणि वा कर्मप्रत्ययाः भवन्ति। अकर्मकधातूनां गत्यर्थकधातूनां वा प्रयोगकाले गौणे कर्मणि कर्मप्रत्ययाः भवन्ति।

तथाहि कारिका -

**बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया।**
**प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।।**

अधः चतुरश्रे सूत्रोक्तानां धातूनां कर्तरि कर्मणि वाक्यानि प्रदर्शितानि -

| कर्तरि प्रयोगः | कर्मणि प्रयोगः |
|---|---|
| गुरुः शिष्यं वेदं वेदयति | गुरुणा शिष्यः वेदं वेद्यते / गुरुणा शिष्यं वेदः वेद्यते |
| माता शिशुं तण्डुलं भोजयति | मात्रा शिशुः तण्डुलं भोज्यते / मात्रा शिशुं तण्डुलः भोज्यते |
| गुरुः शिष्यं वेदं पाठयति | गुरुणा शिष्यः वेदं पाठ्यते / गुरुणा शिष्यं वेदः पाठ्यते |
| युवा वृद्धं स्थापयति | यूना वृद्धः स्थाप्यते |
| माता बालं विद्यालयं गमयति | मात्रा बालः विद्यालयं गम्यते |

कर्तृकरणयोस्तृतीया (अनभिहिते/अनुक्ते कर्तरि ३)

गति - २ | नी वह - ३ | नियन्तृकर्तृक वह - २

प्रत्यवसान - २ | आदि खाद - ३ | भक्ष अहिंसार्थकः - ३

बुद्ध्यर्थक, शब्दकर्मक, अकर्मक, जल्पतिप्रभृति, दृश् - २

हृ, कृ, अभि+वद्+णिच्+आ.प, दृश्+णिच्+आ.प. - २/३

## पाठसारः

अस्मिन् पाठे अकथितं च इति सूत्रस्य व्याख्या वर्तते। अनेन सूत्रेण अपादानत्वादिविशेषरूपेण अविवक्षितस्य कारकस्य कर्मसंज्ञा क्रियते। किन्तु इदं सूत्रं सर्वत्र नैव प्रवर्तते। तत् केवलं षोडशधातूनां प्रयोगे तत्तुल्यार्थकानां धातूनां च प्रयोगे एव प्रवर्तते। अनेन सूत्रेण यस्य कर्मसंज्ञा भवति तत् गौणं कर्म अविवक्षितं कर्म इति वा उच्यते। यदि अपादानादिरूपेण विवक्षा स्यात् तर्हि कर्म संज्ञा न भवति, अपादानादिसंज्ञा एव भवन्ति।

ततः परं गतिबद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इति सूत्रस्य व्याख्या वर्तते। अनेन सूत्रेण प्रयोज्यकर्तुः कर्मसंज्ञा क्रियते। किन्तु इदमपि सूत्रं न हि सर्वत्र प्रवर्तते, अपि तु गत्यर्थानां ज्ञानार्थकानां भक्षणार्थकानां शब्दकर्मकाणाम् अकर्मकाणां च धातूनां प्रयोगकाले एव प्रवर्तते। अनेन सूत्रेण यस्य कर्मसंज्ञा भवति तदपि गौणं कर्म प्रयोज्यं कर्म इति वा उच्यते। अन्येषां धातूनां प्रयोगे तु प्रयोज्यस्य कर्तृसंज्ञा एव तिष्ठति।

एवम् उभयत्र यदि कर्मणि प्रत्ययः विधीयते तदा कतरत् कर्म उक्तं भवति इत्यपि विषयः सोदाहरणम् उपन्यस्तः।

## पाठगतप्रश्नाः

१. अकथितं च इति सूत्रं किं करोति।
२. अकथितम् इति पदस्य कः अर्थः।
३. प्रत्यवसानम् इत्यस्य कः अर्थः।
४. शब्दकर्मा इत्यत्र कः समासः।
५. अकर्मकाः इति पदे कः समासः।
६. गतिबुद्धिप्रत्यवसानार्थाः इत्यत्र कः समासः, कश्च विग्रहः।
७. दुह्यादिधातूनां कस्मिन् कर्मणि कर्मप्रत्ययः भवति।
८. नीधातोः कस्मिन् कर्मणि कर्मप्रत्ययः भवति।
९. गौणं कर्म किं भवति।
१०. प्रधानं कर्म किं भवति।

## पाठान्तप्रश्नाः

१. अकथितं च इति सूत्रस्य व्याख्या कार्या।
२. गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इति सूत्रं व्याख्यात।

३. गोपः गां पयः दोग्धि इति वाक्यस्य सिद्धिं प्रदर्शयन्तु।
४. माता बालं विद्यालयं गमयति इति वाक्यस्य सिद्धिं लिखन्तु।
५. गुरुः शिष्यं धर्मं ब्रूते इति वाक्यस्य सिद्धिप्रक्रियां लिखत।
६. युवा वृद्धं स्थापयति इति वाक्यस्य सिद्धिप्रक्रियां लिखत।
७. गोपः अजां ग्रामं नयति इति वाक्यस्य सिद्धिप्रक्रियां लिखन्तु।
८. द्विकर्मधातूनां प्रयोगे कर्मवाच्ये कथं व्यवस्था भवति इति लिखन्तु।

## पाठगतप्रश्नोत्तराणि

१. अकथितं च इति सूत्रं कर्मसंज्ञां करोति।
२. अकथितम् इति पदस्य अविवक्षितम् अर्थः।
३. प्रत्यवसानम् इत्यस्य भक्षणम् इति अर्थः।
४. शब्दकर्मा इत्यत्यत्र बहुव्रीहिसमासः। तस्य च विग्रहः शब्दः कर्म यस्य स शब्दकर्मा।
५. अकर्मकाः इति पदे बहुव्रीहिसमासः। तस्य च विग्रहः न विद्यते कर्म येषां ते अकर्मकाः।
६. अत्र द्वन्द्वगर्भबहुव्रीहिसमासः। तस्य च विग्रहः गतिश्च बुद्धिश्च प्रत्यवसानञ्च इति गतिबुद्धिप्रत्यवसानानि। गतिबुद्धिप्रत्यवसानानि अर्थाः येषां ते गतिबुद्धिप्रत्यवसानार्थाः।
७. दुह्यादिधातूनां गौणे कर्मणि कर्मप्रत्ययः भवति।
८. नीधातोः प्रधाने कर्मणि कर्मप्रत्ययः भवति।
९. अकथितं च इति सूत्रेण गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इति सूत्रेण वा यस्य कर्मसंज्ञा भवति तद् गौणं कर्म भवति।
१०. कर्तुरीप्सिततमं कर्म इति सूत्रेण यस्य कर्मसंज्ञा भवति तत् प्रधानं कर्म भवति।

।।इति एकविंशः पाठः।।

# २२

# कारकविभक्ती तृतीया चतुर्थी च

## प्रस्तावना

संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणं, सम्प्रदानम्, अपादानम्, अधिकरणं चेति। तत्र इतः पूर्वोक्तेषु पाठेषु कर्मकारकविषये पठितम्। अस्मिन् पाठे कर्तृकारकविषये करणकारकविषये सम्प्रदानकारकविषये विवेचनं क्रियते। पुनः कर्तरि करणे सम्प्रदाने च का का विभक्तिः भवति इति प्रस्तूयते।

## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- कर्तृसंज्ञा कस्य करणसंज्ञा च कस्य भवति इति बोद्धुं शक्नुयात्।
- सम्प्रदानसंज्ञा कस्य भवति इति ज्ञातुं प्रभवेत्।।
- वाक्येषु कः कर्ता किं करणं किं सम्प्रदानम् इति ज्ञातुं प्रभवेत्।
- वाक्यरचनाकाले कर्तृतृतीयायाः करणतृतीयायाः च सम्यग् व्यवहारं कर्तुं पारयेद्।
- वाक्यरचनाकाले सम्प्रदानचतुर्थ्याः सम्यग् व्यवहारं कर्तुं पारयेद्।

## [२२.१] स्वतन्त्रः कर्ता॥ (१.४.५४)

**सूत्रार्थः** - धात्वर्थव्यापाराश्रयः कारकसंज्ञः सन् कर्तृसंज्ञः भवति।

**सूत्रावतरणम्** - संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणं, सम्प्रदानम्, अपादानम्, अधिकरणं चेति। एतेषु कर्ता कः भवति इति प्रतिपादयितुं स्वतन्त्रः कर्ता इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां कर्तृसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। स्वतन्त्रः इति प्रथमैकवचनान्तं पदम्। कर्ता इति प्रथमैकवचनान्तं पदम्। कारके इति अधिकारः अत्र आगच्छति। तस्य च कारकम् इत्यर्थः। अत्र स्वतन्त्रः इति पदस्य धात्वर्थव्यापाराश्रयः इत्यर्थः।

स्वतन्त्रः कारकसंज्ञः सन् कर्तृसंज्ञः भवति इति वाक्ययोजना। तत्र स्वतन्त्रः इत्यस्य धातुवाच्यव्यापाराश्रयः इत्यर्थः वर्तते एवञ्च सूत्रार्थो भवति धात्वर्थव्यापाराश्रयः कारकसंज्ञः सन् कर्तृसंज्ञः भवति।

**उदाहरणम् -** चैत्रेण गम्यते। मैत्रेण पच्यते। छात्रेण लिख्यते।

**सूत्रार्थसमन्वयः -**

**चैत्रेण गम्यते**। अस्मिन् वाक्ये चैत्रः कर्ता अस्ति। तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि - अस्मिन् वाक्ये गम् इति धातुः वर्तते। तस्य अर्थः गमनरूपः व्यापारः। गमनस्य आश्रयः सः एव भवति, यः गमनं करोति। प्रकृतवाक्यानुसारं च चैत्रः गमनं करोति, अतः गमनस्य आश्रयः चैत्रः भवति। एवञ्च इदं सिद्धं भवति यत् धात्वर्थव्यापाराश्रयः चैत्रः वर्तते। अतः चैत्रः स्वतन्त्रः। अतः स्वतन्त्रः कर्ता इति सूत्रेण चैत्रस्य कारकसंज्ञा भवति ततः कर्तृसंज्ञा च भवति।

**मैत्रेण पच्यते**। अस्मिन् वाक्ये मैत्रः कर्ता अस्ति। तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अस्मिन् वाक्ये पच् इति धातुः वर्तते। तस्य अर्थ पचनरूपः व्यापारः। पचनस्य आश्रयः सः एव भवति यः पचनं करोति। प्रकृतवाक्यानुसारं च मैत्रः पचनं करोति। अतः पचनस्य आश्रयः मैत्रः। एतेन इदं सिद्धं भवति यत् धात्वर्थव्यापाराश्रयः मैत्रः अस्ति। अतः मैत्रः स्वतन्त्रः। अतः मैत्रस्य स्वतन्त्रः कर्ता इति सूत्रेण कारकसंज्ञा भवति कर्तृसंज्ञा च भवति।

**छात्रेण लिख्यते**। अस्मिन् वाक्ये छात्रः कर्ता अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अस्मिन् वाक्ये लिख् इति धातुः वर्तते। तस्य अर्थः लेखनरूपः व्यापारः भवति। लेखनस्य च आश्रयः सः एव भवति यः लेखनं करोति। प्रकृतवाक्यानुसारं च छात्रः लेखनं करोति। अतः लेखनस्य आश्रयः छात्रः अस्ति। एतेन इदं सिद्धं भवति यत् धात्वर्थव्यापाराश्रयः छात्रः अस्ति। अतः छात्रः स्वतन्त्रः। अतः छात्रस्य स्वतन्त्रः कर्ता इति सूत्रेण कारकसंज्ञा कर्तृसंज्ञा च भवति।

## [२२.२] साधकतमं करणम्॥ (१.४.४२)

**सूत्रार्थः -** क्रियायाः प्रकृष्टोपकारकं कारकसंज्ञं सत् करणसंज्ञं भवति।

**सूत्रावतरणम् -** षट्सु कारकेषु करणं किं भवति इति प्रतिपादयितुं साधकतमं करणम् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या -** इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां करणसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। साधकतमम् इति प्रथमैकवचनान्तं पदम्। करणम् इति प्रथमैकवचनान्तं पदम्। कारकम् इति अधिकारः अत्र आगच्छति। साधकतमं कारकसंज्ञं सत् करणसंज्ञं भवति इति वाक्ययोजना। अत्र साधकतमम् इति पदस्य प्रकृष्टोपकारकम् इत्यर्थः। एवञ्च सूत्रार्थो भवति - प्रकृष्टोपकारकं कारकसंज्ञं सत् करणसंज्ञं भवति। अत्र जिज्ञासा भवति कस्य प्रकृष्टोपकारकम् इति चेद् अत्र क्रियायाः एव प्रकृष्टोपकारकं स्वीकार्यम्। एवञ्च निष्कृष्टार्थः समायाति - क्रियायाः प्रकृष्टोपकारकं कारकसंज्ञं सत् करणसंज्ञं भवति। क्रियायाः फलस्य निष्पत्तिः यस्य व्यापाराद् अनन्तरम् भवति इति विवक्ष्यते तद् प्रकृष्टोपकारकमिति कथ्यते।

**उदाहरणम् -** चैत्रः यानेन ग्रामं गच्छति। मैत्रः अग्निना तण्डुलं पचति। छात्रः लेखन्या प्रबन्धं लिखति।

**सूत्रार्थसमन्वयः -**

**चैत्रः यानेन ग्रामं गच्छति**। अस्मिन् वाक्ये यानं करणम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र गमनरूपा क्रिया वर्तते। तज्जन्यं फलम् भवति चैत्रस्य ग्रामेण सह संयोगरूपं फलम्। तस्य च निष्पत्तिः यानस्य व्यापाराद् अनन्तरम् विवक्षिता। अतः यानम् प्रकृष्टोपकारकम् अस्ति। अतः यानम् साधकतमम्। अतः तस्य साधकतमं करणम् इति सूत्रेण कारकसंज्ञा भवति ततः करणसंज्ञा च भवति।

**मैत्रः अग्निना तण्डुलं पचति**। अस्मिन् वाक्ये अग्निः करणम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र पचनरूपा क्रिया। तज्जन्यं फलम् भवति तण्डुलानां पाकः, मृदुत्वम्। तदेव मृदुत्वम् विक्लित्तिः इति कथ्यते। तस्य च फलस्य निष्पत्तिः अग्नेः ज्वलनरूपव्यापाराद् अनन्तरं भवति इति विवक्षितम्। अतः अग्निः प्रकृष्टोपकारकः अस्ति। अतः अग्निः साधकतमः। अतः अग्नेः साधकतमं करणम् इति सूत्रेण कारकसंज्ञा भवति ततः करणसंज्ञा च भवति।

**छात्रः लेखन्या प्रबन्धं लिखति**। अस्मिन् वाक्ये लेखनी करणम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र लेखनरूपा क्रिया वर्तते। व्यापारः च हस्तचलनादिरूपः। तज्जन्यं फलम् अक्षरविन्यासः। तस्य च फलस्य निष्पत्तिः लेखनीव्यापाराद् अनन्तरं विवक्षिता। अतः लेखनी प्रकृष्टोपकारिका अस्ति। अतः लेखनी साधकतमा। अतः लेखन्याः साधकतमं करणम् इति सूत्रेण कारकसंज्ञा भवति ततः करणसंज्ञा च भवति।

## [२२.३] कर्तृकरणयोस्तृतीया॥ (२.३.१८)

**सूत्रार्थः** - अनुक्ते कर्तरि तृतीयाविभक्तिः भवति। अनुक्ते करणे च तृतीयाविभक्तिः भवति।

**सूत्रावतरणम्** - तत्र तावत् प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी इति एताः सप्त विभक्तयः सन्ति। तत्र एतासु मध्ये तृतीया कस्मिन् अर्थे भवति इति प्रतिपादयितुं कर्तृकरणयोस्तृतीया इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं तृतीयां विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। कर्तृकरणयोः इति सप्तमीद्विवचनान्तं पदम्। तृतीया इति प्रथमैकवचनान्तं पदम्। अनभिहिते इति अधिकारः अत्र आगच्छति। कर्तृकरणयोः इत्यत्र इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य विग्रहः भवति कर्ता च करणं च इति कर्तृकरणे, तयोः कर्तृकरणयोः। अनभिहितयोः कर्तृकरणयोः तृतीया भवति इति वाक्ययोजना। अत्र कर्तृकरणयोः इत्यस्य कर्तरि करणे च इत्यर्थः। तृतीया इत्यस्य तृतीयाविभक्तिः इत्यर्थः। अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। तेन च सूत्रार्थः भवति अनुक्ते कर्तरि तृतीयाविभक्तिः भवति। अनुक्ते करणे च तृतीयाविभक्तिः भवति।

**कर्तृतृतीयोदाहरणम्** - चैत्रेण ग्रामः गम्यते। मैत्रेण तण्डुलः पच्यते। छात्रेण प्रबन्धः लिख्यते।

**करणतृतीयोदाहरणम्** - चैत्रः यानेन ग्रामं गच्छति। मैत्रः अग्निना तण्डुलं पचति। छात्रः लेखन्या प्रबन्धं लिखति।

**कर्तृतृतीयोदाहरणेषु सूत्रार्थसमन्वयः -**

**चैत्रेण ग्रामः गम्यते**। अस्मिन् वाक्ये चैत्रः कर्ता अस्ति। सः च अनुक्तः अस्ति। यतोहि अयं कर्मणि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण गम् -धातोः विवक्षातः कर्मणि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्मणि एव। इत्थं कर्मणि प्रयोगे च कर्म उक्तं भवति, कर्ता अनुक्तः भवति। एवञ्च अनुक्ते कर्तरि चैत्रे कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। उक्ते कर्मणि च प्रथमा भवति। तेन च चैत्रेण ग्रामः गम्यते इति वाक्यं सिध्यति।

**मैत्रेण तण्डुलः पच्यते**। अस्मिन् वाक्ये मैत्रः कर्ता अस्ति। सः च अनुक्तः अस्ति। यतोहि अयं कर्मणि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण पच् -धातोः विवक्षातः कर्मणि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्मणि एव। इत्थं कर्मणि प्रयोगे च कर्म उक्तं भवति, कर्ता अनुक्तः भवति। एवञ्च अनुक्ते कर्तरि मैत्रे कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। उक्ते कर्मणि च प्रथमा भवति। तेन च मैत्रेण तण्डुलः पच्यते इति वाक्यं सिध्यति।

**छात्रेण प्रबन्धः लिख्यते।** अस्मिन् वाक्ये छात्रः कर्ता अस्ति। सः च अनुक्तः अस्ति। यतोहि अयं कर्मणि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण लिख् -धातोः विवक्षातः कर्मणि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्मणि एव। इत्थं कर्मणि प्रयोगे च कर्म उक्तं भवति, कर्ता अनुक्तः भवति। एवञ्च अनुक्ते कर्तरि छात्रे कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। उक्ते कर्मणि च प्रथमा भवति। तेन च छात्रेण प्रबन्धः लिख्यते इति वाक्यं सिध्यति।

**करणतृतीयोदाहरणेषु सूत्रार्थसमन्वयः -**

**चैत्रः यानेन ग्रामं गच्छति**। अस्मिन् वाक्ये यानम् करणम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण गम् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, करणादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते करणे कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। अनुक्ते कर्मणि द्वितीया। उक्ते कर्तरि च प्रथमा भवति। तेन च चैत्रः यानेन ग्रामं गच्छति इति वाक्यं सिध्यति।

**मैत्रः अग्निना तण्डुलं पचति**। अस्मिन् वाक्ये अग्निः करणम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण पच् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, करणादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते करणे कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। अनुक्ते कर्मणि द्वितीया। उक्ते कर्तरि च प्रथमा भवति। तेन च **मैत्रः अग्निना तण्डुलं पचति** इति वाक्यं सिध्यति।

**छात्रः लेखन्या प्रबन्धं लिखति।** अस्मिन् वाक्ये लेखनी करणम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण लिख् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे

च कर्ता उक्तः भवति, करणादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते करणे कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। अनुक्ते कर्मणि द्वितीया। उक्ते कर्तरि च प्रथमा भवति। तेन च **छात्रः लेखन्या प्रबन्धं लिखति** इति वाक्यं सिध्यति।

## [२२.४] कर्मणा यमभिप्रैति स सम्प्रदानम्॥ (१.४.३२)

**सूत्रार्थः** - कर्मसंज्ञकेन यं सम्बध्नाति सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति। अथवा कर्मसंज्ञकेन यं सम्बन्धुम् इच्छति सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां सम्प्रदानसंज्ञां च करोति। सूत्रेऽस्मिन् पञ्च पदानि सन्ति। कर्मणा इति तृतीयैकवचनान्तं पदम्। यम् इति द्वितीयैकवचनान्तं पदम्। अभिप्रैति इति तिङन्तं पदम्। सः इति प्रथमैकवचनान्तं पदम्। सम्प्रदानम् इति प्रथमैकवचनान्तं पदम्। कारके इति अधिकारः अत्र आगच्छति। तस्य च कारकम् इत्यर्थः। कर्मणा यम् अभिप्रैति सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति इति वाक्ययोजना। अत्र कर्मणा इत्यस्य कर्मसंज्ञकेन इत्यर्थः। अभिप्रैति इत्यस्य सम्बध्नाति इत्यर्थः, सम्बन्धुम् इच्छति इत्यर्थः वा। एवञ्च सूत्रार्थो भवति - कर्मसंज्ञकेन यं सम्बध्नाति सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति। अथवा कर्मसंज्ञकेन यं सम्बन्धुम् इच्छति सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

**उदाहरणम्** - राजा विप्राय धनं ददाति। गुरुः शिष्याय पुस्तकं ददाति। चैत्रः मैत्राय उत्तरं कथयति।

**सूत्रार्थसमन्वयः -**

**राजा विप्राय धनं ददाति।** अस्मिन् वाक्ये विप्रः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र कर्मसंज्ञकम् अस्ति धनम्। तेन कर्मसंज्ञकेन धनेन सह राजा विप्रं सम्बध्नाति, अथावा विप्रं सम्बन्धुम् इच्छति। अतः सः विप्रः कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रेण कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

**गुरुः शिष्याय पुस्तकं ददाति।** अस्मिन् वाक्ये शिष्यः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र कर्मसंज्ञकम् अस्ति पुस्तकम्। तेन कर्मसंज्ञकेन पुस्तकेन सह गुरुः शिष्यं सम्बध्नाति, अथावा शिष्यं सम्बन्धुम् इच्छति। अतः सः शिष्यः कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रेण कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

**चैत्रः मैत्राय उत्तरं कथयति।** अस्मिन् वाक्ये मैत्रः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र कर्मसंज्ञकम् अस्ति उत्तरम्। तेन कर्मसंज्ञकेन उत्तरेण सह चैत्रः मैत्रं सम्बध्नाति, अथावा मैत्रं सम्बन्धुम् इच्छति। अतः सः मैत्रः कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रेण कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

## [२२.५] रुच्यर्थानां प्रीयमाणः॥ (१.४.३३)

**सूत्रार्थः** - प्रीत्यर्थकानां धातूनां प्रयोगे प्रीत्याश्रयः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

**सूत्रव्याख्या -** इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां सम्प्रदानसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः।रुच्यर्थानाम् इति षष्ठ्येकवचनान्तं पदम्। प्रीयमाणः इति प्रथमैकवचनान्तं पदम्। अस्मिन् सूत्रे कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रात् सम्प्रदानम् इति अनुवर्तते। कारके इति अधिकारः अत्र आगच्छति। अस्मिन् सूत्रे रुच्यर्थानाम् इत्यत्र बहुव्रीहिसमासः अस्ति। अस्य च विग्रहः भवति रुचिः प्रीतिः अर्थः येषां ते रुच्यर्थाः तेषां रुच्यर्थानां धातूनाम्। **रुच्यर्थानां प्रीयमाणः** कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति इति वाक्ययोजना। अत्र रुच्यर्थानाम् इत्यस्य प्रीत्यर्थकानां धातूनाम् इत्यर्थः। प्रीयमाणः इत्यस्य प्रीत्याश्रयः इत्यर्थः। प्रयोगे इति पदस्य अध्याहारः क्रियते। एवञ्च सूत्रार्थो भवति - प्रीत्यर्थकानां धातूनां प्रयोगे प्रीत्याश्रयः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

अत्र कान्त्यर्थकस्य क्र्यादेः प्री -धातोः कर्मणि शानचि प्रीयमाणः इति पदं निष्पद्यते। यथा सुगन्धः जनं प्रीणाति, अनुकूलयति। सुगन्धेन जनः प्रीयते। तत्र प्रीधातोः शानचि वाक्यं भवति - सुगन्धेन जनः प्रीयमाणः अस्ति।

**उदाहरणम् -** शिवाय बिल्वपत्रं रोचते। गणेशाय मोदकः स्वदते।

**सूत्रार्थसमन्वयः -**

**शिवाय बिल्वपत्रं रोचते।** अस्मिन् वाक्ये शिवः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये प्रीत्यर्थकस्य रुच् इति धातोः प्रयोगः अस्ति। तस्मिन् प्रयोगे च प्रीतेः आश्रयः शिवः अस्ति। यतोहि बिल्वपत्रसम्बन्धिप्रीतिः शिवे वर्तते। एवञ्च प्रकृते प्रीत्यर्थकस्य रुचिधातोः प्रयोगे प्रीत्याश्रयस्य शिवस्य रुच्यर्थानां प्रीयमाणः इति सूत्रेण कारकसंज्ञा भूत्वा सम्प्रदानसंज्ञा भवति।

**गणेशाय मोदकः स्वदते।** अस्मिन् वाक्ये गणेशः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये प्रीत्यर्थकस्य स्वद् इति धातोः प्रयोगः अस्ति। तस्मिन् प्रयोगे च प्रीतेः आश्रयः गणेशः अस्ति। यतो हि मोदकसम्बन्धिप्रीतिः गणेशे वर्तते। एवञ्च प्रकृते प्रीत्यर्थकस्य स्वदिधातोः प्रयोगे प्रीत्याश्रयस्य गणेशस्य रुच्यर्थानां प्रीयमाणः इति सूत्रेण कारकसंज्ञा भूत्वा सम्प्रदानसंज्ञा भवति।

## [२२.६] क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः॥ (१.४.३७)

**सूत्रार्थः** - क्रोधार्थकानां द्रोहार्थकानाम् ईर्ष्यार्थकानाम् असूयार्थकानाम् च धातूनां प्रयोगे यं प्रति कोपः सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

**सूत्रव्याख्या** - इदम् संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां सम्प्रदानसंज्ञां च करोति।सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। क्रुधद्रुहेर्ष्यासूयार्थानाम् इति षष्ठीबहुवचनान्तं पदम्। अस्मिन् सूत्रे कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रात् सम्प्रदानम् इति अनुवर्तते। कारके इति अधिकारः अत्र आगच्छति। कारकम् इति तदर्थः। अत्र क्रुधद्रुहेर्ष्यासूयार्थानाम् इति पदे द्वन्द्वगर्भबहुव्रीहिसमासः अस्ति। अस्य च विग्रहः भवति क्रुधश्च द्रुहश्च ईर्ष्या च असूया च इति क्रुधद्रुहेर्ष्यासूयाः। क्रुधद्रुहेर्ष्यासूयाः अर्थाः येषां ते



क्रुधद्रुहेर्ष्यासूयार्थाः। तेषां क्रुधद्रुहेर्ष्यासूयार्थानाम्। एवञ्च **क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति इति वाक्ययोजना।** अत्र क्रुधद्रुहेर्ष्यासूयार्थानाम् इत्यस्य क्रोधार्थकानां द्रोहार्थकानाम् असूयार्थकानाम् ईर्ष्यार्थकानाम् च धातूनाम् इत्यर्थः। प्रयोगे इत्यस्य सः इति पदस्य च अध्याहारः क्रियते। एवञ्च सूत्रार्थो भवति क्रोधार्थकानां धातूनां प्रयोगे यं प्रति कोपः सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति। द्रोहार्थकानां धातूनां प्रयोगे यं प्रति कोपः सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति। ईर्ष्यार्थकानां धातूनां प्रयोगे यं प्रति कोपः सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति। असूयार्थकानां धातूनां प्रयोगे यं प्रति कोपः सः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति। अर्थात् यस्य धातोः अर्थः क्रोधः द्रोहः ईर्षा असूया इति अस्ति तस्य धातोः प्रयोगे यं प्रति कोपः अस्ति स कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवतीति।

क्रोधः अमर्षः। द्रोहः अपकारः। ईर्ष्या अक्षमा। असूया गुणेषु दोषाविष्करणम्।

**उदाहरणम् -** रावणः रामाय क्रुध्यति। कंसः कृष्णाय द्रुह्यति। कर्णः अर्जुनाय ईर्ष्यति। दुर्योधनः युधिष्ठिराय असूयति।

**सूत्रार्थसमन्वयः -**

**रावणः रामाय क्रुध्यति।** अस्मिन् वाक्ये रामः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये क्रोधार्थकस्य क्रुध् इति धातोः प्रयोगः अस्ति। तस्मिन् प्रयोगे च रावणस्य रामं प्रति कोपः अस्ति। अतः रामस्य क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः इति सूत्रेण कारकसंज्ञा भूत्वा सम्प्रदानसंज्ञा भवति।

**कंसः कृष्णाय द्रुह्यति।** अस्मिन् वाक्ये कृष्णः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये द्रोहार्थकस्य द्रुह् इति धातोः प्रयोगः अस्ति। तस्मिन् प्रयोगे च कंसस्य कृष्णं प्रति कोपः अस्ति। अतः कृष्णस्य क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः इति सूत्रेण कारकसंज्ञा भूत्वा सम्प्रदानसंज्ञा भवति।

**कर्णः अर्जुनाय ईर्ष्यति।** अस्मिन् वाक्ये अर्जुनः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये ईर्ष्यार्थकस्य ईर्ष्य् इति धातोः प्रयोगः अस्ति। तस्मिन् प्रयोगे च कर्णस्य अर्जुनं प्रति कोपः अस्ति। अतः अर्जुनस्य क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः इति सूत्रेण कारकसंज्ञा भूत्वा सम्प्रदानसंज्ञा भवति।

**दुर्योधनः युधिष्ठिराय असूयति।** अस्मिन् वाक्ये युधिष्ठिरः सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये असूयार्थकस्य असूय् इति धातोः प्रयोगः अस्ति। तस्मिन् प्रयोगे च दुर्योधनस्य युधिष्ठिरं प्रति कोपः अस्ति। अतः युधिष्ठिरस्य क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः इति सूत्रेण कारकसंज्ञा भूत्वा सम्प्रदानसंज्ञा भवति।

## [२२.७] स्पृहेरीप्सितः॥ (१.४.३६)

**सूत्रार्थः** - स्पृहिधातोः प्रयोगे इच्छाविषयः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।

**सूत्रव्याख्या** - इदम् संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञां सम्प्रदानसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। स्पृहेः इति षष्ठ्येकवचनान्तं पदम्। ईप्सितः इति प्रथमैकवचनान्तं पदम्। अस्मिन् सूत्रे कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रात् सम्प्रदानम् इति अनुवर्तते। कारके इति अधिकारः अत्र आगच्छति। तस्य च कारकम् इत्यर्थः। **स्पृहेः ईप्सितः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति इति वाक्ययोजना।** अत्र स्पृहेः इत्यस्य स्पृहिधातोः इत्यर्थः। ईप्सितः इत्यस्य इच्छाविषयः इत्यर्थः। प्रयोगे इति पदस्य अध्याहारः क्रियते। एवञ्च सूत्रार्थो भवति - **स्पृहिधातोः प्रयोगे इच्छाविषयः कारकसंज्ञः सन् सम्प्रदानसंज्ञः भवति।**

**उदाहरणम्** - विष्णुः पुष्पेभ्यः स्पृहयति।

**सूत्रार्थसमन्वयः** -

**विष्णुः पुष्पेभ्यः स्पृहयति।** अस्मिन् वाक्ये पुष्पम् सम्प्रदानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये स्पृह् इति धातोः प्रयोगः अस्ति। तस्मिन् प्रयोगे च इच्छाविषयः पुष्पम् अस्ति। एवञ्च स्पृहिधातोः प्रयोगे इच्छाविषयस्य पुष्पस्य स्पृहेरीप्सितः इति सूत्रेण कारकसंज्ञा भूत्वा सम्प्रदानसंज्ञा भवति।

## [२२.८] चतुर्थी सम्प्रदाने॥ (२.३.१३)

**सूत्रार्थः - अनुक्ते सम्प्रदाने चतुर्थी विभक्तिः भवति।**

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं चतुर्थीं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। सम्प्रदाने इति सप्तम्येकवचनान्तं पदम्। चतुर्थी इति प्रथमैकवचनान्तं पदम्। अनभिहिते इति अधिकारः अत्र आगच्छति। **अनभिहिते सम्प्रदाने चतुर्थी विभक्तिः भवति** इति वाक्ययोजना। अत्र सम्प्रदाने इत्यस्य सम्प्रदाने इत्यर्थः। चतुर्थी इत्यस्य चतुर्थी विभक्तिः इत्यर्थः। अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। तेन च सूत्रार्थः भवति - **अनुक्ते सम्प्रदाने चतुर्थी विभक्तिः भवति।**

**उदाहरणम्** - राजा विप्राय धनं ददाति। गुरुः शिष्याय पुस्तकं ददाति। पत्नी पत्ये शेते।

**सूत्रार्थसमन्वयः** -

**राजा विप्राय धनं ददाति।** अस्मिन् वाक्ये विप्रः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण दा -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने विप्रे सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च राजा विप्राय धनं ददाति इति वाक्यं सिध्यति।

**गुरुः शिष्याय पुस्तकं ददाति।** अस्मिन् वाक्ये शिष्यः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण दा -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता

उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने शिष्ये सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च गुरुः शिष्याय पुस्तकं ददाति इति वाक्यं सिध्यति।

**पत्नी पत्ये शेते।** अस्मिन् वाक्ये पतिः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण शी -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने पतौ सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च पत्नी पत्ये शेते इति वाक्यं सिध्यति।

**शिवाय बिल्वपत्रं रोचते।** अस्मिन् वाक्ये शिवः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण रुच् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने शिवे सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च शिवाय बिल्वपत्रं रोचते इति वाक्यं सिध्यति।

**गणेशाय मोदकः स्वदते।** अस्मिन् वाक्ये गणेशः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण स्वद् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने गणेशे सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च गणेशाय मोदकः स्वदते इति वाक्यं सिध्यति।

**रावणः रामाय क्रुध्यति।** अस्मिन् वाक्ये रामः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण क्रुध् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने रामे सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च रावणः रामाय क्रुध्यति इति वाक्यं सिध्यति।

**कंसः कृष्णाय द्रुह्यति।** अस्मिन् वाक्ये कृष्णः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण द्रुह् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने कृष्णे सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च कंसः कृष्णाय द्रुह्यति इति वाक्यं सिध्यति।

**कर्णः अर्जुनाय ईर्ष्यति।** अस्मिन् वाक्ये अर्जुनः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण ईर्ष्य् -धातोः

विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने अर्जुने सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च कर्णः अर्जुनाय ईर्ष्यति इति वाक्यं सिध्यति।

**दुर्योधनः युधिष्ठिराय असूयति।** अस्मिन् वाक्ये युधिष्ठिरः सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण असूय् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने युधिष्ठिरे सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च दुर्योधनः युधिष्ठिराय असूयति इति वाक्यं सिध्यति।

**विष्णुः पुष्पेभ्यः स्पृहयति।** अस्मिन् वाक्ये पुष्पम् सम्प्रदानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण स्पृह् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, सम्प्रदानादिकं च अनुक्तम् भवति। एवञ्च अनुक्ते सम्प्रदाने पुष्पेषु सम्प्रदाने चतुर्थी इति सूत्रेण चतुर्थी विभक्तिः भवति। उक्ते कर्तरि च प्रथमा भवति। तेन च विष्णुः पुष्पेभ्यः स्पृहयति इति वाक्यं सिध्यति।

## पाठगतप्रश्नाः

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१. स्वतन्त्रः इति पदस्य कः अर्थः।

२. स्वतन्त्रः कर्ता इति सूत्रेण किं विधीयते।

३. साधकतमम् इति पदस्य कः अर्थः।

४. साधकतमं करणम् इति सूत्रेण किं विधीयते।

५. स्पृहेरीप्सितः इति सूत्रे ईप्सितः इति पदस्य कः अर्थः।

६. अभिप्रैति इति पदस्य कः अर्थः।

७. कर्तृकरणयोस्तृतीया इति सूत्रं संज्ञासूत्रं विधिसूत्रं वा।

८. चतुर्थी सम्प्रदाने इति सूत्रं संज्ञासूत्रं विधिसूत्रं वा।

९. उक्ते कर्तरि करणे च का विभक्तिः भवति।

१०. उक्ते सम्प्रदाने का विभक्तिः भवति।

## पाठसारः

अस्मिन् पाठे कर्तृसंज्ञाविधयकस्य स्वतन्त्रः कर्ता इति सूत्रस्य व्याख्यानं वर्तते। तत्र स्वतन्त्रः इति धातुवाच्यव्यापाराश्रयः इत्यर्थः। ततः करणसंज्ञाविधायकस्य साधकतमं करणम् इति सूत्रस्य व्याख्यानं विहितम्। पुनः अनभिहिते कर्तरि करणे च तृतीयाविभक्तिविधायकस्य कर्तृकरणयोस्तृतीया इति सूत्रस्य व्याख्या वर्तते। ततः परं सम्प्रदानं संज्ञाविधायकानां कर्मणा यमभिप्रैति स सम्प्रदानम्, रुच्यर्थानां प्रीयमाणः, क्रुधद्रुहेर्ष्यासूयानां यं प्रति कोपः, स्पृरीप्सितः इत्यादिसूत्राणां व्याख्यानं विहितम्। ततः परं अनुक्ते सम्प्रदाने चतुर्थीविधायकस्य चतुर्थी सम्प्रदाने इति सूत्रस्य व्याख्या कृता।

## पाठान्तप्रश्नाः

१. स्वतन्त्रः कर्ता इति सूत्रस्य व्याख्या विधेया।
२. साधकतमं करणम् इति सूत्रस्य व्याख्यां लिखन्तु।
३. कर्तृकरणयोस्तृतीया इति सूत्रस्य व्याख्यां लिखत।
४. कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रस्य व्याख्यां कुरुत।
५. स्पृहेरीप्सितः इति सूत्रस्य व्याख्यां कुरु।
६. कर्मणा यमभिप्रैति सः सम्प्रदानम् इति सूत्रस्य व्याख्या कार्या।
७. चतुर्थी सम्प्रदाने इति सूत्रस्य व्याख्या लेख्या।
८. चैत्रेण गम्यते, चैत्रः अग्निना पच्यते इत्युभयोः प्रयोगयोः सिद्धिः लेख्या।
९. रावणः रामाय क्रुध्यति, विष्णुः पुष्पेभ्यः स्पृहयति इत्युभयोः प्रयोगयोः सिद्धिः लेख्या।
१०. राजा विप्राय धनं ददाति, चैत्रः मैत्राय वार्तां कथयति इत्युभयोः प्रयोगयोः सिद्धिः कार्या।

## पाठगतप्रश्नोत्तराणि

१. स्वतन्त्रः इति पदस्य व्यापाराश्रयः अर्थः।
२. स्वतन्त्रः कर्ता इति सूत्रेण कर्तृसंज्ञा विधीयते।
३. साधकतमम् इति पदस्य कः प्रकृष्टोपकारकम् इत्यर्थः।
४. साधकतमं करणम् इति सूत्रेण करणसंज्ञा विधीयते।
५. स्पृहेरीप्सितः इति सूत्रे ईप्सितः इत्यस्य इच्छाविषयः इत्यर्थः।।

६. अभिप्रैति इत्यस्य सम्बध्नाति इत्यर्थः, सम्बन्धुम् इच्छति इत्यर्थः वा।

७. कर्तृकरणयोस्तृतीया इति सूत्रं विधिसूत्रम्।

८. चतुर्थी सम्प्रदाने इति सूत्रं विधिसूत्रम्।

९. उक्ते कर्तरि करणे च प्रथमाविभक्तिः भवति।

१०. उक्ते सम्प्रदाने प्रथमाविभक्तिः भवति।

।।इति द्वाविंशः पाठः।।

२३

# कारकविभक्तौ पञ्चमी षष्ठी सप्तमी च।

## प्रस्तावना

संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणं, सम्प्रदानम्, अपादानम्, अधिकरणं चेति। तत्र इतः पूर्वोक्तेषु पाठेषु कर्मकारकविषये कर्तृकारकविषये करणकारकविषये सम्प्रदानकारकविषये च पठितम्। अस्मिन् पाठे अपादानविषये विवेचनं क्रियते। पुनः अपादाने का विभक्तिः भवति इति अत्र पाठे प्रस्तूयते।

कारकप्रकरणस्य आदितः पञ्चमीविभक्तिं यावत् पूर्वपाठेषु अनभिहिते कर्तरि तृतीया विभक्तिः भवति इति पठितम्। अनभिहिते कर्मणि च द्वितीया विभक्तिः भवति इति च पठितम्। किन्तु अनभिहिते कर्तरि कर्मणि च षष्ठी विभक्तिः अपि भवति। केन सूत्रेण कर्तरि कर्मणि च षष्ठी विभक्तिः भवति, कदा च भवति इति अस्मिन् पाठे प्रस्तूयते। तत्र कर्तरि कर्मणि षष्ठीविधायकानि अनेकसूत्राणि सन्ति। तेषु कर्तृकर्मणोः कृति, उभयप्राप्तौ कर्मणि, कृत्यानां कर्तरि वा इति त्रीणि सूत्राणि एव मुख्यानि सन्ति। अतः तेषाम् अत्र व्याख्यानं प्रस्तूयते। किञ्च कर्तृकर्मणोः कृति इति सूत्रस्य निषेधकं न लोकाव्ययनिष्ठाखलर्थतृनाम् इति सूत्रमपि वर्तते। तस्यापि ज्ञानं कारकषष्ठीविभक्तेः प्रयोगाय आवश्यकम् अस्ति इत्यतः एतस्य सूत्रस्य अपि अत्र व्याख्या प्रस्तूयते।

अस्मिन् पाठे अधिकरणकारकविषये विवेचनमपि प्रस्तूयते। एवञ्च अधिकरणे च का विभक्तिः भवति इति प्रस्तूयते।

## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- अपादानसंज्ञा कस्य भवति इति बोद्धुं शक्नुयात्।
- वाक्यरचनाकाले अपादानस्य पञ्चम्याः च सम्यग् व्यवहारं कर्तुम् पारयेद्।
- कारकषष्ठीविधायकसूत्राणि ज्ञास्यति।
- न लोकाव्ययनिष्ठाखलर्थतृनां सूत्रस्य अर्थं ज्ञातुं प्रभवेत्।
- कारकषष्ठीविभक्तेः वाक्येषु शुद्धप्रयोगं कर्तुं शक्नुयात्।
- द्विकर्मकधातुघटितवाक्येषु कारकषष्ठीप्रयोगस्य प्रयोगं कर्तुं प्रभवेत्।
- अधिकरणसंज्ञा कस्य भवति इति बोद्धुं शक्नुयात्।



- वाक्येषु किम् अपादानकारकम् , किम् अधिकरणकारकम् इति ज्ञातुं प्रभवेत्।
- वाक्येषु कुत्र कारकषष्ठी भवतीति जानीयात्।
- वाक्यरचनाकाले अधिकरणस्य सप्तम्याः च सम्यग् व्यवहारं कर्तुं पारयेत्।

## अथ पञ्चमी कारकविभक्तिः

### [२३.१] ध्रुवमपायेऽपादानम्॥ (१.४.२४)

**सूत्रार्थः -** विभागे सति यः धात्ववाच्यविभागाश्रयः सः कारकसंज्ञः सन् अपादानसंज्ञः भवति।

**सूत्रावतरणम् -** संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणं, सम्प्रदानम्, अपादानम्, अधिकरणं चेति। एतेषु अपादानं किं भवति इति प्रतिपादयितुं ध्रुवमपायेऽपादानम् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या -** इदम् संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञाम् अपादानसंज्ञां च करोति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। ध्रुवम् इति प्रथमैकवचनान्तं पदम्। अपाये इति सप्तम्येकवचनान्तं पदम्। अपादानम् इति प्रथमैकवचनान्तं पदम्। कारकम् इति अधिकारः अत्र आगच्छति। अपाये ध्रुवम् कारकसंज्ञं सत् अपादानसंज्ञं भवति इति वाक्ययोजना। अत्र ध्रुवम् इत्यस्य धात्ववाच्यविभागाश्रयः इत्यर्थः। अपाये इत्यस्य विभागे सति इत्यर्थः। एवञ्च सूत्रार्थो भवति विभागे सति यः धात्ववाच्यविभागाश्रयः सः कारकसंज्ञः सन् अपादानसंज्ञः भवति।

**उदाहरणम् -** पत्रं वृक्षात् पतति। मैत्रः ग्रामात् गच्छति।

**सूत्रार्थसमन्वयः -**

**पत्रं वृक्षात् पतति।** अस्मिन् वाक्ये वृक्षः अपादानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र पत्रस्य पतनेन पत्रवृक्षयोः मध्ये विभागः जायमानः अस्ति। पत् इति धातोः अधःसंयोगानुकूलव्यापारः इत्यर्थः। अतः विभागः पत् इति धातोः वाच्यः नास्ति। एवञ्चात्र विभागे सति धात्ववाच्यस्य विभागस्य आश्रयः वृक्षः अस्ति। अतस्तस्य ध्रुवमपायेऽपादानम् इति सूत्रेण कारकसंज्ञा भूत्वा अपादानसंज्ञा च भवति।

**मैत्रः ग्रामात् गच्छति**। अस्मिन् वाक्ये ग्रामः अपादानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र मैत्रस्य गमनेन मैत्रग्रामयोः मध्ये विभागः जायमानः अस्ति। गम् -धातोः उत्तरदेशसंयोगानुकूलव्यापारः इत्यर्थः। अतः विभागः गम् इति धातोः वाच्यः नास्ति। एवञ्चात्र विभागे सति धात्ववाच्यस्य विभागस्य आश्रयः ग्रामः अस्ति। अतस्तस्य ध्रुवमपायेऽपादानम् इति सूत्रेण कारकसंज्ञा भूत्वा अपादानसंज्ञा च भवति।

## [२३.२] भीत्रार्थानां भयहेतुः॥ (१.४.२५)

**सूत्रार्थः** - भयार्थकानां धातूनां प्रयोगे भयस्य कारणं कारकसंज्ञं सत् अपादानसंज्ञं भवति। एवं रक्षार्थकानां धातूनां प्रयोगे भयस्य कारणं कारकसंज्ञं सत् अपादानसंज्ञं भवति।

**सूत्रव्याख्या** - इदम् संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञाम् अपादानसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। भीत्रार्थानाम् इति षष्ठीबहुवचनान्तं पदम्। भयहेतुः इति प्रथमैकवचनान्तं पदम्। अस्मिन् सूत्रे ध्रुवमपायेऽपादानम् इति सूत्रात् अपादानम् इति पदम् अनुवर्तते। कारकम् इति अधिकारः अत्र आगच्छति। भीत्रार्थानां भयहेतुः कारकसंज्ञः सन् अपादानसंज्ञः भवति इति वाक्ययोजना। अत्र भीत्रार्थानाम् इति पदे द्वन्द्वगर्भबहुव्रीहिसमासः अस्ति। तस्य च विग्रहः भवति भीश्च त्राश्च इति भीत्रौ। भीत्रौ अर्थौ येषां ते भीत्रार्थाः। तेषां भीत्रार्थानाम्। एवञ्च भीत्रार्थानामिति पदस्यार्थो भवति भयार्थाकानां धातूनाम्, रक्षार्थकानां च धातूनाम् इति। भयहेतुः इत्यत्र षष्ठीतत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति भयस्य हेतुः इति भयहेतुः। अत्र हेतुपदस्य कारणमित्यर्थः। एवञ्च भयहेतुपदस्यार्थो भवति भयकारणम् इति। प्रयोगे इत्यस्य अध्याहारः क्रियते। एवञ्च सूत्रार्थो भवति - भयार्थकानां धातूनां प्रयोगे भयस्य कारणं कारकसंज्ञं सत् अपादानसंज्ञं भवति। एवं रक्षार्थकानां धातूनां प्रयोगे भयस्य कारणं कारकसंज्ञं सत् अपादानसंज्ञं भवति।

**भयार्थकाः धातवः** - ञिभी भये - बिभेति। त्रसि उद्वेगे - त्रस्यति। ओविजी भयचलयोः, (प्रायेण उत् -पूर्वः अयम्) - उद्विजते। एवमन्येऽपि।

**रक्षार्थका धातवः** - रक्ष् पालने - रक्षति। त्रैङ् पालने - त्रायते। पा रक्षणे - पाति। पाल् रक्षणे - पालयति। एवमन्येऽपि।

**उदाहरणम्** - सर्पः नकुलात् बिभेति। माता बालं सर्पात् रक्षति।

**सूत्रार्थसमन्वयः** -

**सर्पः नकुलात् बिभेति**। अस्मिन् वाक्ये नकुलः अपादानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये भयार्थकस्य ञिभी भये इति धातोः प्रयोगः अस्ति। तत्र च भयस्य कारणम् अस्ति नकुलः। अतः भयकारणस्य नकुलस्य भीत्रार्थानां भयहेतुः इति सूत्रेण कारकसंज्ञा भूत्वा अपादानसंज्ञा भवति।

**माता बालं सर्पात् रक्षति**। अस्मिन् वाक्ये सर्पः अपादानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र वाक्ये रक्षार्थकस्य रक्ष इति धातोः प्रयोगः अस्ति। तत्र च भयस्य कारणम् अस्ति सर्पः। अतः भयकारणस्य सर्पस्य भीत्रार्थानां भयहेतुः इति सूत्रेण कारकसंज्ञा भूत्वा अपादानसंज्ञा भवति।

## [२३.३] जनिकर्तुः प्रकृतिः॥ (१.४.३०)

**सूत्रार्थः** - जायमानस्य कारणं कारकसंज्ञं सत् अपादानसंज्ञं भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञाम् अपादानसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। जनिकर्तुः इति षष्ठ्येकवचनान्तं पदम्। प्रकृतिः इति प्रथमैकवचनान्तं पदम्। अस्मिन् सूत्रे

ध्रुवमपायेऽपादानम् इति सूत्रात् अपादानम् इति पदम् अनुवर्तते। कारकम् इति अधिकारः अत्र आगच्छति। जनिकर्तुः प्रकृतिः कारकसंज्ञा सती अपादानसंज्ञा भवति इति वाक्ययोजना। तत्र जनिकर्तुः इति पदे षष्ठीतत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति जनेः कर्ता इति जनिकर्ता। तस्य जनिकर्तुः इति। एवञ्चास्य जायमानस्य इत्यर्थः भवति। प्रकृतिः इत्यस्य च कारणम् इत्यर्थः। एवञ्च सूत्रार्थो भवति - जायमानस्य कारणं कारकसंज्ञं सत् अपादानसंज्ञं भवति।

**उदाहरणम् -** ईश्वरात् जगत् जायते।

**सूत्रार्थसमन्वयः -**

**ईश्वरात् जगत् जायते।** अस्मिन् वाक्ये ईश्वरः अपादानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र जायमानम् अस्ति जगत्, तस्य च कारणम् अस्ति ईश्वरः। एवञ्च जायमानस्य जगतः कारणम् ईश्वरः अस्ति। अतः तस्य जनिकर्तुः प्रकृतिः इति सूत्रेण कारकसंज्ञा भूत्वा अपादानसंज्ञा भवति।

**अन्यानि उदाहरणानि -**

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।

यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।। (गीता)

सरलार्थः - अन्नाद् भूतानि (जीवाः) भवन्ति। पर्जन्याद् अन्नसम्भवः (अन्नं भवति)। यज्ञाद् पर्जन्यः भवति। यज्ञः कर्मसमुद्भवः (कर्मणः यज्ञः भवति)

## [२३.४] आख्यातोपयोगे॥ (१.४.२९)

**सूत्रार्थः -** नियमपूर्वकविद्यास्वीकारे गम्यमाने वक्ता कारकसंज्ञः सन् अपादानसंज्ञः भवति।

**सूत्रव्याख्या -** इदं संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञाम् अपादानसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। आख्याता इति प्रथमैकवचनान्तं पदम्। उपयोगे इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे ध्रुवमपायेऽपादानम् इति सूत्रात् अपादानम् इति पदम् अनुवर्तते। कारके इति अधिकारः अत्र आगच्छति। तस्य च कारकम् इत्यर्थः। उपयोगे आख्याता कारकसंज्ञः सन् अपादानसंज्ञः भवति इति वाक्ययोजना। अत्र आख्याता इति पदस्य वक्ता इत्यर्थः। उपयोगे इत्यस्य च नियमपूर्वकविद्यास्वीकारे इत्यर्थः। गम्यमाने इति पदस्य चात्र अध्याहारः क्रियते। एवञ्च सूत्रार्थो भवति नियमपूर्वकविद्यास्वीकारे गम्यमाने वक्ता कारकसंज्ञः सन् अपादानसंज्ञः भवति।

**उदाहरणम् -** माणवकः गुरोः वेदं पठति।

**सूत्रार्थसमन्वयः -**

**माणवकः गुरोः वेदं पठति।** अस्मिन् वाक्ये गुरुः अपादानम् अस्ति। अतः तत्र सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र नियमपूर्वकविद्यास्वीकारः गम्यमानः अस्ति। यतोहि वेदस्य पाठः नियमानुसारमेव भवति। तस्मिन् नियमपूर्वकविद्यास्वीकारे गम्यमाने वक्ता अस्ति गुरुः। अतः तस्य गुरोः

आख्यातोपयोगे इति सूत्रेण कारकसंज्ञा भूत्वा अपादानसंज्ञा भवति। इदमपि अत्र अवधेयं यद् नियमरहितविद्यास्वीकारेऽपि यो विद्यां ददाति तस्य अपादानसंज्ञा भवति। अतः अख्याता इति पदेन ज्ञानदाता बोध्यः।

## [२३.५] अपादाने पञ्चमी॥ (२.३.२८)

**सूत्रार्थः -** अनुक्ते अपादाने पञ्चमी विभक्तिः भवति।

**सूत्रावतरणम् -** तत्र तावत् प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी इति एताः सप्त विभक्तयः सन्ति। तत्र एतासु मध्ये पञ्चमी कस्मिन् अर्थे भवति इति प्रतिपादयितुं अपादाने पञ्चमी इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं पञ्चमीं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। अपादाने इति सप्तम्येकवचनान्तं पदम्। पञ्चमी इति प्रथमैकवचनान्तं पदम्। अनभिहिते इति अधिकारः अत्र आगच्छति। अनभिहिते अपादाने पञ्चमी विभक्तिः भवति इति वाक्ययोजना। पञ्चमी इत्यस्य पञ्चमी विभक्तिः इत्यर्थः। अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। तेन च सूत्रार्थः भवति अनुक्ते अपादाने पञ्चमी विभक्तिः भवति।

**उदाहरणम् -** पत्रं वृक्षात् पतति। मैत्रः ग्रामात् गच्छति। सर्पः नकुलात् बिभेति। माता बालं सर्पात् रक्षति। ईश्वरात् जगत् जायते। माणवकः गुरोः वेदं पठति।

**सूत्रार्थसमन्वयः -**

**पत्रं वृक्षात् पतति।** अस्मिन् वाक्ये वृक्षः अपादानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण पत् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, अपादानादिकम् च अनुक्तम् भवति। एवञ्च अनुक्ते अपादाने वृक्षे अपादाने पञ्चमी इति सूत्रेण पञ्चमी विभक्तिः भवति। अपि च उक्ते कर्तरि प्रथमा विभक्तिः भवति। तेन च पत्रं वृक्षात् पतति इति वाक्यं सिध्यति।

**मैत्रः ग्रामात् गच्छति।** अस्मिन् वाक्ये ग्रामः अपादानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण गम् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, अपादानादिकम् च अनुक्तम् भवति। एवञ्च अनुक्ते अपादाने ग्रामे अपादाने पञ्चमी इति सूत्रेण पञ्चमी विभक्तिः भवति। अपि च उक्ते कर्तरि प्रथमा विभक्तिः भवति। तेन च मैत्रः ग्रामात् गच्छति इति वाक्यं सिध्यति।

**सर्पः नकुलात् बिभेति।** अस्मिन् वाक्ये नकुलः अपादानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण भी -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता

उक्तः भवति, अपादानादिकम् च अनुक्तम् भवति। एवञ्च अनुक्ते अपादाने नकुले अपादाने पञ्चमी इति सूत्रेण पञ्चमी विभक्तिः भवति। अपि च उक्ते कर्तरि प्रथमा विभक्तिः भवति। तेन च सर्पः नकुलात् बिभेति इति वाक्यं सिध्यति।

**माता बालं सर्पात् रक्षति।** अस्मिन् वाक्ये सर्पः अपादानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण रक्ष् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, अपादानादिकम् च अनुक्तम् भवति। एवञ्च अनुक्ते अपादाने सर्पे अपादाने पञ्चमी इति सूत्रेण पञ्चमी विभक्तिः भवति। अपि च उक्ते कर्तरि प्रथमा विभक्तिः भवति। तेन च माता बालं सर्पात् रक्षति इति वाक्यं सिध्यति।

**ईश्वरात् जगत् जायते।** अस्मिन् वाक्ये ईश्वरः अपादानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण जन् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, अपादानादिकम् च अनुक्तम् भवति। एवञ्च अनुक्ते अपादाने ईश्वरे अपादाने पञ्चमी इति सूत्रेण पञ्चमी विभक्तिः भवति। अपि च उक्ते कर्तरि प्रथमा विभक्तिः भवति। तेन च ईश्वरात् जगत् जायते इति वाक्यं सिध्यति।

**माणवकः गुरोः वेदं पठति।** अस्मिन् वाक्ये गुरुः अपादानम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अयं कर्तरि प्रयोगः वर्तते। कारणं लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण पठ् -धातोः विवक्षातः कर्तरि लकारः विहितः अस्ति। तस्य स्थाने तिङ् अपि कर्तरि एव। इत्थं कर्तरि प्रयोगे च कर्ता उक्तः भवति, अपादानादिकम् च अनुक्तम् भवति। एवञ्च अनुक्ते अपादाने गुरौ अपादाने पञ्चमी इति सूत्रेण पञ्चमी विभक्तिः भवति। अपि च उक्ते कर्तरि प्रथमा विभक्तिः भवति। तेन च माणवकः गुरोः वेदं पठति इति वाक्यं सिध्यति।

## पाठगतप्रश्नाः-१

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१. ध्रुवमपायेऽपादानम् इति सूत्रे ध्रुवपदस्य कः अर्थः।

२. ध्रुवमपायेऽपादानम् इति सूत्रे अपायः कः।

३. ध्रुवमपायेऽपादानम् इति सूत्रेण किं विधीयते।

४. भीत्रार्थानां भयहेतुः इति सूत्रे भयहेतुः इति पदस्य कः अर्थः।

५. भयहेतुः इत्यत्र कः समासः।

६. जनिकर्तुः प्रकृतिः इति सूत्रे जनिकर्तुः इति पदस्य कः अर्थः।

७. जनिकर्तुः प्रकृतिः इति सूत्रे प्रकृतिः इति पदस्य कः अर्थः।

८. आख्यातोपयोगे इति सूत्रे आख्याता इति पदस्य कः अर्थः।

९. आख्यातोपयोगे इति सूत्रे उपयोगः कः।

## अथ षष्ठी कारकविभक्तिः

### [२३.६] कर्तृकर्मणोः कृति॥ (२.३.६५)

**सूत्रार्थः -** कृदन्तपदवाच्यक्रियायाः अनुक्ते कर्तरि षष्ठीविभक्तिः भवति। कृदन्तपदवाच्यक्रियायाः अनुक्ते कर्मणि षष्ठीविभक्तिः भवति।

**सूत्रावतरणम् -** कृष्णस्य कृतिः इत्यत्र कर्तरि षष्ठी विभक्तिः अस्ति। संसारस्य कर्ता कृष्णः इत्यत्र च कर्मणि षष्ठी विभक्तिः अस्ति। परन्तु केन सूत्रेण कर्तरि कर्मणि च षष्ठी विभक्तिः भवति इति जिज्ञासायां कर्तृकर्मणोः कृति इति सूत्रम् आगच्छति

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं षष्ठीं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। कर्तृकर्मणोः इति षष्ठीद्विवचनान्तं पदम्। कृति इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे शेषे षष्ठी इति सूत्रात् षष्ठी इति पदम् अनुवर्तते। अनभिहिते इति अधिकारः अत्र आगच्छति। कृद्योगे अनभिहिते कर्तरि कर्मणि च षष्ठी भवति इति वाक्ययोजना। अत्र कर्तृकर्मणोः इत्यत्र इतरेतरयोगद्वन्द्वसमासः अस्ति। तस्य च विग्रहः भवति कर्ता च कर्म च इति कर्तृकर्मणी, तयोः कर्तृकर्मणोः। एवञ्च अस्य अर्थो भवति कर्तरि कर्मणि च। षष्ठी इत्यस्य षष्ठी विभक्तिः इत्यर्थः। कृति इत्यस्य कृदन्तपदवाच्यक्रियायाः इत्यर्थः। अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। ततश्च सूत्रार्थः भवति - कृदन्तपदवाच्यक्रियायाः अनुक्ते कर्तरि षष्ठीविभक्तिः भवति। कृदन्तपदवाच्यक्रियायाः अनुक्ते कर्मणि षष्ठीविभक्तिः भवति।

**उदाहरणम् -** कृष्णस्य कृतिः। कृष्णः जगतः कर्ता।

**सूत्रार्थसमन्वयः -**

**कृष्णस्य कृतिः।** अस्मिन्नुदाहरणे कृतिः इति कृदन्तपदम् अस्ति। तद्वाच्या च करणरूपा क्रिया अस्ति। तस्याः क्रियायाः कर्ता भवति कृष्णः। एवञ्च प्रकृते सः अनुक्तः अस्ति। यतोहि कृतिः इत्यत्र कृधातोः भावे अर्थे क्तिन्प्रत्ययः अस्ति। अतः भावः उक्तः अस्ति। कर्ता च अनुक्तः अस्ति। अपि च कर्तृकरणयोस्तृतीया इति सूत्रेण कर्तरि तृतीया प्राप्ता। ताम् परत्वात् प्रबाध्य कर्तृकर्मणोः कृतिः इति सूत्रेण कृदन्तकृतिपदवाच्यक्रियायाः अनुक्ते कर्तरि कृष्णे षष्ठी विभक्तिः सिध्यति। तेन कृष्णस्य कृतिः इति प्रयोगः सिध्यति।

**कृष्णः जगतः कर्ता।** अत्र कर्ता इति कृदन्तपदम् अस्ति। तद्वाच्या च करणरूपा क्रिया अस्ति। तस्याः क्रियायाः कर्ता भवति कृष्णः। कर्म अस्ति जगत्। कर्ता इत्यत्र च कृ इति धातोः ण्वुल्तृचौ इति सूत्रेण कर्तरि तृच्प्रत्ययः अस्ति। अतः कर्ता उक्तः अस्ति। कर्म च अनुक्तम् अस्ति। एवञ्च अनुक्ते कर्मणि कर्मणि द्वितीया इति सूत्रेण द्वितीया प्राप्ता अस्ति। ताम् परत्वात् प्रबाध्य कृदन्तकर्तृपदवाच्यक्रियायाः

अनुक्ते कर्मणि जगति कर्तृकर्मणोः कृति इति सूत्रेण षष्ठीविभक्तिः भवति। तेन कृष्णः जगतः कर्ता इति वाक्यं सिध्यति।

**अत्रायं विशेषः -**

अस्माभिः पूर्वपाठेषु द्विकर्मकधातवः पठिताः सन्ति। यथा कृष्णः ग्रामम् अजां नयति इत्यादिप्रयोगेषु कर्मद्वयं वर्तते। अत्र कृष्णः ग्रामम् अजां नयति इति वाक्यं तु तिङन्तघटितं वर्तते। किन्तु यदा नयति इत्यस्य स्थाने यदि नेता इति कृदन्तस्य प्रयोगः भवति तदा नेता इति कृदन्तयोगे कर्तृकर्मणोः कृति इति सूत्रेण षष्ठीविभक्तिः प्राप्नोति। तत्र नेता इत्यत्र तृच्प्रत्ययः कर्तरि अस्ति। अतः कर्ता तु अभिहितः अस्ति। तेन अभिहिते कर्तरि तु प्रथमा स्यात्। किन्तु कर्म अनभिहितं वर्तते। एवञ्च अस्मिन् वाक्ये कर्मद्वयम् अस्ति। अतः प्रकृते प्रश्नः समुदेति यत् उभयोः कर्मणोः षष्ठी भविष्यति उत एकस्मादेव षष्ठी भविष्यति। तदा अत्र उच्यते मुख्ये कर्मणि तु नित्यं षष्ठी भविष्यति किन्तु गौणे कर्मणि विकल्पेन षष्ठी भविष्यति। तेन कृष्णः ग्रामस्य अजायाः नेता इत्यपि वाक्यं भवति। एवञ्च कृष्णः ग्रामम् अजायाः नेता इत्यपि वाक्यं भवति। एवम् अन्येषामपि द्विकर्मकधातूनां विषये बोध्यम्।

## [२३.७] उभयप्राप्तौ कर्मणि॥ (२.३.६६)

**सूत्रार्थः -** यत्र यत्कृदन्तपदवाच्यक्रियायाः अनुक्ते कर्तरि कर्मणि च युगपत् षष्ठी प्राप्ता तत्र कर्मणि एव षष्ठीविभक्तिः भवति न तु कर्तरि।

**सूत्रावतरणम् -** कर्तृकर्मणोः कृति इति सूत्रेण अनभिहिते कर्तरि कर्मणि च षष्ठीविभक्तेः विधानं कृतम्। एवञ्च कृष्णेन गवां दोहः इत्यत्र दोह इति कृदन्तशब्दः अस्ति। अपि च दोह इत्यत्र भावे अर्थे घञ्प्रत्ययः अस्ति। ततश्च अत्र कर्ता अपि अनभिहितः कर्म अपि अनभिहितम्। एवञ्च प्रकृते वाक्ये कर्तरि अपि षष्ठी स्यात् कर्मणि अपि स्यात्। तेन कृष्णस्य गवां दोहः इति अनिष्टप्रयोगः आपद्येत। किन्तु कृष्णेन गवां दोहः इत्येव प्रयोगः भवति। परन्तु कथम् एवं भवति इति बोधयितुम् उभयप्राप्तौ कर्मणि इति सूत्रं समागतम्।

**सूत्रव्याख्या -** इदं नियमसूत्रम्। इदं सूत्रं कर्तृकर्मणोः कृति इति सूत्रं नियामयति। सूत्रेऽस्मिन् द्वे पदे स्तः। उभयप्राप्तौ इति सप्तम्येकवचनान्तं पदम्। कर्मणि इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे शेषे षष्ठी इति सूत्रात् षष्ठी (१/१) इति पदम् अनुवर्तते। अनभिहिते (७/१) इति अधिकारः अत्र आगच्छति। उभयप्राप्तौ अनभिहिते कर्मणि षष्ठी भवति इति वाक्ययोजना। अत्र उभयप्राप्तौ इत्यत्र बहुव्रीहिसमासः अस्ति। तस्य च विग्रहः उभयोः प्राप्तिः यस्मिन् कृति इति उभयप्राप्तिः। तस्मिन् उभयप्राप्तौ कृति। एवञ्च अस्यार्थो भवति यत्कृदन्तपदवाच्यक्रियायाः कर्तरि कर्मणि च युगपत्प्राप्तौ। षष्ठी इत्यस्य षष्ठी विभक्तिः इत्यर्थः। अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। ततश्च सूत्रार्थः भवति यत्र यत्कृदन्तपदवाच्यक्रियायाः अनुक्ते कर्तरि कर्मणि च युगपत्षष्ठी प्राप्ता तत्र कर्मणि एव षष्ठीविभक्तिः भवति, न तु कर्तरि।

**उदाहरणम् -** कृष्णेन गवां दोहः।

**सूत्रार्थसमन्वयः -**

**कृष्णेन गवां दोहः।** अत्र दोह इति कृदन्तपदम् अस्ति। तद्वाच्या च दोहनरूपा क्रिया अस्ति। तस्याः क्रियायाः कर्ता भवति कृष्णः। अपि च कर्म भवति गौः। एवञ्च दोह इत्यत्र भावे अर्थे घञ्प्रत्ययः अस्ति। अतः भावः उक्तः अस्ति। कर्ता च अनुक्तः अस्ति। कर्म अपि अनुक्तम् अस्ति। एवञ्च कृदन्तदोहपदवाच्यक्रियायाः अनुक्ते कर्तरि कृष्णे, कर्मणि गवि च युगपत् कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी विभक्तिः प्राप्ता अस्ति। तदा इदं सूत्रम् आगच्छति। एवञ्च अनेन कृतेन नियमेन केवलं कर्मणि एव षष्ठीविभक्तिः भवति। कर्तरि तु षष्ठी न भवति। तदा अनभिहिते कर्तरि कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। तेन कृष्णेन गवां दोहः इति वाक्यं सिध्यति। एवमन्येषु उदाहरणेष्वपि समन्वयः बोध्यः।

**अयं विशेषः -**

उभयप्राप्तौ कर्मणि इति सूत्रेण यः नियमः क्रियते सः नियमः वैकल्पिकः अस्ति। ततश्च यत्र कर्तरि कर्मणि च युगपत् षष्ठीविभक्तिः प्राप्ता अस्ति तत्र उभयत्र षष्ठी कर्तुं शक्यते। केवलं कर्मणि एव वा षष्ठी कर्तुं शक्यते। तेन कृष्णस्य गवां दोहः इत्यपि वक्तुं शक्यते। कृष्णेन गवां दोहः इत्यपि वक्तुं शक्यते।

## [२३.८] कृत्यानां कर्तरि वा॥ (२.३.७१)

**सूत्रार्थः -** कृत्यसंज्ञकप्रत्ययान्तपदवाच्यक्रियायाः अनुक्ते कर्तरि वा षष्ठीविभक्तिः भवति।

**सूत्रावतरणम् -** कर्तृकर्मणोः कृति इति सूत्रेण अनभिहिते कर्तरि कर्मणि च षष्ठीविभक्तेः विधानं कृतम्। अतः मया सेव्यः हरिः इत्यादौ सेव्य इति कृदन्तप्रयोगे अनभिहिते कर्तरि षष्ठी स्यात्। ततश्च मम सेव्यः हरिः इत्येव प्रयोगः स्यात्। किन्तु मम सेव्यः हरिः, मया सेव्यः हरिः इति उभयविधः प्रयोगः भवति। परन्तु कथम् एवम्भूतः प्रयोगः भवति इति जिज्ञासा भवति। तस्याः शान्त्यर्थं कृत्यानां कर्तरि वा इति सूत्रम् आगच्छति।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं विकल्पेन षष्ठीं विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। कृत्यानाम् इति षष्ठीबहुवचनान्तं पदम्। कर्तरि इति सप्तम्येकवचनान्तं पदम्। वा इति अव्ययपदम्। अस्मिन् सूत्रे शेषे षष्ठी इति सूत्रात् षष्ठी (१/१) इति पदम् अनुवर्तते। अनभिहिते (७/१) इति अधिकारः अत्र आगच्छति। कृत्यानां कर्तरि वा षष्ठी भवति इति वाक्ययोजना। कृत्यानाम् इत्यस्य कृत्यसंज्ञकप्रत्ययान्तपदवाच्यक्रियायाः इत्यर्थः। तस्मात्सूत्रार्थो भवति - कृत्यसंज्ञकप्रत्ययान्तपदवाच्यक्रियायाः अनुक्ते कर्तरि वा षष्ठीविभक्तिः भवति।

**उदाहरणम् -** मम सेव्यः हरिः, मया सेव्यः हरिः।

**सूत्रार्थसमन्वयः -**

**मम सेव्यः हरिः, मया सेव्यः हरिः।** अत्र सेव् इति धातोः ऋहलोर्ण्यत् इति सूत्रेण कर्मणि ण्यत्प्रत्यये कृते सति सेव्य इति शब्दः सिध्यति। तत्र ण्यत्प्रत्ययश्च कृत्यसंज्ञः अस्ति। अतः सेव्यः इति कृत्यसंज्ञकप्रत्ययान्तपदमस्ति। तद्वाच्या च सेवनरूपा क्रिया अस्ति। तस्याः क्रियायाः कर्ता भवति अहम् (शिवः)। कर्म च भवति हरिः। तत्र सेव्य इत्यत्र कर्मणि अर्थे ण्यत्प्रत्ययः अस्ति। अतः कर्म उक्तम् अस्ति।

कर्ता च अनुक्तः अस्ति। एवञ्च अनुक्ते कर्तरि कर्तृकर्मणोः कृति इति सूत्रेण नित्यं षष्ठी प्राप्ता अस्ति। तां प्रबाध्य कृत्यानां कर्तरि वा इति सूत्रेण विकल्पेन षष्ठी भवति। तेन मम सेव्यः हरिः इति प्रयोगः सिध्यति। यदा च षष्ठी नैव भवति, तदभावे कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया भवति। तेन च मया सेव्यः हरिः इति प्रयोगो भवति।

## [२३.९] न लोकाव्ययनिष्ठाखलर्थतृनाम्॥ (२.३.६८)

**सूत्रार्थः** - लादेशभूतप्रत्ययान्तयोगे उप्रत्ययान्तयोगे उकप्रत्ययान्तयोगे कृदव्यययोगे क्तप्रत्ययान्तयोगे क्तवतुप्रत्ययान्तयोगे खलर्थकप्रत्ययान्तयोगे तृन्प्रत्ययान्तयोगे च अनभिहिते कर्तरि कर्मणि षष्ठी न भवति।

**सूत्रावतरणम्** - कर्तृकर्मणोः कृति इति सूत्रेण अनभिहिते कर्तरि कर्मणि च षष्ठीविभक्तेः विधानं कृतम्। एवञ्च हरिः सृष्टिं कुर्वन् इत्यत्र कुर्वन् इत्यस्य योगे अनभिहिते सृष्टिरूपे कर्मणि षष्ठी स्यात्। एवञ्च कथमत्र द्वितीया वर्तते। एवमेव विष्णुना हताः दैत्याः इत्यत्र हत इति कृदन्तप्रयोगे अनभिहिते कृष्णरूपे कर्तरि षष्ठी स्यात्। कथमत्र तृतीया वर्तते। इति जिज्ञासा मनसि भवति। तत्प्रशमनाय न लोकाव्ययनिष्ठाखलर्थतृनाम् इति सूत्रं समागतम्।

**सूत्रव्याख्या** - इदं निषेधसूत्रम्। इदं सूत्रं षष्ठीं निषेधति। सूत्रेऽस्मिन् द्वे पदे स्तः। न इति अव्ययपदम्। लोकाव्ययनिष्ठाखलर्थतृनाम् इति षष्ठीबहुवचनान्तं पदम्। अस्मिन् सूत्रे शेषे षष्ठी इति सूत्रात् षष्ठी (१/१) इति पदम् अनुवर्तते। अनभिहिते (७/१) इति अधिकारः अत्र आगच्छति। अत्र लोकाव्ययनिष्ठाखलर्थतृनाम् इत्यत्र इतरेतरयोगद्वन्द्वसमासः अस्ति। तस्य च विग्रहः भवति - लश्च उश्च उकश्च अव्ययञ्च निष्ठा च खलर्थश्च तृन् च इति लोकाव्ययनिष्ठाखलर्थतृनः। तेषां लोकाव्ययनिष्ठाखलर्थतृनाम्। अत्र लपदेन लादेशभूतौ शतृशानचौ विवक्षितौ। तेन ल इत्यस्यार्थो भवति शतृप्रत्ययान्तः शानच्प्रत्ययान्तश्च। उ इत्यनेन उकारान्तप्रत्ययान्तशब्दाः विवक्षिताः। अव्यय इत्यनेन कृदन्ताव्ययशब्दाः विवक्षिताः। निष्ठा इत्यनेन क्तप्रत्ययान्तशब्दाः क्तवतुप्रत्ययान्तशब्दाः च विवक्षिताः। खलर्थ इत्यनेन खलर्थकप्रत्ययान्तशब्दाः विवक्षिताः। तृन् इत्येन तृन्प्रत्ययान्ताः शानन्प्रत्ययान्ताः चानश् -प्रत्ययान्ताः शतृप्रत्ययान्ताः च विवक्षिताः सन्ति।

**सूत्रार्थविचारः** - लादेशभूतप्रत्ययान्तयोगे उप्रत्ययान्तयोगे उकप्रत्ययान्तयोगे कृदव्यययोगे क्तप्रत्ययान्तयोगे क्तवतुप्रत्ययान्तयोगे खलर्थकप्रत्ययान्तयोगे तृन्प्रत्ययान्तयोगे च अनभिहिते कर्तरि कर्मणि षष्ठी न भवति।

**उदाहरणम्** - हरिः सृष्टिं कुर्वन्। हरिः सृष्टिं कुर्वाणः। भक्तः हरिं दिदृक्षुः। हरिः दैत्यान् घातुकः। हरिः संसारं सृष्ट्वा आस्ते। विष्णुना हताः दैत्याः। विष्णुः दैत्यान् हतवान्। हरिणा ईषत्करः प्रपञ्चः। हरिः लोकान् कर्ता। इत्यादीनि सूत्रस्य अस्य उदाहरणानि भवन्ति। अत्र क्रमेण एतेषु उदाहरणेषु सूत्रार्थस्य समन्वयः प्रस्तूयते।

**हरिः सृष्टिं कुर्वन्।** इदं लादेशभूतशतृप्रत्ययान्तयोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। तथाहि अत्र कुर्वन् इति शब्दः कृ लट् इति स्थितौ लटः स्थाने कर्तरि अर्थे शतृ इत्यादेशे सति विभक्तिकार्ये कृते सिध्यति। तेन कुर्वन् इति शब्दः लादेशभूतशतृप्रत्ययान्तः अस्ति। एवञ्च हरिः सृष्टिं कुर्वन् इत्यत्र हरिः कर्ता अस्ति, अपि च सृष्टिः कर्म अस्ति। तत्र शतृप्रत्ययः कर्तरि भवतीति कृत्वा कर्ता तु अभिहितः। अतस्तत्र तु प्रथमा जाता। किन्तु कर्म अनभिहितम् अस्ति। अतः अनभिहिते कर्मणि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता वर्तते। तस्याः अनेन सूत्रेण निषेधो भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीयां विधाय निरुक्तं वाक्यं सिध्यति।

**हरिः सृष्टिं कुर्वाणः।** इदं लादेशभूतशानच्प्रत्ययान्तयोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। तथाहि अत्र कुर्वाणः इति शब्दः कृ लट् इति स्थितौ लटः स्थाने कर्तरि अर्थे शानच् इत्यादेशे सति विभक्तिकार्ये कृते सिध्यति। तेन कुर्वाण इति शब्दः लादेशभूतशानच्प्रत्ययान्तः अस्ति। एवञ्च हरिः सृष्टिं कुर्वाणः इत्यत्र हरिः कर्ता अस्ति, अपि च सृष्टिः कर्म अस्ति। तत्र शानच्प्रत्ययः कर्तरि भवतीति कृत्वा कर्ता तु अभिहितः। अतस्तत्र तु प्रथमा जाता। किन्तु कर्म अनभिहितम् अस्ति। अतः अनभिहिते कर्मणि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता वर्तते। तस्याः अनेन सूत्रेण निषेधो भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीयां विधाय निरुक्तं वाक्यं सिध्यति।

**भक्तः हरिं दिदृक्षुः।** इदम् उकारान्तप्रत्ययान्तयोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। तथाहि अत्र दिदृक्षुशब्दः दिदृक्ष इति सन्नन्तधातोः सनाशंसभिक्ष उः इति सूत्रेण उप्रत्यये कृते सति सिध्यति। एवञ्च दिदृक्षुशब्दः उकारान्तप्रत्ययान्तः अस्ति। अस्य च शब्दस्यार्थः अस्ति दर्शनेच्छावान्। अत्र दर्शनेच्छारूपक्रियायाः कर्ता भवति भक्तः, कर्म भवति हरिः। तत्र उप्रत्ययः कर्तरि अस्ति इति कृत्वा कर्ता अभिहितः अतः अभिहिते कर्तरि तु प्रथमा जाता। किन्तु कर्म अनभिहितम्। एवञ्च अनभिहिते कर्मणि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता। तस्याः अनेन सूत्रेण निषेधो भवति। ततश्च कर्मणि द्वितीया इति सूत्रेण द्वितीयां विधाय निरुक्तं वाक्यं सिध्यति।

**हरिः दैत्यान् घातुकः।** इदम् उकप्रत्ययान्तयोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। तथाहि अत्र घातुकः इत्ययं शब्दः हन् इति धातोः लषपतपदस्थाभूवृषहनकमगमशृभ्यः उकञ् इति सूत्रेण कर्तरि उकञ्प्रत्यये कृते सिध्यति। ततश्च घातुक इति शब्दः उकप्रत्ययान्तः अस्ति। एतस्यार्थः अस्ति हननकर्ता। तत्र हननक्रियायाः कर्ता अस्ति हरिः, कर्म च अस्ति दैत्यः। तत्र कर्ता उक्तः अस्ति। अतः उक्ते कर्तरि तु प्रथमा जाता। किन्तु कर्म अनुक्तम् अस्ति। एवञ्च अनुक्ते कर्मणि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता अस्ति। तस्याः अनेन निषेधो भवति। एवञ्च पारिशेष्यात् कर्मणि द्वितीया इति सूत्रेण अत्र द्वितीया भवति। प्रकृतं वाक्यं च सिध्यति।

**हरिः संसारं सृष्ट्वा आस्ते।** इदं कृदव्यययोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। तथाहि अत्र सृष्ट्वा इति शब्दः सृज् इति धातोः क्त्वाप्रत्यये कृते सिध्यति। क्त्वाप्रत्ययान्तशब्दाश्च अव्ययाः भवन्तीति सृष्ट्वाशब्दः कृदव्ययमस्ति। एतस्यार्थः अस्ति सर्जनम्। तत्र सर्जनक्रियायाः कर्ता हरिः अस्ति, कर्म च संसारः अस्ति। तत्र आस्ते इत्यत्र यः तिङ्प्रत्ययः। तेन कर्ता तु अभिहितः अस्ति। अतः अभिहिते कर्तरि तु प्रथमा जाता। किन्तु कर्म अत्र अनभिहितमस्ति। एवञ्च अनुक्ते कर्मणि कर्तृकर्मणोः



कृति इति सूत्रेण षष्ठी प्राप्ता अस्ति। तस्याः अनेन निषेधो भवति। एवञ्च पारिशेष्यात् कर्मणि द्वितीया इति सूत्रेण अत्र द्वितीया भवति। ततश्च हरिः संसारं सृष्ट्वा आस्ते इति निरुक्तः प्रयोगः सिध्यति।

**विष्णुना दैत्याः हताः।** इदं क्तप्रत्ययान्तयोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। तथाहि अत्र हत इति शब्दः हन् इति धातोः कर्मणि क्तप्रत्यये कृते सिध्यति। तेन क्तप्रत्ययान्तशब्दः हत इति। अस्यार्थः हननकर्म। अत्र हननक्रियायाः कर्ता भवति विष्णुः, कर्म च भवति दैत्यः। तत्र क्तप्रत्ययेन कर्म अभिहितमस्ति। अतः अभिहिते कर्मणि तु प्रथमा जाता। किन्तु कर्ता तु अनभिहितः अस्ति। एवञ्च अनुक्ते कर्तरि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता अस्ति। तस्याः अनेन सूत्रेण निषेधो भवति। एवञ्च पारिशेष्यात् कर्तृकरणयोस्तृतीया इति सूत्रेण अत्र तृतीया भवति। तेन निरुक्तं वाक्यं सिध्यति।

**विष्णुः दैत्यान् हतवान्।** इदं क्तवतुप्रत्ययान्तयोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। अत्र हतवान् इति शब्दः हन् इति धातोः कर्तरि क्तवतुप्रत्यये कृते सिध्यति। तेन क्तवतुप्रत्ययान्तशब्दः हतवान् इति। अस्यार्थः अस्ति हननकर्ता। तत्र हननक्रियायाः कर्ता भवति विष्णुः, कर्म च भवति दैत्यः। तत्र क्तवतुप्रत्ययेन कर्ता तु अभिहितः अस्ति। अतः अभिहिते कर्तरि प्रथमा जाता। किन्तु कर्म अनभिहितम् अस्ति। अतः अनुक्ते कर्मणि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता अस्ति। तस्याः अनेन निषेधो भवति। एवञ्च पारिशेष्यात् कर्मणि द्विताया इति सूत्रेण अत्र द्वितीया भवति। तेन निरुक्तं वाक्यं सिध्यति।

**हरिणा ईषत्करः प्रपञ्चः।** इदं खलर्थकप्रत्ययान्तयोगे षष्ठीनिषेधस्य उदाहरणम् अस्ति। तथाहि अत्र ईषत्करः इति शब्दः ईषत्कृ इत्यस्मात् ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् इति सूत्रेण कर्मणि खल् प्रत्यये कृते सिध्यति। ततश्च ईषत्कर इति शब्दः खलर्थकप्रत्ययान्तः अस्ति। अस्यार्थः अस्ति कृतिमान्। अत्र कृतिरूपक्रियायाः कर्ता भवति हरिः, कर्म भवति प्रपञ्चः। तत्र कर्म अभिहितमस्ति। अतस्तत्र तु प्रथमा जाता। किन्तु कर्ता अनभिहितः अस्ति। एवञ्च अनुक्ते कर्तरि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता अस्ति। तस्याः अनेन निषेधो भवति। एवञ्च पारिशेष्यात् कर्तृकरणयोः तृतीया इति सूत्रेण अत्र तृतीया भवति। तेन निरुक्तं वाक्यं सिध्यति।

**लोकान् कर्ता हरिः।** अत्र कर्तृशब्दः तृन्प्रत्ययान्तः अस्ति। अयं शब्दः हि कृ इति धातोः तृन् इति सूत्रेण कर्तरि तृन्प्रत्यये सति सिध्यति। अस्य च शब्दस्यार्थो भवति उत्पत्तिजनकक्रियावान् इति। अत्र क्रियायाः कर्ता अस्ति हरिः, कर्म अस्ति लोकाः। तत्र तृन्प्रत्ययः कर्तरि अस्ति इत्यतः कर्ता तु अभिहितः अस्ति। तेन अभिहिते कर्तरि तु प्रथमा जाता। किन्तु कर्म अनभिहितं वर्तते। अतः अनभिहिते कर्मणि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी प्राप्ता। तस्याः अनेन सूत्रेण निषेधः भवति। ततश्च पारिशेष्यात् कर्मणि द्वितीया इति सूत्रेण द्वितीया भवति। तेन च लोकान् कर्ता हरिः इति प्रयोगः सिध्यति।

## पाठगतप्रश्नाः-२

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१०. उभयप्राप्तौ इत्यत्र कः समासः। कश्च विग्रहः।

११. कर्तृकर्मणोः इति पदे कः समासः। कश्च विग्रहः।

१२. लोकाव्ययनिष्ठाखलर्थतृनाम् इत्यत्र कः समासः, कश्च तद्विग्रहः।

१३. न लोकाव्ययनिष्ठाखलर्थतृनाम् इति सूत्रे अव्ययपदेन केषां ग्रहणम्।

१४. कृदन्तयोगे गौणे कर्मणि नित्यं विकल्पेन वा षष्ठी भवति।

## अथ सप्तमी कारकविभक्तिः।

### [२३.१०] आधारोऽधिकरणम्॥ (१.४.४५)

**सूत्रार्थः** - कर्तृद्वारा व्यापाराश्रयः कारकसंज्ञः सन् अधिकरणसंज्ञः भवति। कर्मद्वारा फलाश्रयः कारकसंज्ञः सन् अधिकरणसंज्ञः भवति।

**सूत्रावतरणम्** - संस्कृतभाषायाम् तावत् षट् कारकाणि सन्ति। कर्ता, कर्म, करणं, सम्प्रदानम्, अपादानम्, अधिकरणं चेति। एतेषु अधिकरणं किं भवति इति प्रतिपादयितुम् आधारोऽधिकरणम् इति सूत्रं रचितवान् भगवान् पाणिनिः।

**सूत्रव्याख्या** - इदम् संज्ञासूत्रम्। इदं सूत्रं कारकसंज्ञाम् अधिकरणसंज्ञां च करोति। सूत्रेऽस्मिन् द्वे पदे स्तः। आधारः अधिकरणम् इति पदच्छेदः। तत्र आधारः इति प्रथमैकवचनान्तं पदम्। अधिकरणम् इति प्रथमैकवचनान्तं पदम्। कारके इति अधिकारः अत्र आगच्छति। तस्य च कारकम् इत्यर्थः। आधारः कारकसंज्ञः सन् अधिकरणसंज्ञः भवति इति वाक्ययोजना। अत्र आधारः इति पदस्य आश्रयः इत्यर्थः। एवञ्च सूत्रार्थो भवति - आश्रयः कारकसंज्ञः सन् अधिकरणसंज्ञः भवति। अत्र कस्य आश्रयः अधिकरणसंज्ञः भवति इति चेद् यः कर्तृद्वारा व्यापाराश्रयः, कर्मद्वारा फलाश्रयः सः एव अधिकरणसंज्ञः भवति। एवञ्च निष्कृष्टार्थः भवति - कर्तृद्वारा व्यापाराश्रयः कारकसंज्ञः सन् अधिकरणसंज्ञः भवति। कर्मद्वारा फलाश्रयः कारकसंज्ञः सन् अधिकरणसंज्ञः भवति।

अधिकरणम् औपश्लेषिकम् अभिव्यापकम् वैषयिकम् इति भेदेन त्रिविधम् भवति। आधेयः संयोगादिसम्बन्धेन यस्मिन् अधिकरणे तिष्ठति तदधिकरणम् औपश्लेषिकम् कथ्यते। आधेयः सर्वावयवव्याप्त्या (आधेयः आधारस्य सर्वेषु अवयवेषु तिष्ठति।) यस्मिन् अधिकरणे तिष्ठति तदधिकरणम् अभिव्यापकम् कथ्यते। आधेयः विषयतासम्बन्धेन यस्मिन् अधिकरणे तिष्ठति तदधिकरणम् वैषयिकम् कथ्यते।

**उदाहरणम्** - चैत्रः कटे शेते। माता स्थाल्यां तण्डुलं पचति। चैत्रः पाकशालायां स्थाल्यां तण्डुलं पचति। तिलेषु तैलम् अस्ति। मोक्षे इच्छा अस्ति।

**सूत्रार्थसमन्वयः** -

**चैत्रः कटे शेते।** अत्र वाक्ये कटः अधिकरणम् अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र कर्ता अस्ति चैत्रः। तत्र च शयनरूपः व्यापारः अस्ति। अतः शयनरूपव्यापारस्य साक्षात्

आश्रयः चैत्रः वर्तते। चैत्रस्य च आश्रयः कटः अस्ति। एवञ्च चैत्ररूपकर्तृद्वारा शयनरूपस्य व्यापारस्य आश्रयः कटः अस्ति। एवञ्च कर्तृद्वारा व्यापाराश्रयस्य कटस्य आधारोऽधिकरणम् इति सूत्रेण कारकसंज्ञा भूत्वा अधिकरणसंज्ञा भवति। अत्र आधेयः चैत्रः संयोगसम्बन्धेन कटरूपे अधिकरणे तिष्ठति। अतः इदमधिकरणम् औपश्लेषिकम् भवति।

**माता स्थाल्यां तण्डुलं पचति।** अत्र वाक्ये स्थाली अधिकरणम् अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र तण्डुलः कर्म अस्ति। तत्र च विक्लित्तिरूपं फलं वर्तते। अतः विक्लित्तिरूपस्य फलस्य आश्रयः तण्डुलः। तण्डुलः च स्थाल्याम् अस्ति। अतः तण्डुलस्य आश्रयः स्थाली वर्तते। एवञ्च तण्डुलरूपकर्मद्वारा विक्लित्तिरूपस्य फलस्य परम्परया आश्रयः स्थाली भवति। एवञ्च कर्मद्वारा फलाश्रयभूतायाः स्थाल्याः आधारोऽधिकरणम् इति सूत्रेण कारकसंज्ञा भूत्वा अधिकरणसंज्ञा भवति। अत्र आधेयः तण्डुलः संयोगसम्बन्धेन स्थालीरूपे अधिकरणे तिष्ठति। अतः इदमधिकरणम् औपश्लेषिकम् भवति।

**चैत्रः पाकशालायां स्थाल्यां तण्डुलं पचति।** अत्र वाक्ये पाकशाला अधिकरणम् अस्ति। सा च कथम् अधिकरणं भवति इति चेदुच्यते - अत्र वाक्ये चैत्रः कर्ता अस्ति। तस्मिन् च पचनरूपः व्यापारः अस्ति। चैत्रः च पाकशालायाम् वर्तते। अतः चैत्ररूपकर्तृद्वारा पचनरूपस्य व्यापारस्य परम्परया आश्रयः पाकशाला भवति। अतः तस्याः आधारोऽधिकरणम् इति सूत्रेण कारकसंज्ञा भूत्वा अधिकरणसंज्ञा भवति।

एवमेव अत्र वाक्ये स्थाली अधिकरणम् अस्ति। सा च कथम् अधिकरणं भवति इति चेदुच्यते - अत्र वाक्ये तण्डुलः कर्म अस्ति। तस्मिन् च विक्लित्तिरूपं फलं वर्तते। अतः विक्लित्तिरूपस्य फलस्य आश्रयः तण्डुलः अस्ति। तण्डुलः च स्थाल्याम् अस्ति। एवञ्च तण्डुलरूपकर्मद्वारा विक्लित्तिरूपस्य फलस्य परम्परया आश्रयः स्थाली भवति। एवञ्च कर्मद्वारा फलाश्रयभूतायाः स्थाल्याः आधारोऽधिकरणम् इति सूत्रेण कारकसंज्ञा भूत्वा अधिकरणसंज्ञा भवति।

अत्र आधेयः चैत्रः संयोगसम्बन्धेन पाकाशालारूपे अधिकरणे तिष्ठति। अतः इदमधिकरणम् औपश्लेषिकम् भवति। एवञ्च आधेयः तण्डुलः संयोगसम्बन्धेन स्थालीरूपे अधिकरणे तिष्ठति। अतः इदमधिकरणम् औपश्लेषिकम् भवति।

**तिलेषु तैलम् अस्ति।** अत्र वाक्ये तिलाः अधिकरणम् अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र कर्ता अस्ति तैलम्। तत्र च सत्तारूपः व्यापारः अस्ति। अतः सत्तारूपव्यापारस्य साक्षात् आश्रयः तैलम् वर्तते। तैलस्य च आश्रयः तिलाः सन्ति। एवञ्च तैलरूपकर्तृद्वारा सत्तारूपस्य व्यापारस्य आश्रयः तिलाः सन्ति। एवञ्च कर्तृद्वारा व्यापाराश्रयभूतानां तिलानाम् आधारोऽधिकरणम् इति सूत्रेण कारकसंज्ञा भूत्वा अधिकरणसंज्ञा भवति। अत्र आधेयम् तैलम् तिलानां सर्वेषु अवयवेषु वर्तते। अतः तिलरूपमधिकरणम् अभिव्यापकम् भवति।

**मोक्षे इच्छा अस्ति।** अत्र वाक्ये मोक्षः अधिकरणम् अस्ति। अतः तत्रैव सूत्रार्थस्य समन्वयः क्रियते। तथाहि अत्र कर्त्री अस्ति इच्छा। तत्र च सत्तारूपः व्यापारः अस्ति। अतः सत्तारूपव्यापारस्य साक्षात् आश्रयः इच्छा वर्तते। तत्र इच्छा समवायसम्बन्धेन इच्छावति पुरुषे तिष्ठति। तथैव यद्विषयिणी



इच्छा भवति तस्मिन् विषये इच्छा विषयतासम्बन्धेन तिष्ठति। प्रकृते च मोक्षविषयिणी इच्छा अस्ति। अतः विषयतासम्बन्धेन इच्छायाः आश्रयः मोक्षः वर्तते। एवञ्च इच्छारूपकर्तृद्वारा सत्तारूपस्य व्यापारस्य आश्रयः मोक्षः अस्ति। एवञ्च कर्तृद्वारा व्यापाराश्रयस्य मोक्षस्य आधारोऽधिकरणम् इति सूत्रेण कारकसंज्ञा भूत्वा अधिकरणसंज्ञा भवति। अत्र आधेया इच्छा विषयतासम्बन्धेन मोक्षे वर्तते। अतः मोक्षरूपमधिकरणम् वैषयिकम् भवति।

## [२३.११] सप्तम्यधिकरणे च॥ (२.३.३६)

**सूत्रार्थः** - अनुक्ते अधिकरणे सप्तमी विभक्तिः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं सप्तमीं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। अधिकरणे इति सप्तम्येकवचनान्तं पदम्। सप्तमी इति प्रथमैकवचनान्तं पदम्। अनभिहिते इति अधिकारः अत्र आगच्छति। अनभिहिते अधिकरणे सप्तमी विभक्तिः भवति इति वाक्ययोजना। सप्तमी इत्यस्य सप्तमी विभक्तिः इत्यर्थः। अनभिहिते इत्यस्य अनुक्ते इत्यर्थः। तेन च सूत्रार्थः भवति - अनुक्ते अधिकरणे सप्तमी विभक्तिः भवति।

**उदाहरणम्** - तैलं तिलेषु अस्ति। चैत्रः कटे शेते। इच्छा मोक्षे अस्ति।

**सूत्रार्थसमन्वयः** -

**चैत्रः कटे शेते।** अस्मिन् वाक्ये कटः अधिकरणम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अत्र तिङ् कर्तरि प्रयुक्तः अस्ति। अतः कर्ता उक्तः भवति, अधिकरणम् च अनुक्तं भवति। एवञ्च अनुक्ते अधिकरणे कटे सप्तम्यधिकरणे च इति सूत्रेण सप्तमी विभक्तिः भवति।

**तैलं तिलेषु अस्ति।** अस्मिन् वाक्ये तिलम् अधिकरणम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अत्र तिङ् कर्तरि प्रयुक्तः अस्ति। अतः कर्ता उक्तः भवति, अधिकरणम् च अनुक्तं भवति। एवञ्च अनुक्ते अधिकरणे तिले सप्तम्यधिकरणे च इति सूत्रेण सप्तमी विभक्तिः भवति।

**इच्छा मोक्षे अस्ति।** अस्मिन् वाक्ये मोक्षः अधिकरणम् अस्ति। तत् च अनुक्तम् अस्ति। यतोहि अत्र तिङ् कर्तरि प्रयुक्तः अस्ति। अतः कर्ता उक्तः भवति, अधिकरणम् च अनुक्तं भवति। एवञ्च अनुक्ते अधिकरणे मोक्षे सप्तम्यधिकरणे च इति सूत्रेण सप्तमी विभक्तिः भवति।

## पाठगतप्रश्नाः-३

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१५. आधारोऽधिकरणम् इति सूत्रं किं करोति।

१६. अधिकरणम् कतिविधम्।

१७. किम् औपश्लेषिकम् अधिकरणम्।

१८. तिलेषु तैलमस्ति इति उदाहरणे कीदृशमधिकरमस्ति।

१) औपश्लेषिकम्  २) वैषयिकम्  ३) अभिव्यापकम्  ४) समवायि

१९. तिलेषु तैलमस्ति इत्यत्र केन सूत्रेण सप्तमी विहिता।

## पाठसारः

अत्र पाठे अपादानसंज्ञाविधायकानां ध्रुवमपायेऽपादानम्, भीत्रार्थानां भयहेतुः, जनिकर्तुः प्रकृतिः, आख्यातोपयोगे इति सूत्राणां व्याख्या वर्तते। ततः परम् अपादाने पञ्चमीविधायकस्य सूत्रस्य अपादाने पञ्चमी इत्यस्य व्याख्या वर्तते।

एवञ्च ततः परम् कारकषष्ठीविभक्तेः वर्णनं वर्तते। तत्र कारकषष्ठीविधायकस्य कर्तृकर्मणोः कृति इति सूत्रस्य सोदाहरणं व्याख्या अत्र अस्ति। पुनः कर्तृकर्मणोः कृति इति सूत्रस्य नियामकं सूत्रं भवति उभयप्राप्तौ कर्मणि। तस्य व्याख्यानम् अत्र वर्तते। एवं कृत्यानां कर्तरि वा इति सूत्रस्य सोदाहरणं व्याख्या अस्ति। पुनः कर्तृकर्मणोः कृति इत्यस्य निषेधकस्य न लोकाव्ययनिष्ठाखलर्थतृनाम् इति सूत्रस्य च अत्र व्याख्या वर्तते।

ततः परम् अस्मिन् पाठे अधिकरणसंज्ञाविधायकस्य आधारोऽधिकरणम् इति सूत्रस्य व्याख्या वर्तते। पुनः सप्तमीविधायकस्य सप्तम्यधिकरणे च इति सूत्रस्य सोदाहरणं व्याख्या वर्तते।

## पाठान्तप्रश्नाः

१. ध्रुवमपायेऽपादानम् इति सूत्रस्य व्याख्या विधेया।

२. भीत्रार्थानां भयहेतुः इति सूत्रस्य व्याख्यां लिखन्तु।

३. जनिकर्तुः प्रकृतिः इति सूत्रस्य व्याख्यां लिखत।

४. आख्यातोपयोगे इति सूत्रस्य व्याख्यां कुरुत।

५. अपादाने पञ्चमी इति सूत्रस्य व्याख्यां कुरुत।

६. पत्रं वृक्षात् पतति, माणवकः गुरोः वेदं पठति इत्युभयोः प्रयोगयोः सिद्धिः लेख्या।

७. सर्पः नकुलात् बिभेति, माता बालं सर्पात् रक्षति इत्युभयोः प्रयोगयोः सिद्धिः लेख्या।

८. कर्तृकर्मणोः कृति इति सूत्रस्य व्याख्यानं कुर्वन्तु।

९. उभयप्राप्तौ कर्मणि इति सूत्रस्य व्याख्यानं कुर्वन्तु।

१०. कृत्यानां कर्तरि वा इति सूत्रस्य व्याख्यानं कुर्वन्तु।

११. न लोकाव्ययनिष्ठाखलर्थतृनाम् इति सूत्रस्य व्याख्यानं कुर्वन्तु।

१२. कृष्णस्य कृतिः इति प्रयोगं साधयन्तु।

१३. संसारस्य कर्ता कृष्णः इति प्रयोगं साधयन्तु।

१४. मम सेव्यः हरिः, मया सेव्यः हरिः इत्यनयोः प्रयोगयोः सिद्धिं लिखन्तु।

१५. विष्णुना हताः दैत्याः इत्यत्र कर्तरि षष्ठी कथं नेति प्रतिपादयन्तु।

१६. हरिः सृष्टिं कुर्वन् इति प्रयोगस्य सिद्धिं लिखत।

१७. दैत्यान् घातुकः हरिः इति प्रयोगं साधयन्तु।

१८. सप्तम्यधिकरणे च इति सूत्रस्य व्याख्या लेख्या।

१९. चैत्रः पाकशालायां स्थाल्यां तण्डुलं पचति इति प्रयोगस्य सिद्धिः कार्या।

२०. अधिकरणभेदान् सोदाहरणम् उपस्थापयत।

## पाठगतप्रश्नानाम् उत्तराणि

अत्र पूर्वोक्तानां प्रश्नानाम् उत्तराणि प्रदीयन्ते।

### उत्तराणि-१

१. ध्रुवम् इत्यस्य धात्ववाच्यविभागाश्रयः इत्यर्थः।

२. अपायः इत्यस्य विभागः इत्यर्थः।

३. ध्रुवमपायेऽपादानम् इति सूत्रेण अपादानसंज्ञा विधीयते।

४. भयहेतुः इति पदस्य भयकारणम् इत्यर्थः।

५. भयहेतुः इति पदे भयस्य हेतुः इति षष्ठीतत्पुरुषसमासः।

६. जनिकर्तुः इति पदस्य जायमानस्य इति अर्थः।

७. प्रकृतिः इति पदस्य कारणम् इति अर्थः।

८. आख्याता इति पदस्य वक्ता इति अर्थः।

९. उपयोगः हि नियमपूर्वकविद्यास्वीकारः।

### उत्तराणि-२

१०. उभयप्राप्तौ इत्यत्र बहुव्रीहिसमासः। उभयोः प्राप्तिः यस्मिन् इति च अस्य विग्रहः।

११. कर्तृकर्मणोः इति पदे इतरेतरयोगद्वन्द्वसमासः। कर्ता च कर्म च इति कर्तृकर्मणी। इति विग्रहः। तयोः कर्तृकर्मणोः इति।

१२. लोकाव्ययनिष्ठाखलर्थतृनाम् इत्यत्र इतरेतरयोगद्वन्द्वसमासः। लोकाव्ययनिष्ठाखलर्थतृनाम् इत्यस्य विग्रहः भवति लश्च उश्च उकश्च अव्ययश्च निष्ठा च खलर्थश्च तृन् च इति लोकाव्ययनिष्ठाखलर्थतृनः। तेषां लोकाव्ययनिष्ठाखलर्थतृनाम्।

१३. न लोकाव्ययनिष्ठाखलर्थतृनाम् इति सूत्रे अव्ययपदेन कृदव्ययानामेव ग्रहणम्।

१४. कृदन्तयोगे गौणे कर्मणि विकल्पेन षष्ठी भवति।

**उत्तराणि-३**

१५. आधारोऽधिकरणम् इति सूत्रम् अधिकरणसंज्ञां करोति।

१६. औपश्लेषिकम् अभिव्यापकम् वैषयिकम् इति भेदेन अधिकरणम् त्रिविधम् भवति।

१७. आधेयः संयोगादिसम्बन्धेन यस्मिन् अधिकरणे तिष्ठति तदधिकरणम् औपश्लेषिकम् कथ्यते।

१८. ३

१९. सप्तम्यधिकरणे च।

॥इति त्रयोविंशः पाठः॥

# २४

# उपपदविभक्तौ द्वितीया तृतीया चतुर्थी पञ्चमी च

## प्रस्तावना

कारकप्रकरणस्य प्रारम्भे इदं प्रतिपादितमेव यत् प्रथमाद्वितीयादयः सप्त सुब्विभक्तयः सन्ति। पुनः सप्त अपि विभक्तयः कारकोपपदभेदेन द्विविधाः भवन्ति। एवञ्च सप्त कारकविभक्तयः भवन्ति। उपपदविभक्तयः सप्त एव भवन्ति। तत्र सप्तसु उपपदविभक्तिषु मध्ये अस्मिन् पाठे उपपदद्वितीयाविभक्तेः उपपदतृतीयाविभक्तेः उपपदचतुर्थीविभक्तेः उपपदपञ्चमीविभक्तेः च वर्णनं क्रियते।

## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- उपपदद्वितीयाविभक्तिं ज्ञातुं प्रभवेत्।
- उपपदतृतीयाविभक्तिं ज्ञातुं प्रभवेत्।
- उपपदचतुर्थीविभक्तिं ज्ञातुं प्रभवेत्।
- उपपदपञ्चमीविभक्तिं ज्ञातुं प्रभवेत्।
- वाक्येषु उपपदद्वितीयातृतीयाचतुर्थीपञ्चमीविभक्तेः शुद्धं प्रयोगं कर्तुं शक्नुयात्।
- वाक्येषु उपपदद्वितीयातृतीयाचतुर्थीपञ्चमीविभक्तेः प्रयोगं बोद्धुं शक्नुयात्।

## [२४.१] अन्तरान्तरेणयुक्ते॥ (२.३.४)

**सूत्रार्थः** - अन्तरायुक्ते अर्थे विद्यमानात् प्रातिपदिकाद् द्वितीयाविभक्तिः भवति। अन्तरेणयुक्ते अर्थे विद्यमानात् प्रातिपदिकात् द्वितीयाविभक्तिः भवति इति।

**सूत्रावतरणम्** - रामं लक्ष्मणं च अन्तरा सीता अस्ति, हरिम् अन्तरेण सुखं नास्ति, इत्यादौ रामादिशब्दात् केन सूत्रेण द्वितीया भवति। न हि अत्र कर्मणि द्वितीया इति सूत्रेण द्वितीया भवितुं शक्नोति। अस् -धातोः अकर्मकत्वेन तद्योगे कर्मत्वासम्भवात्। अतः एवम्भूतेषु वाक्येषु द्वितीयाविधानाय भगवान् पाणिनिः अन्तरान्तरेणयुक्ते इति सूत्रं रचितवान्। तस्यैवात्र व्याख्यानं प्रस्तूयते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं द्वितीयाविभक्तिं विदधाति। सूत्रेऽस्मिन् एकम् अन्तरान्तरेणयुक्ते इति सप्तम्यन्तं पदम् अस्ति। अस्मिन् सूत्रे कर्मणि द्वितीया इति सूत्रात् द्वितीया इति

अनुवर्तते। अत्र अन्तरान्तरेणयुक्ते इति पदे द्वन्द्वगर्भतृतीयातत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति - अन्तरा च अन्तरेण च अन्तरान्तरेणौ, ताभ्यां युक्तम् इति अन्तरान्तरेणयुक्तम्, तस्मिन् अन्तरान्तरेणयुक्ते। अन्तरान्तरेणयुक्ते द्वितीया विभक्तिः भवति इति वाक्ययोजना। अत्र अन्तरान्तरेणयुक्ते इति पदस्य अर्थो भवति - अन्तरायुक्ते अर्थे अन्तरेणयुक्ते अर्थे चेति। अत्र विद्यमानात् इत्यस्याध्याहारः क्रियते। एवञ्च सूत्रार्थः भवति - अन्तरायुक्ते अर्थे विद्यमानात् प्रातिपदिकाद् द्वितीयाविभक्तिः भवति। अन्तरेणयुक्ते अर्थे विद्यमानात् प्रातिपदिकात् द्वितीयाविभक्तिः भवति इति।

**उदाहरणम् -** रामं लक्ष्मणं च अन्तरा सीता अस्ति। हरिम् अन्तरेण सुखं नास्ति।

**सूत्रार्थसमन्वयः -**

**रामं लक्ष्मणं च अन्तरा सीता अस्ति।** अत्र वाक्ये अन्तराशब्दस्य प्रयोगः अस्ति। अत्र अन्तराशब्दस्य अर्थः भवति मध्ये इति। अत्र लक्ष्मणस्य रामस्य च मध्ये सीता अस्ति इति प्रकृतवाक्यस्य अर्थः। अत्र अन्तरापदस्य मध्यरूपार्थेन सह युक्तः अर्थः अस्ति रामः लक्ष्मणश्च। तेन रामशब्दात् लक्ष्मणशब्दात् च अनेन सूत्रेण द्वितीया विभक्तिः भवति। तेन रामं लक्षणं च अन्तरा सीता अस्ति इति प्रयोगः सिध्यति।

**हरिम् अन्तरेण सुखं नास्ति।** अत्र वाक्ये अन्तरेणशब्दस्य प्रयोगः अस्ति। अन्तरेणशब्दस्य अर्थः भवति विना इति। तेन हरिं विना सुखं नास्ति इति प्रकृतवाक्यस्य अर्थः भवति। एवञ्च अन्तरेणपदस्य विनारूपार्थेन सह युक्तः अर्थः अस्ति हरिः। तेन हरिशब्दात् अनेन सूत्रेण द्वितीया विभक्तिः भवति। तेन हरिम् अन्तरेण सुखं नास्ति इति प्रयोगः सिध्यति।

## [२४.२] कालाध्वनोरत्यन्तसंयोगे॥ (२.३.५)

**सूत्रार्थः -** कालस्य अध्वनः वा द्रव्येण गुणेन क्रियया च सह अत्यन्तसंयोगे सति कालवाचकात् अध्ववाचकात् च शब्दात् द्वितीयाविभक्तिः भवति।

**सूत्रावतरणम् -** मासं गुडधानाः सन्ति, क्रोशं गिरिः अस्ति इत्यादौ मासादिशब्दात् केन सूत्रेण द्वितीया भवति। न हि अत्र कर्मणि द्वितीया इति सूत्रेण द्वितीया भवितुं शक्नोति। अस् -धातोः अकर्मकत्वेन तद्योगे कर्मत्वासम्भवात्। अतः एवम्भूतेषु वाक्येषु द्वितीयाविधानाय भगवान् पाणिनिः कालाध्वनोरत्यन्तसंयोगे इति सूत्रं रचितवान्। तस्यैवात्र व्याख्यानं प्रस्तूयते।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं द्वितीयाविभक्तिं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। कालाध्वनोः इति षष्ठीद्विवचनान्तं पदम्। अत्यन्तसंयोगे इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे कर्मणि द्वितीया इति सूत्रात् द्वितीया इति अनुवर्तते। कालाध्वनोः इति पदं समस्तं वर्तते। अत्र च इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति - कालश्च अध्वा च इति कालाध्वानौ। तयोः कालाध्वनोः। अत्यन्तसंयोगे इति पदमपि समस्तं वर्तते। अत्र च कर्मधारयसमासः अस्ति। अस्य च विग्रहः भवति - अतिशयितः संयोगः इति अत्यन्तसंयोगः। तस्मिन् अत्यन्तसंयोगे। कालाध्वनोः अत्यन्तसंयोगे द्वितीयाविभक्तिः इति वाक्ययोजना। अत्र कालाध्वनोः कैः अत्यन्तसंयोगे इति

जिज्ञासायाम् द्रव्यगुणक्रियाभिः सह इति लभ्यते। एवं कस्मात् द्वितीया भवति इति जिज्ञासायां कालवाचकात् अध्ववाचकात् इति लभ्यते। एवञ्च सूत्रार्थः भवति कालस्य अध्वनः वा द्रव्येण गुणेन क्रियया च सह अत्यन्तसंयोगे सति कालवाचकात् अध्ववाचकात् च शब्दात् द्वितीयाविभक्तिः भवति।

**उदाहरणम् -** मासं गुडधानाः भवन्ति। रामः मासं सुखी भवति। छात्रः मासं पठति। क्रोशं गिरिः अस्ति। क्रोशं कुटिला नदी अस्ति। छात्रः क्रोशं पठति।

**सूत्रार्थसमन्वयः -**

**मासं गुडधानाः भवन्ति।** अत्र मासः कालः अस्ति, गुडधानाः द्रव्यम् अस्ति। गुडधानाः गुडेन धान्येन च युक्तः खाद्यपदार्थविशेषः। एवञ्च वर्षे कस्मिंश्चित् मासे प्रतिदिनं गुडधानाः भोजनाय भवन्ति इति वाक्यस्य तात्पर्यम् अस्ति। ततश्चात्र कालस्य मासस्य द्रव्येण गुडधानैः सह अत्यन्तसंयोगो वर्तते इति प्रतिभाति। अतः अत्र कालवाचकात् मासशब्दात् द्वितीयाविभक्तिः सञ्जाता। तेन च मासं गुडधानाः भवन्ति इति सिद्धम्।

**रामः मासं सुखी भवति।** अत्र मासः कालः अस्ति। सुखं गुणः अस्ति। एवञ्च वर्षे कस्मिंश्चित् मासे रामनामकः कश्चित् जनः सम्पूर्णं मासं (व्याप्य) सुखी तिष्ठति इति वाक्यस्य तात्पर्यम् अस्ति। ततश्चात्र कालस्य मासस्य गुणेन सुखेन सह अत्यन्तसंयोगो वर्तते इति प्रतिभाति। अतः अत्र कालवाचकात् मासशब्दात् द्वितीयाविभक्तिः सञ्जाता। तेन च रामः मासं सुखी भवति इति सिद्धम्।

**छात्रः मासं पठति।** अत्र मासः कालः अस्ति। पठनं क्रिया अस्ति। एवञ्च वर्षे परीक्षाकालस्य मासे कश्चित् छात्रः सम्पूर्णं मासं पठति इति वाक्यस्य तात्पर्यम् अस्ति। ततश्चात्र कालस्य मासस्य पठनरूपक्रियया सह अत्यन्तसंयोगो वर्तते इति प्रतिभाति। अतः अत्र कालवाचकात् मासशब्दात् द्वितीयाविभक्तिः सञ्जाता। तेन च छात्रः मासं पठति इति सिद्धम्।

**क्रोशं गिरिः अस्ति।** अत्र क्रोशः अध्वा (पन्थाः मार्गः) अस्ति, गिरिः द्रव्यम् अस्ति। क्रोशपरिमाणात्मकः गिरिः इति अस्य वाक्यस्य तात्पर्यम् अस्ति। ततश्चात्र अध्वनः क्रोशस्य द्रव्येण गिरिणा सह अत्यन्तसंयोगो वर्तते इति प्रतिभाति। अतः अत्र अध्ववाचकात् क्रोशशब्दात् द्वितीयाविभक्तिः सञ्जाता। तेन च क्रोशं गिरिः अस्ति इति सिद्धम्।

**क्रोशं कुटिला नदी अस्ति।** अत्र क्रोशः अध्वा अस्ति। कौटिल्यं गुणः अस्ति। अत्र क्रोशं यावत् नदी कौटिल्यगुणवती (वक्रा) इति वाक्यस्य तात्पर्यम् अस्ति। ततश्चात्र अध्वनः क्रोशस्य कौटिल्यगुणेन सह अत्यन्तसंयोगो वर्तते इति प्रतिभाति। अतः अत्र अध्ववाचकात् क्रोशशब्दात् द्वितीयाविभक्तिः सञ्जाता। तेन च क्रोशं कुटिला नदी अस्ति इति सिद्धम्।

**छात्रः क्रोशं पठति।** अत्र क्रोशः अध्वा अस्ति, पठनं क्रिया अस्ति। एवञ्च वर्षे परीक्षासमये कश्चित् छात्रः यदा परीक्षां दातुं गच्छति तदा सः क्रोशं पठन् गच्छति इति वाक्यस्य तात्पर्यम् अस्ति। ततश्चात्र क्रोशस्य अध्वनः पठनरूपक्रियया सह अत्यन्तसंयोगो वर्तते इति प्रतिभाति। अतः अत्र अध्ववाचकात् क्रोशशब्दात् द्वितीयाविभक्तिः सञ्जाता। तेन च छात्रः क्रोशं पठति इति सिद्धम्।



**उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।**
**द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।। (वार्तिकम्)**

**वार्तिकार्थः -** उभयतः इत्यस्य योगे द्वितीया कार्या। सर्वतः इत्यस्य योगे द्वितीया कार्या। धिक् इत्यस्य योगे द्वितीया कार्या। उपर्युपरि इत्यस्य योगे द्वितीया कार्या। अध्यधि इत्यस्य योगे द्वितीया कार्या। अधोऽधः इत्यस्य योगे द्वितीया कार्या। एवं कुत्रचित् एतेषां शब्दानाम् अप्रयोगे अपि शिष्टप्रयोगसिद्धये द्वितीया कार्या।

**उदाहरणम् -** ग्रामम् उभयतः नदी अस्ति। कृष्णं सर्वतः गोपाः सन्ति। चौरं धिक्। लोकम् उपर्युपरि हरिः अस्ति। लोकम् अध्यधि हरिः अस्ति। लोकम् अधोऽधः हरिः अस्ति। कृष्णम् ऋते सुखं नास्ति।

**ग्रामम् उभयतः नदी अस्ति।** इदम् उभयतः इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र उभयतः इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता। किन्तु वार्तिककारेण उभयतः इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन ग्रामम् उभयतः नदी अस्ति इति वाक्यं सिद्धम्। अत्र उभयतः इति शब्दस्य पार्श्वद्वये इत्यर्थः अस्ति। एवञ्च अस्य वाक्यस्य ग्रामस्य पार्श्वद्वये नदी अस्ति इत्यर्थः भवति।

**कृष्णं सर्वतः गोपाः सन्ति।** इदम् सर्वतः इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र सर्वतः इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण सर्वतः इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन कृष्णं सर्वतः गोपाः सन्ति इति वाक्यं सिद्धम्। अत्र सर्वतः इति शब्दस्य सर्वेषु पार्श्वेषु इत्यर्थः अस्ति। एवञ्च अस्य कृष्णस्य सर्वेषु पार्श्वेषु गोपाः सन्ति इत्यर्थः भवति।

**चौरं धिक्।** इदं धिक् इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र धिक् इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण धिक् इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन चौरं धिक् इति वाक्यं सिद्धम्। अत्र धिक् इति शब्दस्य निन्दा इत्यर्थः अस्ति। एवञ्च अस्य चौरस्य निन्दा इत्यर्थः भवति।

**लोकम् उपर्युपरि हरिः अस्ति।** इदम् उपर्युपरि इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र उपर्युपरि इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण उपर्युपरि इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन

वार्तिकेन द्वितीयायाः विधानं भवति। तेन लोकम् उपर्युपरि हरिः अस्ति इति वाक्यं सिद्धम्। उपर्युपरि इत्यस्य ऊर्ध्वदिशि इत्यर्थः। तेन अस्य वाक्यस्यार्थो भवति - लोकस्य ऊर्ध्वदिशि हरिः अस्ति।

**लोकम् अध्यधि हरिः अस्ति।** इदम् अध्यधि इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र अध्यधि इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण अध्यधि इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन लोकम् अध्यधि हरिः अस्ति इति वाक्यं सिद्धम्। अध्यधि इत्यस्य समीपदेशे इत्यर्थः। तेन अस्य वाक्यस्यार्थो भवति - लोकस्य समीपदेशे हरिः अस्ति।

**लोकम् अधोऽधः हरिः अस्ति।** इदम् अधोऽधः इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र अधोऽधः इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण अधोऽधः इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन लोकम् अधोऽधः हरिः अस्ति इति वाक्यं सिद्धम्। उपर्युपरि इत्यस्य अधोदिशि इत्यर्थः। तेन अस्य वाक्यस्यार्थो भवति - लोकस्य अधोदिशि हरिः अस्ति।

**कृष्णम् ऋते सुखं नास्ति।** इदम् ऋते इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र ऋते इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण ऋते इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन कृष्णम् ऋते सुखं नास्ति इति वाक्यं सिद्धम्। अत्र इति ऋते इति शब्दस्य विना इत्यर्थः अस्ति। एवञ्च अस्य कृष्णं विना सुखं नास्ति इत्यर्थः भवति। ऋतेऽपि त्वां न भविष्यन्ति सर्वे इति श्रीमद्भगवद्गीतायाम् प्रयोगोऽपि दृश्यते।

## अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि। (वार्तिकम्)

**वार्तिकार्थः** अभितः परितः समया निकषा हा प्रति इति एतेषां शब्दानां प्रयोगे अपि द्वितीया कार्या।

**उदाहरणम्** - ग्रामम् अभितः जलम् अस्ति। ग्रामं परितः वनम् अस्ति। ग्रामं समया। ग्रामं निकषा। कृष्णाभक्तं हा। बुभुक्षितं न प्रतिभाति किञ्चित्।

**ग्रामम् अभितः जलम् अस्ति।** इदम् अभितः इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र अभितः इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण अभितः इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन ग्रामम् अभितः जलम् अस्ति इति वाक्यं सिद्धम्। अत्र अभितः इति शब्दस्य पार्श्वद्वये इत्यर्थः अस्ति। एवञ्च अस्य वाक्यस्य ग्रामस्य पार्श्वद्वये जलम् अस्ति इत्यर्थः भवति।



**ग्रामं परितः वनम् अस्ति।** इदम् परितः इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र परितः इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण परितः इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन ग्रामं परितः वनम् अस्ति इति वाक्यं सिद्धम्। अत्र परितः इति शब्दस्य सर्वेषु पार्श्वेषु इत्यर्थः अस्ति। एवञ्च अस्य वाक्यस्य ग्रामस्य सर्वेषु पार्श्वेषु वनम् अस्ति इत्यर्थः भवति।

**ग्रामं समया।** इदम् समया इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र समया इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण समया इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन ग्रामं समया इति वाक्यं सिद्धम्। अत्र समया इत्यस्य समीपम् इत्यर्थः अस्ति। एवञ्च अस्य वाक्यस्यार्थो भवति - ग्रामस्य समीपम् इति।

**ग्रामं निकषा।** इदम् निकषा इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र निकषा इति शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण निकषा इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन ग्रामं निकषा इति वाक्यं सिद्धम्। अत्र निकषा इति शब्दस्य समीपम् इत्यर्थः अस्ति। एवञ्च अस्य वाक्यस्य - ग्रामस्य समीपम् इत्यर्थः भवति।

**कृष्णाभक्तं हा।** इदम् हा इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र हा - शब्दस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण हा इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन कृष्णाभक्तं हा इति वाक्यं सिद्धम्। अत्र हा इति शब्दस्य निन्दा इत्यर्थः अस्ति। एवञ्च अस्य वाक्यस्य - कृष्णाभक्तस्य निन्दा इत्यर्थः भवति।

**बुभुक्षितं न प्रतिभाति किञ्चित्।** इदं प्रति इत्यस्य योगे द्वितीयाविभक्तेः उदाहरणम् अस्ति। अत्र प्रति इत्यस्य प्रयोगः अस्ति। तस्य प्रयोगे च केनापि अन्येन सूत्रेण वार्तिकेन वा द्वितीया नैव प्राप्ता आसीत् अपि तु षष्ठी शेषे इति सूत्रेण षष्ठीविभक्तिः प्राप्ता आसीत्। किन्तु वार्तिककारेण प्रति इत्यस्य प्रयोगे द्वितीयाविधायकं वार्तिकं विरचितम्। अतः षष्ठी शेषे इति सूत्रं प्रबाध्य अनेन वार्तिकेन द्वितीयायाः विधानं भवति। तेन बुभुक्षितं न प्रतिभाति किञ्चित् सिद्धम्। अत्र प्रति इति उपसर्गः, न तु कर्मप्रवचनीयः। प्रतिभाति इत्यस्य स्फुरति इत्यर्थः। यद्यपि भाति इत्यस्य स्फुरति इत्यर्थः नास्ति तथापि प्रति इति उपसर्गयोगवशात् तस्य स्फुरति इत्यर्थः भवति।

## पाठगतप्रश्नाः -१

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते। लघूत्तराणि लिखत।

१. अन्तरान्तरेणयुक्ते इत्यत्र कः समासः, कश्च विग्रहः।
२. अन्तराशब्दस्य उदाहरणं लिखत।
३. अन्तरेणशब्दस्य उदाहरणं लिखत।
४. अन्तरा इति शब्दस्य अन्तरेण इति शब्दस्य च कोऽर्थः।
५. कालाध्वनोः इति पदे कः समासः। कश्च विग्रहः।
६. मासं गुडधानाः भवन्ति इत्युदाहरणे मासमिति द्वितीया केन सूत्रेण।
७. क्रोशं कुटिला नदी अस्ति इत्युदाहरणे क्रोशमिति द्वितीया केन सूत्रेण।
८. ग्रामम् उभयतः नदी अस्ति इत्युदाहरणे ग्राममिति द्वितीया कथम्।
९. कृष्णम् ऋते सुखं नास्ति इत्युदाहरणे ऋते इत्यस्यार्थः कः।
१०. ग्रामम् अभितः जलम् अस्ति इत्युदाहरणे ग्राममिति द्वितीया कथम्।
११. हा कृष्णाभक्तम् इत्यस्य कोऽर्थः।

## [२४.३] इत्थम्भूतलक्षणे॥ (२.३.२१)

**सूत्रार्थः** - विशेषणयुक्तस्य ज्ञापके विद्यमानात् शब्दात् तृतीयाविभक्तिः भवति।

**सूत्रावतरणम्** - जटाभिः तापसः इत्यादिवाक्येषु जटादिशब्दात् केन सूत्रेण तृतीया भवति। न हि अत्र कर्तृकरणयोस्तृतीया इत्यादिसूत्रैः तृतीया भवितुं शक्नोति। जटादीनां कर्तृकरणसंज्ञकत्वाभावात्। नापि अत्र सहयुक्तेऽप्रधाने इति सूत्रेण तृतीया भवितुम् अर्हति सहार्थस्य अप्रतीतेः। अतः एवम्भूतेषु लक्ष्येषु तृतीयाविधानाय भिन्नमेव सूत्रं रचितवान् भगवान् पाणिनिः। तच्च सूत्रम् इत्थम्भूतलक्षणे इति सूत्रम्। तस्यैवात्र व्याख्यानं प्रस्तूयते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं तृतीयाविभक्तिं विदधाति। सूत्रेऽस्मिन् एकमेव इत्थम्भूतलक्षणे इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे कर्तृकरणयोस्तृतीया इति सूत्रात् तृतीया इति अनुवर्तते। अत्र इत्थम्भूतलक्षणे इत्यत्र षष्ठीतत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति इत्थम्भूतस्य लक्षणम् इति इत्थम्भूतलक्षणम्। तस्मिन् इत्थम्भूतलक्षणे। अत्र इत्थम्भूतलक्षणे तृतीयाविभक्तिः भवति इति वाक्ययोजना। इत्थम्भूतलक्षणे इत्यस्य च 'विशेषणयुक्तस्य ज्ञापके' इत्यर्थः। विद्यमानात् शब्दात् इत्यस्य अध्याहारः क्रियते। ततश्च सूत्रार्थो भवति - विशेषणयुक्तस्य ज्ञापके विद्यमानात् शब्दात् तृतीयाविभक्तिः भवति। फलितार्थश्च भवति विशेषणयुक्तज्ञापकवाचकात् शब्दात् तृतीयाविभक्तिः भवति।



**उदाहरणम् -** जटाभिः तापसः अस्ति। कमण्डलुना छात्रः प्रतीयते। यज्ञोपवीतेन ब्राह्मणः दृश्यते। दण्डेन सन्न्यासी। गन्धेन पृथिवी।

**सूत्रार्थसमन्वयः -**

**जटाभिः तापसः अस्ति।** अत्र विशेषणयुक्तः अस्ति तापसः पुरुषः। यतोहि अत्र तापसः पुरुषः इत्यस्यार्थो भवति तापसत्वयुक्तः पुरुषः। तत्र च तापसत्वं विशेषणम् अस्ति। तेन युक्तः पुरुषः अस्ति। तस्य ज्ञापिका अस्ति जटा। यतोहि जटां दृष्टैव ज्ञायते यदयं पुरुषः तापसत्वयुक्तः अस्ति। अतः विशेषणयुक्तज्ञापकजटावाचकात् जटाशब्दात् तृतीया विभक्तिः भवति। तेन च निरुक्तं वाक्यं सिध्यति।

**कमण्डलुना छात्रः प्रतीयते।** अत्र विशेषणयुक्तः अस्ति छात्रः। यतोहि अत्र छात्रः इत्यस्यार्थो भवति छात्रत्ववान्। तत्र च छात्रत्वं विशेषणम् अस्ति। तेन युक्तः कश्चित् जनः अस्ति। तस्य ज्ञापकः अस्ति कमण्डलुः। यतोहि कमण्डलुं दृष्टैव ज्ञायते यदयं जनः छात्रत्वयुक्तः अस्ति। अतः विशेषणयुक्तज्ञापककमण्डलुवाचकात् कमण्डलुशब्दात् तृतीया विभक्तिः भवति। तेन च निरुक्तं वाक्यं सिध्यति।

## [२४.४] येनाङ्गविकारः॥ (२.३.२०)

**सूत्रार्थः -** येन विकृतेन अङ्गेन शरीरस्य विकारः प्रतीयते तादृशविकृताङ्गवाचकात् शब्दात् तृतीयाविभक्तिः भवति।

**सूत्रावतरणम् -** अक्ष्णा काणः, पादेन खञ्जः इत्यादौ अक्ष्यादिशब्दात् केन सूत्रेण तृतीया भवति। न हि अत्र कर्तृकरणयोस्तृतीया इत्यादिसूत्रैः तृतीया भवितुं शक्नोति। अक्ष्यादीनां कर्तृकरणसंज्ञकत्वाभावात्। नापि अत्र सहयुक्तेऽप्रधाने इति सूत्रेण तृतीया भवितुम् अर्हति सहार्थस्य अप्रतीतेः। अतः एवम्भूतेषु लक्ष्येषु तृतीयाविधानाय भिन्नमेव सूत्रं रचितवान् भगवान् पाणिनिः। तच्च सूत्रं येनाङ्गविकारः इति सूत्रम्। तस्यैवात्र व्याख्यानं प्रस्तूयते।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं तृतीयाविभक्तिं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। येन इति तृतीयैकवचनान्तं पदम्। अङ्गविकारः इति प्रथमैकवचनान्तं पदम्। अङ्गविकारः इत्यत्र षष्ठीतत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति अङ्गस्य विकारः इति अङ्गविकारः। अस्मिन् सूत्रे कर्तृकरणयोस्तृतीया इति सूत्रात् तृतीया इति अनुवर्तते। अत्र येन अङ्गविकारः ततः तृतीयाविभक्तिः भवति इति वाक्ययोजना। येन इत्यस्य विकृतेन अङ्गेन इत्यर्थः। अङ्गविकारः इत्यस्य शरीरविकारः इत्यर्थः। एवञ्च सूत्रार्थः भवति - येन विकृतेन अङ्गेन शरीरस्य विकारः प्रतीयते तादृशविकृताङ्गवाचकात् शब्दात् तृतीयाविभक्तिः भवति।

**उदाहरणम् -** नेत्रेण काणः पुरुषः। पादेन खञ्जः वृषभः। नेत्राभ्याम् अन्धः सूरदासः।

**सूत्रार्थसमन्वयः -**

**नेत्रेण काणः पुरुषः।** अत्र विकृतम् अङ्गमस्ति नेत्रम्। तेन च विकृतेन अङ्गेन नेत्रेण शरीरे विकारः सूच्यते। अतः तादृशविकृताङ्गवाचकात् नेत्रशब्दात् तृतीयाविभक्तिः भवति। अतः नेत्रेण काणः पुरुषः अस्ति इति वाक्यं सिध्यति।

**पादेन खञ्जः वृषभः।** अत्र विकृतम् अङ्गमस्ति पादः। तेन च विकृतेन अङ्गेन पादेन शरीरे विकारः सूच्यते। अतः तादृशविकृताङ्गवाचकात् पादशब्दात् तृतीयाविभक्तिः भवति। पादेन खञ्जः वृषभः अस्ति इति वाक्यं सिध्यति।

**नेत्राभ्याम् अन्धः सूरदासः।** अत्र विकृतम् अङ्गमस्ति नेत्रम्। तेन च विकृतेन अङ्गेन नेत्रेण शरीरे विकारः सूच्यते। अतः तादृशविकृताङ्गवाचकात् नेत्रशब्दात् तृतीयाविभक्तिः भवति। नेत्राभ्याम् अन्धः सूरदासः इति वाक्यं सिध्यति।

## [२४.५] सहयुक्तेऽप्रधाने॥ (२.३.१९)

**सूत्रार्थः** - सहार्थकशब्दप्रयोगे अमुख्यार्थवाचकात् शब्दात् तृतीयाविभक्तिः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं तृतीयाविभक्तिं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। सहयुक्ते इति सप्तम्येकवचनान्तं पदम्। अप्रधाने इति सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे कर्तृकरणयोस्तृतीया इति सूत्रात् तृतीया इति अनुवर्तते। अत्र सहयुक्ते इत्यत्र तृतीयातत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति - सहेन युक्तः इति सहयुक्तः। तस्मिन् सहयुक्ते। अप्रधाने इत्यत्र नञ्तत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति - न प्रधानम् इति अप्रधानम्। तस्मिन् अप्रधाने। सहयुक्ते अप्रधाने तृतीया विभक्तिः भवति इति वाक्ययोजना। अत्र सहयुक्ते इत्यस्य सहार्थकशब्दप्रयोगे इत्यर्थः। अप्रधाने इत्यस्य अमुख्ये इत्यर्थः। अत्र विद्यमानात् शब्दात् इत्यनयोः पदयोः अध्याहारः क्रियते। एवञ्च सूत्रार्थः भवति सहार्थकशब्दप्रयोगे अमुख्ये अर्थे विद्यमानात् शब्दात् तृतीयाविभक्तिः भवति। अस्य फलितार्थः भवति - सहार्थकशब्दप्रयोगे अमुख्यार्थवाचकात् शब्दात् तृतीयाविभक्तिः भवति।

**उदाहरणम्** - पुत्रेण सह पिता गच्छति। शिष्येण साकं गुरुः गच्छति। लक्ष्मणेन समं रामः खादति।

**सूत्रार्थसमन्वयः -**

**पुत्रेण सह पिता गच्छति।** अस्मिन् वाक्ये सहार्थकस्य सहशब्दस्य प्रयोगः अस्ति। तस्मिन् च प्रयोगे गमनक्रियायाम् पितुः साक्षाद् अन्वयः प्रतीयते। गमनक्रियायाम् पुत्रस्य अन्वयः सहशब्दबलात् प्रतीयते। अतः पिता मुख्यः। पुत्रः अमुख्यः। एवञ्च सहार्थकशब्दप्रयोगे अमुख्यार्थवाचकात् पुत्रशब्दात् अनेन सूत्रेण तृतीया विभक्तिः भवति। तेन पुत्रेण सह पिता गच्छति। इति वाक्यं सिध्यति।

**शिष्येण साकं गुरुः गच्छति।** अस्मिन् वाक्ये सहार्थकस्य साकम् इति शब्दस्य प्रयोगः अस्ति। तस्मिन् च प्रयोगे गमनक्रियायाम् गुरोः साक्षाद् अन्वयः प्रतीयते। गमनक्रियायाम् शिष्यस्य अन्वयः

सहशब्दबलात् प्रतीयते। अतः गुरुः मुख्यः। शिष्यः अमुख्यः। एवञ्च सहार्थकस्य साकम् इति शब्दस्य प्रयोगे अमुख्यार्थवाचकात् शिष्यशब्दात् अनेन सूत्रेण तृतीया विभक्तिः भवति। तेन शिष्येण साकं गुरुः गच्छति। इति वाक्यं सिध्यति।

**लक्ष्मणेन समं रामः खादति।** अस्मिन् वाक्ये सहार्थकस्य समम् इति शब्दस्य प्रयोगः अस्ति। तस्मिन् च प्रयोगे खादनक्रियायाम् रामस्य साक्षाद् अन्वयः प्रतीयते। खादनक्रियायाम् लक्ष्मणस्य अन्वयः सहशब्दबलात् प्रतीयते। अतः रामः मुख्यः। लक्ष्मणः अमुख्यः। एवञ्च सहार्थकस्य समम् इति शब्दस्य प्रयोगे अमुख्यार्थवाचकात् लक्ष्मणशब्दात् अनेन सूत्रेण तृतीया विभक्तिः भवति। तेन लक्ष्मणेन समं रामः खादति इति वाक्यं सिध्यति।

**अत्रायं विशेषः -** इदं सूत्रं सहार्थकशब्दानां योगे तु प्रवर्तते एव। किन्तु यत्र सहशब्दस्य वाक्ये प्रयोगः नास्ति किन्तु सहार्थः प्रतीयमानः अस्ति तत्रापि इदं सूत्रं प्रवर्तते।

**अत्रायं विशेषः -** अत्रः कः मुख्यः कः अमुख्यः इत्यत्र प्रयोगकर्तुः इच्छा एवं कारणम्। प्रयोगकर्ता यं मुख्यत्वेन प्रतिपादयितुमिच्छति सः मुख्यः, यं च अमुख्यत्वेन प्रतिपादयितुमिच्छति सः अमुख्यः। एवञ्च यदा पुत्रः अमुख्यः इति इच्छा तदा पुत्रपदात् तृतीया। तदा च पुत्रेण सह पिता गच्छति इति प्रयोगः। यदा पिता अमुख्यः इति इच्छा तदा पितृपदात् तृतीया तदा च पित्रा सह पुत्रः गच्छति इति प्रयोगः। एवमेव इच्छानुसारं शिष्येण साकं गुरुः गच्छति इति प्रयोगः भवति। तथैव गुरुणा साकं शिष्यः गच्छति इत्यपि प्रयोगः भवति। एवमेव लक्ष्मणेन समं रामः खादति इति प्रयोगः भवति। तथैव रामेण सह लक्ष्मणः खादति इत्यपि प्रयोगः भवति।

## पाठगतप्रश्नाः -२

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१२. सहयुक्ते इत्यत्र कः समासः, कश्च विग्रहः।

१३. अङ्गविकारः इत्यत्र कः समासः कश्च विग्रहः।

१४. अङ्गविकारः इति पदस्य कः अर्थः।

१५. लक्षणशब्दस्य कः अर्थः।

१६. इत्थम्भूतलक्षणे इत्यत्र कः समासः कश्च विग्रहः।

१७. उभयतः अभितः इत्यनयोः कः अर्थः।

१८. सर्वतः परितः इत्यनयोः कः अर्थः।



## [२४.६] नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च॥ (२.३.१६)

**सूत्रार्थः** - नमोयुक्तात्, स्वस्तियुक्तात्, स्वाहायुक्तात्, स्वधायुक्तात्, अलंयुक्तात्, वषड्युक्तात् शब्दात् चतुर्थी विभक्तिः भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं चतुर्थीविभक्तिं विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। नमःस्वस्तिस्वाहास्वधालंवषड्योगात् इति पञ्चम्येकवचनान्तं पदम्। च इति अव्ययपदम्। अस्मिन् सूत्रे चतुर्थी सम्प्रदाने इति सूत्रात् चतुर्थी इति अनुवर्तते। नमःस्वस्तिस्वाहास्वधालंवषड्योगात् इत्यत्र द्वन्द्वगर्भतृतीयातत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति नमश्च स्वस्तिश्च स्वाहा च स्वधा च अलं च वषड् च इति नमःस्वस्तिस्वाहास्वधालंवषड्। तेन योगः इति नमःस्वस्तिस्वाहास्वधालंवषड्योगः। तस्मात् नमःस्वस्तिस्वाहास्वधालंवषड्योगात्। अत्र योगशब्दस्य प्रत्येकं नमः इत्यादिशब्देन सह सम्बन्धः भवति। योगात् इत्यस्य युक्तात् इत्यर्थः। एवञ्च नमोयुक्तात्, स्वस्तियुक्तात्, स्वाहायुक्तात्, स्वधायुक्तात्, अलंयुक्तात्, वषड्युक्तात् इति तस्य अर्थः लभ्यते। एवञ्च सूत्रार्थः भवति - नमोयुक्तात् स्वस्तियुक्तात् स्वाहायुक्तात् स्वधायुक्तात् अलंयुक्तात् वषड्युक्तात् शब्दात् चतुर्थीविभक्तिः भवति इत्यर्थः लभ्यते।

**उदाहरणम्** - हरये नमः। इन्द्राय स्वाहा। पितृभ्यः स्वधा। दैत्येभ्यः अलं हरिः। इन्द्राय वषड्।

**सूत्रार्थसमन्वयः** -

**हरये नमः।** नमः पदस्य नमनम् इत्यर्थः। अत्र नमोयुक्तात् शब्दात् चतुर्थी विभक्तिः भवति इति अंशेन चतुर्थीविभक्तिः प्राप्ता। तत्र कस्मात् शब्दात् चतुर्थी विभक्तिः भवति इति चेदुच्यते यम् उद्दिश्य नमनं विधीयते तद्वाचकात् शब्दात् चतुर्थी विभक्तिः भविष्यति। यथा हरये नमः, इत्यत्र कश्चित् जनः हरिम् उद्दिश्य नमनं करोति तस्मात् हरिशब्दात् चतुर्थी विभक्तिः सञ्जाता। तेन हरये नमः इति वाक्यं सिद्धम्।

**प्रजाभ्यः स्वस्ति।** स्वस्तिशब्दस्य मङ्गलम् इत्यर्थः। अत्र स्वस्तियुक्तात् शब्दात् चतुर्थी विभक्तिः भवति इति अंशेन चतुर्थीविभक्तिः प्राप्ता। तत्र कस्मात् शब्दात् चतुर्थी स्यादिति चेत् यस्य मङ्गलम् इष्टमस्ति तद्वाचकात् शब्दात् चतुर्थी विभक्तिः भविष्यति। यथा प्रजाभ्यः स्वस्ति, अत्र प्रजायाः मङ्गलमिष्टमस्ति अतः प्रजाशब्दात् चतुर्थी विभक्तिः सञ्जाता। तेन प्रजाभ्यः स्वस्ति इति सिद्धम्। एवमेव गोभ्यः स्वस्ति भूयात् इत्यादावपि बोध्यम्।

**इन्द्राय स्वाहा।** स्वाहाशब्दस्य त्यागः इत्यर्थः। अत्र स्वाहायुक्तात् शब्दात् चतुर्थी विभक्तिः भवति इति अंशेन चतुर्थीविभक्तिः प्राप्ता। तत्र कस्मात् शब्दात् चतुर्थी स्यादिति चेद् यमुद्दिश्य त्यागो विधीयते। तद्वाचकात् शब्दात् चतुर्थी विभक्तिः भवति। यथा इन्द्राय स्वाहा। अत्र इन्द्रम् उद्दिश्य त्यागो विधीयते, अतः इन्द्रशब्दात् चतुर्थी विभक्तिः भवति। तेन इन्द्राय स्वाहा इति वाक्यं सिद्धम्।

**पितृभ्यः स्वधा।** स्वधाशब्दस्यापि त्यागः इत्यर्थः। स्वधायुक्तात् शब्दात् चतुर्थी विभक्तिः भवति इति अंशेन चतुर्थीविभक्तिः प्राप्ता। तत्र कस्मात् शब्दात् चतुर्थी इति चेद् यमुद्दिश्य त्यागो विधीयते। तद्वाचकात् शब्दात् चतुर्थी विभक्तिः स्यात्। यथा पितृभ्यः स्वधा, अत्र पित्रुद्देश्यकः त्यागः विधीयते तस्मात् पितृशब्दात् चतुर्थी विभक्तिः भवति। तेन पितृभ्यः स्वधा इति वाक्यं सिद्धम्।

**दैत्येभ्यः अलं हरिः।** अलमिति शब्दस्य सामार्थ्यवान् इत्यर्थः। अत्र अलंयुक्तात् शब्दात् चतुर्थी विभक्तिः भवति इति अंशेन चतुर्थीविभक्तिः प्राप्ता। तत्र कस्मात् शब्दात् चतुर्थी विभक्तिः भवति इति चेदुच्यते यदपेक्षया सामर्थ्यं प्रतिपाद्यते तद्वाचकात् शब्दात् चतुर्थी विभक्तिः भवति। यथा दैत्येभ्यः अलं हरिः इत्यत्र दैत्यापेक्षया सामर्थ्यं हरौ अस्तीति प्रतिपाद्यते अतः दैत्यवाचकात् शब्दात् चतुर्थी विभक्तिः भवति। तेन दैत्येभ्यः अलं हरिः इति वाक्यं सिद्धम्।

**अत्रायं विशेषः** - अत्रेदमपि बोध्यं यदनेन सूत्रेण अलमर्थकशब्दान्तरयोगे अपि चतुर्थी विभक्तिः विधीयते। यथा दैत्येभ्यः प्रभुः हरिः। दैत्येभ्यः समर्थः हरिः। दैत्येभ्यः शक्तः हरिः। एतेषामपि वाक्यानां दैत्यहननादिसम्बन्धिसामर्थ्यवान् हरिः इत्यर्थः। एवम् मल्लाय अलं मल्लः। मल्लाय प्रभुः मल्लः। मल्लाय प्रभवति मल्लः इत्यादि।

**इन्द्राय वषड्।** वषड्शब्दस्यापि त्यागः इत्यर्थः। वषड्युक्तात् शब्दात् चतुर्थी विभक्तिः भवति इति अंशेन चतुर्थीविभक्तिः प्राप्ता। तत्र कस्मात् शब्दात् चतुर्थी विभक्तिः भवतीति चेदुच्यते यमुद्दिश्य त्यागो विधीयते तद्वाचकात् शब्दात् चतुर्थी विभक्तिः भवति। यथा इन्द्राय वषड्, इत्यत्र इन्द्रम् उद्दिश्य त्यागो विधीयते, अतः इन्द्रवाचकात् शब्दात् चतुर्थी विभक्तिः भवति। तेन इन्द्राय वषड् इति वाक्यं सिद्धम्।

## [२४.७] अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते॥ (२.३.२९)

**सूत्रार्थः** - अन्ययोगे आराद् -योगे इतरयोगे ऋतेयोगे दिक्शब्दयोगे अञ्चूत्तरपदयोगे आच्प्रत्ययान्तयोगे आहिप्रत्ययान्तयोगे च प्रातिपदिकात् पञ्चमी विभक्तिः भवति।

**सूत्रावतरणम्** - कृष्णात् अन्यः रामः इत्यादौ कृष्णादिपदात् केन सूत्रेण पञ्चमी। न हि प्रकृते अपादाने पञ्चमी इति सूत्रेण पञ्चमी भवितुमर्हति, कृष्णस्य अपादानसंज्ञकत्वाभावात्। अतः एवम्भूतेषु स्थलेषु पञ्चमीविधानाय भगवान् पाणिनिः भिन्नमेव सूत्रं रचितवान्। तच्च सूत्रं भवति - अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति सूत्रम्। तस्यैवात्र व्याख्यानं प्रस्तूयते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं पञ्चमीं विदधाति। सूत्रेऽस्मिन् अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति सप्तम्यन्तम् एकमेव पदमस्ति। अत्र अपादाने पञ्चमी इति सूत्रात् पञ्चमी इति पदम् अनुवर्तते। अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति पदं समस्तम् अस्ति। अत्र द्वन्द्वगर्भतृतीयातत्पुरुषसमासः अस्ति। अस्य च विग्रहः भवति अन्यश्च आराच्च इतरश्च ऋते च दिक्शब्दश्च अञ्चूत्तरपदञ्च आच्च आहिश्च इति अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहयः। अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहिभिः युक्तम् इति अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्तम्। तस्मिन् अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति नियमेन यक्ते इत्यस्य प्रत्येकम् अन्यादिपदैः सह सम्बन्धः भवति। तेन अस्य पदस्य अर्थः भवति - अन्ययुक्ते आराद्युक्ते इतरयुक्ते ऋतेयुक्ते दिक्शब्दयुक्ते अञ्चूत्तरपदयुक्ते आच्युक्ते आहियुक्ते इति। अत्र युक्ते इत्यस्य योगे इत्यर्थो बोध्यः। प्रातिपदिकात् इत्यस्याध्याहारः कर्तव्यः। ततश्च सूत्रार्थः भवति - अन्ययोगे

आराद्योगे इतरयोगे ऋतेयोगे दिक्शब्दयोगे अञ्चूत्तरपदयोगे आच्प्रत्ययान्तयोगे आहिप्रत्ययान्तयोगे च प्रातिपदिकात् पञ्चमी विभक्तिः भवति।

**उदाहरणम् -** कृष्णात् अन्यः रामः। वनाद् आरात् ग्रामः। कृष्णात् इतरः बलरामः। रामात् ऋते सुखं नास्ति। वनात् पूर्वः ग्रामः। ग्रामात् प्राक्। ग्रामाद् दक्षिणा। ग्रामात् दक्षिणाहि।

**सूत्रार्थसमन्वयः -**

**कृष्णात् अन्यः रामः अस्ति।** इदम् अन्ययोगे प्रातिपदिकात् पञ्चमी विभक्तिः भवति इति वाक्यस्य उदाहरणम् अस्ति। तत्र अन्ययोगे कस्मात् प्रातिपदिकात् पञ्चमी स्यादिति चेदुच्यते। अन्यशब्दस्य अर्थः भवति भिन्नः इति। एवञ्च यस्य भेदः प्रतिपाद्यते तादृशार्थवाचकात् प्रातिपदिकात् एव पञ्चमी विभक्तिः भवति। प्रकृते कृष्णस्य भेदः रामे अस्ति इति वक्तुम् इच्छति वाक्यस्य प्रयोगकर्ता। अतः कृष्णप्रातिपदिकादेव पञ्चमी न तु रामप्रातिपदिकात्। यदा च रामस्य भेदः कृष्णे अस्ति इत्यर्थः स्याद् तदा तु रामात् अन्यः कृष्णः अस्ति इति रामप्रातिपदिकात् एव पञ्चमी भविष्यति। एवमेव सर्वत्र उदाहरणेषु बोध्यम्।

**अत्रायं विशेषः -** अत्र सूत्रे अन्यपदेन अन्यशब्दस्य पर्यायभूतानां समेषां शब्दानां ग्रहणं विवक्षितमस्ति। अन्य इत्यस्य च भिन्नः भेदवान् इत्यर्थः एवञ्च तेषां योगे अपि पञ्चमी विभक्तिः भविष्यति, तत्र एतेषां शब्दानां योगे कस्मात् पञ्चमी स्यादिति चेत् यस्य भेदः प्रतिपादनीयः अस्ति तादृशार्थवाचकात् शब्दात् पञ्चमी विभक्तिः भविष्यतीति। एवञ्च कृष्णात् अन्यः बलरामः। रामात् भिन्नः भरतः। भरतात् इतरः लक्ष्मणः। घटात् भेदवान् पटः इत्यादौ सर्वत्र पञ्चमी सिध्यति।

**वनाद् आरात् ग्रामः।** अत्र आराद्योगे प्रातिपादिकात् पञ्चमी विभक्तिः भवति इत्यंशस्य इदमुदाहरणमस्ति। तत्र आराद् -योगे कस्मात् प्रातिपदिकात् पञ्चमी विभक्तिः भविष्यति इति चेद् आराद् इति शब्दस्य 'आरात् दूरसमीपयोः' इति कोशप्रामाण्यात् दूरं समीपं चार्थः। एवञ्च यदपेक्षया दूरत्वं समीपत्वं वा प्रतिपाद्यते तद्वाचकात् शब्दात् पञ्चमी भविष्यति। वनात् आरात् ग्रामः इत्यस्य वनस्य दूरं समीपं वा ग्रामः इत्यर्थः। एवञ्च वनापेक्षया ग्रामस्य दूरत्वं सामीप्यं वा प्रतिपाद्यते। अतः वनशब्दात् पञ्चमी विभक्तिः जाता। तेन वनाद् आराद् ग्रामः इति वाक्यं सिद्धम्।

**कृष्णात् इतरः बलरामः।** अत्र इतरयोगे प्रातिपदिकात् पञ्चमीविभक्तिः भवति इत्यंशस्य इदमुदाहरणमस्ति। तत्र इतरयोगे कस्मात् प्रातिपदिकात् पञ्चमीविभक्तिः भविष्यति इति चेद् इतरशब्दस्यापि भिन्नः इत्यर्थः। एवञ्च यस्य भेदः प्रतिपाद्यते तादृशार्थवाचकात् प्रातिपादिकात् पञ्चमीविभक्तिः भविष्यति। यथा प्रकृतोदाहरणे कृष्णस्य भेदः बलरामे अस्ति इति प्रातिपाद्यते। तस्मात् कृष्णप्रातिपादिकात् पञ्चमी जाता। तेन कृष्णात् इतरः बलरामः इति सिद्धम्।

**कृष्णात् ऋते।** ऋतेयोगे पञ्चमी विभक्तिः भवति इत्यंशस्य इदमुदाहरणमस्ति। तत्र ऋते योगे कस्मात् पञ्चमीविभक्तिः भवति इति चेत् 'ऋते नाना च वर्जने' इति कोशप्रामाण्यात् ऋतेशब्दस्य अत्यन्ताभावः इत्यर्थः। एवञ्च अत्यन्ताभावस्य प्रतियोगिवाचकात् शब्दात् पञ्चमी विभक्तिः भविष्यति।

कृष्णात् ऋते इत्यादौ यथा। अस्य हि कृष्णप्रतियोगिकाभावः इत्यर्थः। एवं चात्र अभावस्य प्रतियोगी कृष्णः। अतः कृष्णशब्दात् पञ्चमी विभक्तिः अभवत्। तेन कृष्णात् ऋते इति सिद्धम्।

**वनात् पूर्वः ग्रामः।** अत्र दिक्शब्दार्थयोगे पञ्चमी विभक्तिः भवति इत्यंशस्य इदमुदाहरणमस्ति।। तत्र दिक्छब्दयोगे कस्मात् प्रातिपदिकात् पञ्चमीविभक्तिः भवति इति चेदुच्यते दिक्शब्दयोगे दिशः अवधित्वेन विवक्षितार्थवाचकात् प्रातिपदिकात् पञ्चमी विभक्तिः भविष्यति। यथा वनात् पूर्वः ग्रामः इत्यादौ पूर्वत्वस्य अवधित्वेन वनं विवक्षितमस्ति। अतः वन इति प्रातिपदिकात् पञ्चमी भवति। तेन वनाद् पूर्वः ग्रामः इति सिद्धम्।

**ग्रामात् प्राग् वनम् अस्ति।** अत्र अञ्चूत्तरपदयोगे प्रातिपदिकात् पञ्चमी विभक्तिः भवति इत्यंशेन पञ्चमी विभक्तिः प्राप्ता वर्तते। तत्र अञ्चूत्तरपदयोगे कस्मात् प्रातिपदिकात् पञ्चमी भवति इति चेत् अञ्चूत्तरपदानि अपि दिग्वाचकानि भवन्तीति कृत्वा तेषां योगे अपि अवधिभूतार्थवाचकात् प्रातिपदिकात् पञ्चमी विभक्तिः भविष्यति। यथा ग्रामात् प्राग् वनम् इत्यत्र प्राग् इति अञ्चूत्तरपदमस्ति। अस्य च पूर्वदिगित्यर्थः। तदवधित्वेन च ग्रामो विवक्षितः। अतः ग्रामशब्दात् पञ्चमी विभक्तिः जाता। तेन ग्रामात् प्राग् वनम् इति वाक्यं सिद्धम्। अस्य च ग्रामावधिकपूर्वदिग्वर्ति वनम् इत्यर्थः।

**ग्रामात् दक्षिणा।** अत्र आच्प्रत्ययान्तयोगे पञ्चमी विभक्तिः भवति इत्यंशेन पञ्चमी विभक्तिः प्राप्ता वर्तते। तत्र आच्प्रत्ययान्तयोगे कस्मात् प्रातिपदिकात् पञ्चमी भवति इति चेत् आच्प्रत्ययान्तशब्दाः अपि दिग्वाचकाः भवन्ति अतः तेषां योगे अपि अवधिभूतार्थवाचकात् प्रातिपदिकात् पञ्चमी विभक्तिः भविष्यति। यथा ग्रामात् दक्षिणा इत्यादौ दक्षिणाशब्दः आच्प्रत्ययान्तः अस्ति। अस्य च दक्षिणादिग् इत्यर्थः। तस्याः दक्षिणदिशः अवधित्वेन चात्र ग्रामः विवक्षितः। अतः ग्रामशब्दात् पञ्चमी विभक्तिः जाता। तेन च ग्रामात् दक्षिणा इति वाक्यं सिद्धम्। अस्य च वाक्यस्य ग्रामावधिकदक्षिणादिगित्यर्थः।

**ग्रामात् दक्षिणाहि।** अत्र आहिप्रत्ययान्तयोगे पञ्चमी विभक्तिः भवति इत्यंशेन पञ्चमी विभक्तिः प्राप्ता वर्तते। तत्र आहिप्रत्ययान्तयोगे कस्मात् प्रातिपदिकात् पञ्चमी भवति इति चेत् आहिप्रत्ययान्तशब्दाः अपि दिग्वाचकाः भवन्ति। अतः तेषां योगे अपि अवधिभूतार्थवाचकात् प्रातिपदिकात् पञ्चमी विभक्तिः भविष्यति। यथा ग्रामात् दक्षिणाहि इत्यादौ दक्षिणाहिशब्दः आहिप्रत्ययान्तः अस्ति। अस्य च दक्षिणादिग् इत्यर्थः। तस्याः दक्षिणादिशः अवधित्वेन चात्र ग्रामः विवक्षितः। अतः ग्रामशब्दात् पञ्चमी विभक्तिः जाता। तेन ग्रामात् दक्षिणाहि इति वाक्यं सिद्धम्। अस्य च वाक्यस्य ग्रामावधिकदक्षिणादिगित्यर्थः।

## पाठगतप्रश्नाः -३

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१९. हरये नमः इत्यत्र चतुर्थी केन सूत्रेण।

२०. दैत्येभ्यः अलं हरिः  इत्यत्र चतुर्थी केन सूत्रेण।

२१. स्वाहाशब्दस्य कोऽर्थः।

२२. कृष्णात् अन्यः रामः इत्यत्र पञ्चमी केन सूत्रेण।

२३. वनाद् आरात् ग्रामः इत्यत्र आराद् इत्यस्य कोऽर्थः।

२४. कृष्णात् ऋते इत्यत्र पञ्चमी केन सूत्रेण।

२५. ग्रामात् दक्षिणाहि  इत्यत्र दक्षिणाहि इत्यस्य कोऽर्थः।

## पाठसारः

अस्मिन् पाठे षट् सूत्राणि उपात्तानि। तत्रादौ अन्तरान्तरेण युक्ते इति सूत्रेण अन्तरायुक्ते अर्थे विद्यमानात् प्रातिपदिकाद् द्वितीयाविभक्तिः भवति। अन्तरेणयुक्ते अर्थे विद्यमानात् प्रातिपदिकात् द्वितीयाविभक्तिः भवति।

कालस्य मार्गस्य वा द्रव्येण गुणेन क्रियया च सह अत्यन्तसंयोगे सति कालवाचकात् अध्ववाचकात् च शब्दात् द्वितीयाविभक्तिः कालाध्वनोरत्यन्तसंयोगे इति सूत्रेण भवति।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।

द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥

इति वार्तिकमपि एतत्सूत्रव्याख्यायाम् उक्तं व्याख्यातं च।

अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इति वार्तिकमपि तत्रैव उपन्यस्तम्।

विशेषणयुक्तस्य ज्ञापके विद्यमानात् शब्दात् तृतीयाविभक्तिः इत्थम्भूतलक्षणे इति सूत्रेण भवति। ज्ञापकं च लक्षणमत्र।

येन विकृतेन अङ्गेन शरीरस्य विकारः प्रतीयते तादृशविकृताङ्गवाचकात् शब्दात् तृतीयाविभक्तिः येनाङ्गविकारः इति सूत्रेण भवति।

समम् सार्धम् साकम् इत्यादिसहार्थकशब्दप्रयोगे अमुख्यार्थवाचकात् शब्दात् तृतीयाविभक्तिः सहयुक्तेऽप्रधाने इति सूत्रेण भवति। नमः स्वस्ति स्वाहा स्वधा अलम् वषट् इति एतेषाम् अव्ययानाम् अर्थे यस्य शब्दस्यार्थस्य अन्वयः भवति तद्वाचकात् शब्दात् नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च इति सूत्रेण चतुर्थी विधीयते। अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति सूत्रेण पञ्चमी विभक्तिः विधीयते। एवम् सूत्राणि तेषामुदाहरणानि च सविस्तरमुपन्यस्तानि बोधसौकर्याय समेषाम् अध्येतॄणाम्।

## पाठान्तप्रश्नाः

अत्र परीक्षोपयोगिनः प्रष्टव्याः प्रश्नाः प्रदीयन्ते।

१. अन्तरान्तरेणयुक्ते इति सूत्रस्य व्याख्या कार्या।

२. कालाध्वनोरत्यन्तसंयोगे इति सूत्रस्य व्याख्यां लिखन्तु।
३. इत्थम्भूलक्षणे इति सूत्रस्य व्याख्या विधेया।
४. येनाङ्गविकारः इति सूत्रस्य व्याख्यां लिखत।
५. सहयुक्तेऽप्रधाने इति सूत्रस्य व्याख्या लिख्यताम्।
६. अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति सूत्रस्य व्याख्यां लिखत।
७. छात्रः मासं पठति इति प्रयोगस्य सिद्धिप्रक्रियां लिखन्तु।
८. दैत्येभ्यः अलं हरिः इति प्रयोगस्य सिद्धिप्रक्रियां लिखत।
९. पुत्रेण सह पिता गच्छति इति प्रयोगस्य सिद्धिप्रक्रिया लेख्या।
१०. वनाद् आरात् ग्रामः इति प्रयोगस्य सिद्धिप्रक्रिया लेख्या।

## पाठगतप्रश्नोत्तराणि

### उत्तराणि-१

१. अन्तरान्तरेणयुक्ते इत्यत्र द्वन्द्वगर्भतृतीयातत्पुरुषसमासः। अस्य च विग्रहः अन्तरा च अन्तरेण च इति अन्तरान्तरेणौ, ताभ्यां युक्तः इति अन्तरान्तरेणयुक्तः। तस्मिन् अन्तरान्तरेणयुक्ते।
२. रामं लक्ष्मणं च अन्तरा सीता अस्ति।
३. हरिम् अन्तरेण सुखं नास्ति।
४. अन्तरा इति शब्दस्य मध्ये इत्यर्थः। अन्तरेण इति शब्दस्य च विना इत्यर्थः।
५. कालाध्वनोः इति पदे इतरेतरयोगद्वन्द्वसमासः। अस्य च विग्रहः कालश्च अध्वा च इति कालाध्वानौ। तयोः कालाध्वनोः।
६. कालाध्वनोरत्यन्तसंयोगे।
७. कालाध्वनोरत्यन्तसंयोगे।
८. उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।। इति वार्तिकेन।
९. विना इत्यर्थः।
१०. अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि वार्तिकेन।
११. कृष्णाभक्तस्य निन्दा इत्यर्थः भवति।

### उत्तराणि-२

१२. सहयुक्ते इत्यत्र तृतीयातत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति - सहेन युक्तः इति सहयुक्तः। तस्मिन् सहयुक्ते।
१३. अङ्गविकारः इत्यत्र षष्ठीतत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति - अङ्गस्य विकारः इति

अङ्गविकारः।

१४. अङ्गविकारः इति पदस्य अङ्गिविकारः इत्यर्थः। शरीरविकारः इति यावत्।

१५. लक्षणशब्दस्य ज्ञापकम् इत्यर्थः।

१६. इत्थम्भूतलक्षणे इत्यत्र षष्ठीतत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति - इत्थम्भूतस्य लक्षणम् इति इत्थम्भूतलक्षणम्। तस्मिन् इत्थम्भूतलक्षणे।

१७. उभयतः अभितः इत्यनयोः पार्श्वद्वये इति अर्थः।

१८. सर्वतः परितः इत्यनयोः सर्वेषु पार्श्वेषु इति अर्थः।

**उत्तराणि-३**

१९. नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च।

२०. नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च।

२१. स्वाहाशब्दस्य त्यागः इत्यर्थः।

२२. अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते।

२३. आरात् दूरसमीपयोः' इति कोशप्रामाण्यात् दूरं समीपं चार्थः।

२४. अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते।

२५. दक्षिणादिग्।

।।इति चतुर्विंशः पाठः।।

# २५

# उपपदविभक्तौ षष्ठी सप्तमी च

## प्रस्तावना

कारकप्रकरणस्य प्रारम्भे इदं प्रतिपादितमेव यत् प्रथमाद्वितीयादयः सप्त सुब्विभक्तयः सन्ति। पुनः सप्त अपि विभक्तयः कारकोपपदभेदेन द्विविधाः भवन्ति। तेन सप्त कारकविभक्तयः भवन्ति, सप्त च उपपदविभक्तयः भवन्ति। अस्मिन् पाठे उपपदपञ्चमीविभक्तेः उपपदषष्ठीविभक्तेः उपपदसप्तमीविभक्तेश्च वर्णनं क्रियते। तेषामुदाहरणानि च प्रदर्श्यन्ते। सूत्राणाम् अर्थं सम्यग् अधीत्य तस्य उदाहरणेषु समन्वयः कथं कृतः इति विशेषतः अवलोकनीयम्। तादृशानि उदाहरणानि व्यवहारे प्रयोक्तव्यानि। एवञ्च अन्येषु साहित्यग्रन्थेषु उदाहरणानि लब्धानि चेत् तेषां तत्र तत्र ससूत्रं समन्वयः चिन्तनीयः।

## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- उपपदषष्ठीविभक्तिं ज्ञातुं प्रभवेत्।
- उपपदसप्तमीविभक्तिं ज्ञातुं प्रभवेत्।
- वाक्येषु उपपदषष्ठीसप्तमीविभक्तेः शुद्धं प्रयोगं कर्तुं शक्नुयात्।
- वाक्येषु उपपदषष्ठीसप्तमीविभक्तेः प्रयोगं बोद्धुं शक्नुयात्।

---

## [२५.१] षष्ठी शेषे॥ (२.३.५०)

**सूत्रार्थः** - कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः तत्र षष्ठी स्यात्।

**सूत्रव्याख्या** - विधिसूत्रम् इदम्। अस्मिन् सूत्रे पदद्वयमस्ति। शेषे इति सप्तम्यन्तं पदम्। षष्ठी इति प्रथमान्तं पदम्। एवं च अस्य सूत्रस्य अर्थो भवति शेषे अर्थे षष्ठी विभक्तिः भवति। तत्र कः नाम शेषः इति चेदुच्यते उक्तादन्यः शेषः इत्युच्यते। अर्थात् यदुक्तं तस्माद्यः भिन्नः स एव शेषः भवतीति यावत्। अत्र च किमुक्तं किं च तस्मादन्यः इति चेत् शृणु - पाणिनीयाष्टके एवं प्रकारेण सूत्राणां क्रमः कर्मणि द्वितीया (२.३.२) सप्तम्यधिकरणे च (२.३.७) चतुर्थी सम्प्रदाने (२.३.१३) कर्तृकरणयोस्तृतीया (२.३.१८) अपादाने पञ्चमी (२.३.२८) प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा (२.३.४६) षष्ठी शेषे (२.३.५०)। तत्र षष्ठी शेषे इति सूत्रात् पूर्वम् अनभिहिते कर्मणि द्वितीया प्रोक्ता, अनभिहिते करणे कर्तरि

च तृतीया प्रोक्ता, अनभिहिते सम्प्रदाने चतुर्थी प्रोक्ता, अनभिहिते अपादाने पञ्चमी प्रोक्ता, अनभिहिते अधिकरणे च सप्तमी प्रोक्ता, प्रातिपदिकार्थे च प्रथमा विभक्तिः प्रोक्ता। एवं च कर्मकरणसम्प्रदानापदानाधिकरणरूपाः अर्थाः प्रातिपदिकार्थश्च उक्ताः, तेभ्यः अन्यः च सम्बन्धः वर्तते, तस्मात्सम्बन्धः एव शेषपदस्यार्थः इति भावः। एवं च सम्बन्धे अर्थे अनेन सूत्रेण षष्ठी विभक्तिः विधीयते। परन्तु प्रकृते प्रश्नः समुदेति यत्सम्बन्धस्तु द्विष्ठो भवति ततश्च अनेन कस्मात् षष्ठी विभक्तिः भविष्यतीति चेदुच्यते सम्बन्धस्य द्वौ सम्बन्धिनौ भवतः एकः प्रतियोगी अपरश्च अनुयोगी। तत्र प्रतियोगी एवं विशेषणं भेदकमिति चोच्यते। अनुयोगी च विशेष्यं भेद्यमिति चोच्यते। एवं चात्र सम्बन्धस्य प्रतियोगिवाचकात् प्रातिपदिकात् अनेन सूत्रेण षष्ठी विभक्तिः भवति इति सिद्धान्तः।

**उदाहरणम् -** राज्ञः पुरुषः अस्ति इत्यत्र राजपुरुषयोर्मध्ये स्वस्वामिभावसम्बन्धः अस्ति। तस्य प्रतियोगी राजा वर्तते, अनुयोगी च पुरुषः अस्ति। अतः प्रतियोगिवाचकपदात् अनेन सूत्रेण षष्ठी जाता। तेन निरुक्तं वाक्यं भवति। अस्य च राजसम्बन्धिपुरुषः इति बोधो भवति। यदा च पुरुषः सम्बन्धस्य प्रतियोगित्वेन विशेषणत्वेन विवक्षितः भवति तदा पुरुषपदात् षष्ठी विभक्तिः भवति। यथा पुरुषस्य राजा अस्ति इति। अस्य च पुरुषसम्बन्धिराजा इति बोधो भवति। एवमन्यत्रापि बोध्यम्।

**अत्रेदं बोध्यम् -** शेषस्य एका अपरा अपि परिभाषा वर्तते। का सा इति चेत् कर्मादीनामविवक्षा शेषः इति। अयं भावः विवक्षातः कारकाणि भवन्ति इत्यस्ति नियमः। तत्र यदा कर्मणः कर्मत्वेन विवक्षा भवति तदा तु यथायोग्यं द्वितीयादिविभक्तयः भवन्ति, पुत्रः मातरं स्मरति इत्यादौ। यदा च कर्मणः कर्मत्वेन अविवक्षा क्रियते तदा कर्मणः प्रतीतिः कर्मत्वेन नैव भवति अपितु शेषत्वेन भवति, एवं च कर्मणः कर्मत्वेन अविवक्षादशायां तस्यापि शेषत्वात् तादृशकर्मबोधकात् प्रातिपदिकादपि षष्ठी विभक्तिः भवति। यथा मातुः स्मरति। एवमेव कर्तुः यदा कर्तृत्वेन विवक्षा न क्रियते तदा कर्तृरूपार्थः अपि शेषः, तदा तादृशकर्तृरूपार्थबोधकात् प्रातिपदिकात् अपि षष्ठी विभक्तिः भवति। यथा सद्भिः गतम्। एवं यदा करणस्य करणत्वेन अविवक्षा क्रियते तदा तादृशकरणरूपार्थबोधकात् प्रातिपादिकादपि षष्ठी भवति। फलानां तृप्तः इत्यादौ तृप्तिं प्रति करणमस्ति तस्य यदा करणत्वेन अविवक्षा क्रियते तदा तद्वाचकात् षष्ठी विभक्तिः भवति। एवमन्येषु अपि कारकेषु भवति।

## पाठगतप्रश्नाः -१

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

१. षष्ठी शेषे इत्यत्र शेषपदार्थः कः।

२. सम्बन्धस्य सम्बन्धिनाम किम्।

३. षष्ठी शेषे इत्यनेन प्रतियोगिनः षष्ठी उत अनुयोगिनः।

४. षष्ठी शेषे इत्यस्य उदाहरणं किम्।

## [२५.२] चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः॥ (२.३.७३)

**सूत्रार्थः** - आशिषि गम्यमानायाम् आयुष्यमद्रभद्रकुशलसुखार्थहितैः शब्दैः उपस्थापिते अर्थे विशेषणीभूतार्थवाचकात् शब्दात् चतुर्थी भवति षष्ठी च भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण चतुर्थी षष्ठी च विधीयेते। अस्मिन् सूत्रे द्वे पदे स्तः। अत्र चतुर्थी इति प्रथमान्तं पदम्। च इति अव्ययपदम्। आशिषि इति सप्तम्यन्तं पदम्। आयुष्यमद्रभद्रकुशलसुखार्थहितैः इति तृतीयान्तं पदम्। अत्र षष्ठी (१/१) इति अनुवर्तते। एवञ्च सूत्रार्थः भवति - आशिषि गम्यमानायाम् आयुष्यमद्रभद्रकुशलसुखार्थहितैः शब्दैः उपस्थापिते अर्थे विशेषणीभूतार्थवाचकात् शब्दात् चतुर्थी भवति षष्ठी च भवति।

**उदाहरणम्** - कृष्णाय आयुष्यं भूयात्। कृष्णस्य आयुष्यं भूयात्।

**सूत्रार्थसमन्वयः** -

**कृष्णाय आयुष्यं भूयात्। कृष्णस्य आयुष्यं भूयात्।** एतेषु उदाहरणेषु भूयात् इति आशीर्लिङः प्रयोगेण आशीः गम्यमाना अस्ति। तस्यां च गम्यमानायाम् आयुष्यपदोपस्थाप्ये आयुष्यरूपे अर्थे कृष्णपदार्थः विशेषणमस्ति। विशेषणीभूतार्थवाचकात् कृष्णशब्दात् अनेन चतुर्थी षष्ठी च भवति। तेन कृष्णाय आयुष्यं भूयात्। कृष्णस्य आयुष्यं भूयात्। इत्यनयोरपि प्रयोगयोः सिद्धिः भवति। उभयोरपि वाक्ययोः कृष्णसम्बन्ध्यायुष्यकर्तृकम् आशीर्विषयकं भवनमिति बोधः।

**चैत्राय मद्रं भूयात्। चैत्रस्य मद्रं भूयात्।** इत्यादौ आशिषि गम्यमानायां मद्रपदोपस्थापिते कल्याणरूपे अर्थे विशेषणीभूतार्थः चैत्रपदार्थः। तद्वाचकात् चैत्रशब्दात् अनेन सूत्रेण चतुर्थी षष्ठी च भवति। तेन चैत्रस्य मद्रं भूयात्। चैत्राय मद्रं भूयात्। इत्यनयोः वाक्ययोः सिद्धिः भवति। उभयोरपि वाक्ययोः चैत्रसम्बन्धिकल्याणकर्तृकम् आशीर्विषयकं भवनमिति बोधः।

**अन्यानि उदाहरणानि** - आयुष्यं देवदत्ताय देवदत्तस्य वा भूयात्। चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात्। मद्रं देवदत्ताय देवदत्तस्य वा भूयात्। भद्रं देवदत्ताय देवदत्तस्य वा भूयात्। कुशलं देवदत्ताय देवदत्तस्य वा भूयात्। निरामयं देवदत्ताय देवदत्तस्य वा भूयात्। सुखं देवदत्ताय देवदत्तस्य वा भूयात्। शे देवदत्ताय देवदत्तस्य वा भूयात्। अर्थो देवदत्ताय देवदत्तस्य वा भूयात्। प्रयोजनं देवदत्ताय देवदत्तस्य वा भूयात्। हितं देवदत्ताय देवदत्तस्य वा भूयात्। पथ्यं देवदत्ताय देवदत्तस्य वा भूयात्।

## [२५.३] षष्ठी हेतुप्रयोगे॥ (२.३.२६)

**सूत्रार्थः** - हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण षष्ठी विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। षष्ठी इति प्रथमान्तं पदम्। हेतुप्रयोगे इति सप्तम्यन्तं पदम्। अत्र हेतौ (७/१) इति अनुवर्तते। ततश्च सूत्रार्थो

भवति - हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी स्यात्। तत्र कस्मादिति चेद् हेतुभूतार्थवाचकात् हेतुशब्दाच्च षष्ठी भविष्यति।

**उदाहरणम् -** अन्नस्य हेतोः वसति।

**सूत्रार्थसमन्वयः - अन्नस्य हेतोः वसति।** अत्र वासस्य हेतुः अन्नमस्ति अपि च वाक्ये हेतुशब्दस्य प्रयोगः अपि वर्तते। अतः हेतुभूतार्थवाचकात् अन्नशब्दात् हेतुशब्दाच्च अनेन सूत्रेण षष्ठी सिद्धा भवति।

## [२५.४] सर्वनाम्नस्तृतीया च॥ (२.३.२७)

**सूत्रार्थः -** सर्वनाम्नो हेतुशब्दस्य च प्रयोगे सर्वनामशब्दात् हेतुशब्दाच्च तृतीया स्यात्, षष्ठी च।

**सूत्रव्याख्या -** विधिसूत्रमिदम्। अनेन सूत्रेण तृतीया षष्ठी च विधीयेते। अस्मिन् सूत्रे द्वे पदे स्तः। सर्वनाम्नः इति षष्ठ्यन्तं पदम्। षष्ठी इति प्रथमान्तं पदमत्र अनुवर्तते। हेतुप्रयोगे (७/१) इति सप्तम्यन्तं पदं च अनुवर्तते। हेतौ इति सूत्रात् हेतौ इति सप्तम्यन्तं पदमनुवर्तते। सूत्रार्थो भवति - सर्वनाम्नो हेतुशब्दस्य च प्रयोगे सर्वनामशब्दात् हेतुशब्दाच्च तृतीया स्यात्, षष्ठी च।

**उदाहरणम् -** केन हेतुना वसति। कस्य हेतोः वसति।

**सूत्रार्थसमन्वयः -** केन हेतुना वसति। कस्य हेतोः वसति इत्यादौ। प्रकृतवाक्ये हेतुशब्दस्य सर्वनामशब्दस्य च प्रयोगो वर्तते। तस्मिन् प्रयोगे हेतौ इति सूत्रेण केवलं तृतीया प्राप्ता। तां प्रबाध्य षष्ठी हेतुप्रयोगे इति सूत्रेण केवलं षष्ठी प्राप्ता। अनेन उभयोः विधानं क्रियते। तेन केन हेतुना वसति, कस्य हेतोः वसति इति वाक्यद्वयं सिद्धम्।

## निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्॥ (वार्तिकम्)

**वार्तिकार्थः -** निमित्तपर्यायाणां प्रयोगे तेभ्यः तत्समानाधिकरणेभ्यः च सर्वासां विभक्तीनां प्रायेण प्रयोगो भवति। निमित्तस्य पर्यायाः - हेतुः कारणम् बीजम्। यदि सर्वनाम्नः प्रयोगः न स्यात् तर्हि प्रथमा द्वितीया च न भवतः।

**उदाहरणम् -**

अत्र चतुरश्रे सर्वनाम्नः प्रयोगः निमित्तपर्यायाणां च प्रयोगः सर्वासु विभक्तिषु प्रदर्शितोऽस्ति

| विभक्तिः | निमित्तशब्दप्रयोगः | कारणशब्दप्रयोगः | हेतुशब्दप्रयोगः |
|---|---|---|---|
| **प्रथमा** | किं निमित्तं वसति। | किं कारणं वसति। | को हेतुः वसति। |
| **द्वितीया** | किं निमित्तं वसति। | किं कारणं वसति। | कं हेतुं वसति। |
| **तृतीया** | केन निमित्तेन वसति। | केन कारणेन वसति। | केन हेतुना वसति। |
| **चतुर्थी** | कस्मै निमित्ताय वसति। | कस्मै कारणाय वसति। | कस्मै हेतवे वसति। |
| **पञ्चमी** | कस्मात् निमित्तात् वसति। | कस्मात् कारणात् वसति। | कस्माद् हेतोः वसति। |

| षष्ठी | कस्य निमित्तस्य वसति। | कस्य कारणस्य वसति। | कस्य हेतोः वसति। |
|---|---|---|---|
| सप्तमी | कस्मिन्निमित्ते वसति। | कस्मिन् कारणे वसति। | कस्मिन् हेतौ वसति। |

## पाठगतप्रश्नाः -२

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

५. कृष्णाय आयुष्यं भूयात् इत्यत्र चतुर्थी केन सूत्रेण।

६. चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः इत्यस्य एकमुदाहरत।

७. षष्ठी हेतुप्रयोगे इति सूत्रस्यार्थं लिखत।

८. अन्नस्य हेतोः वसति इत्यत्र अन्नशब्दात् षष्ठी केन सूत्रेण।

९. को हेतुः वसति इत्यत्र प्रथमा कुतः।

१०. हेतुशब्दप्रयोगे सर्वनाम्नः कति विभक्तयः भवन्ति।

## [२५.५] षष्ठ्यतसर्थप्रत्ययेन॥ (२.३.३०)

**सूत्रार्थः** - अतसुजर्थकप्रत्ययान्तेन योगे षष्ठी विभक्तिः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण षष्ठी विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। षष्ठी इति प्रथमान्तं पदम्। अतसर्थप्रत्ययेन इति तृतीयान्तं पदम्। अतसर्थप्रत्ययेन इति पदं समस्तं विद्यते। अत्र च बहुव्रीहिसमासः अस्ति। अस्य च विग्रहः भवति - अतसः अर्थः इति अतसर्थः। अतसर्थः एव अर्थः यस्य सः अतसर्थः, स चासौ प्रत्ययः इति अतसर्थप्रत्ययः, तेन अतसर्थप्रत्ययेन। एवञ्च अस्य पदस्य अर्थः भवति - अतसर्थकप्रत्ययेन इति। अतस् -इत्यनेन च अतसुच्प्रत्ययस्य ग्रहणम्। तस्मात् अतसर्थप्रत्ययेन इत्यस्य अतसुजर्थकप्रत्ययेन इत्यर्थः। प्रत्ययग्रहणपरिभाषया तदन्तविधिं सम्पाद्य अस्य पदस्य अर्थो भवति अतसुजर्थकप्रत्ययान्तेन इति। ततश्च सूत्रार्थो भवति - अतसुजर्थकप्रत्ययान्तेन योगे षष्ठी विभक्तिः भवति।

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः इति सूत्रादारभ्य आहि च दूरे, उत्तराच्च इत्यन्तैः सूत्रैः दिग्देशकालवृत्तिभ्यः शब्देभ्यः स्वार्थे प्रत्यया विहिताः। तत्र दक्षिणोत्तराभ्यामतसुच् इति सूत्रेण अतसुच् प्रत्ययः विहितः। तस्यार्थो भवति - दिग्देशकालरूपः। स एव अर्थः यस्य सः अतसुजर्थप्रत्ययः। दक्षिण इति शब्दः दिशावाची। तत्र अतसुच् -प्रत्यययोगेन दक्षिणतः इति शब्दः लभ्यते। अस्य प्रयोगे अनेन योगः यस्य भवति, तस्मात् षष्ठी विभक्तिः भवति।

**उदाहरणम् -** ग्रामस्य दक्षिणतः। ग्रामस्य पुरः। ग्रामस्य पुरस्तात्। ग्रामस्य उपरि। ग्रामस्य उपरिष्टात्।

**सूत्रार्थसमन्वयः -**

**ग्रामस्य दक्षिणतः।** अत्र दक्षिणतः इति शब्दः दक्षिणशब्दात् अतसुच्प्रत्यये कृते सति निष्पद्यते। अयं च शब्दः अतसर्थप्रत्ययान्तः दिग्वाचकः च अस्ति। अतः एतद्योगे पञ्चमी प्राप्ता आसीत् तां प्रबाध्य प्रकृतसूत्रेण षष्ठी विभक्तिः भवति।

**ग्रामस्य पुरः।** अत्र पुरः इति शब्दः पूर्वशब्दात् असिप्रत्यये कृते सति निष्पद्यते। असिप्रत्ययश्च अतसर्थः विद्यते। तस्माद् अयं च शब्दः अतसर्थकप्रत्ययान्तः दिग्वाचकः च अस्ति। अतः एतद्योगे पञ्चमी प्राप्ता आसीत् तां प्रबाध्य प्रकृतसूत्रेण षष्ठी विभक्तिः भवति।

**ग्रामस्य पुरस्तात्।** अत्र पुरस्तात् इति शब्दः पूर्वशब्दात् अस्तातित्यये कृते सति निष्पद्यते। अस्तातिप्रत्ययश्च अतसर्थः विद्यते। तस्माद् अयं च शब्दः अतसर्थकप्रत्ययान्तः दिग्वाचकः च अस्ति। अतः एतद्योगे पञ्चमी प्राप्ता आसीत् तां प्रबाध्य प्रकृतसूत्रेण षष्ठी विभक्तिः भवति।

**ग्रामस्य उपरि।** अत्र उपरि इति शब्दः ऊर्ध्वशब्दात् रिल्प्रत्यये कृते सति निष्पद्यते। रिल्प्रत्ययश्च अतसर्थः विद्यते। तस्माद् अयं च शब्दः अतसर्थकप्रत्ययान्तः दिग्वाचकः च अस्ति। अतः एतद्योगे पञ्चमी प्राप्ता आसीत् तां प्रबाध्य प्रकृतसूत्रेण षष्ठी विभक्तिः भवति।

**ग्रामस्य उपरिष्टात्।** अत्र उपरिष्टात् इति शब्दः ऊर्ध्वशब्दात् रिष्टातिल्प्रत्यये कृते सति निष्पद्यते। रिष्टातिल्प्रत्ययश्च अतसर्थः विद्यते। तस्माद् अयं च शब्दः अतसर्थकप्रत्ययान्तः दिग्वाचकः च अस्ति। अतः एतद्योगे पञ्चमी प्राप्ता आसीत् तां प्रबाध्य प्रकृतसूत्रेण षष्ठी विभक्तिः भवति।

## [२५.६] एनपा द्वितीया॥ (२.३.३१)

**सूत्रार्थः -** एनबन्तेन योगे द्वितीया षष्ठी च भवति।

**सूत्रव्याख्या -** इदं विधिसूत्रम्। इदं सूत्रं षष्ठीविभक्तिं द्वितीयाविभक्तिं च विदधाति। सूत्रेऽस्मिन् द्वे पदे स्तः। एनपा इति तृतीयान्तपदम्। द्वितीया इति प्रथमान्तं पदम्। एनप् इति च प्रत्ययः अस्ति। अतः प्रत्ययग्रहणपरिभाषया तदन्तविधिं सम्पाद्य अस्य पदस्य अर्थो भवति एनबन्तेन इति। ततश्च सूत्रार्थो भवति - एनबन्तेन योगे द्वितीया भवति। अस्य च सूत्रस्य योगविभागः क्रियते, ततश्च एनपा इति प्रथमः योगः, द्वितीया इति द्वितीयः योगः। तत्र एनपा इति प्रथमयोगे षष्ठी इति पदमनुवर्तते। ततश्च एनपा इति सूत्रस्य अर्थो भवति - एनबन्तेन योगे षष्ठी भवति। द्वितीयश्च द्वितीया इति योगः। ततश्च सूत्रार्थो भवति - एनबन्तेन योगे द्वितीया भवति।

**उदाहरणम् -** ग्रामस्य दक्षिणेन। ग्रामं दक्षिणेन।

**सूत्रार्थसमन्वयः -**

**ग्रामस्य दक्षिणेन —** दक्षिणेन इति एनप्प्रत्ययान्तशब्दः अस्ति। तद्योगे ग्रामशब्दात् एनपा इति प्रथमयोगेन षष्ठी विभक्तिः सिध्यति।

**ग्रामं दक्षिणेन** - दक्षिणेन इति एनप्प्रत्ययान्तशब्दः अस्ति। तद्योगे ग्रामशब्दात् द्वितीया इति द्वितीययोगेन षष्ठी विभक्तिः सिध्यति।

## [२५.७] तुल्यार्थैरतुलोपमाभ्यां तृतीयान्तरस्याम्॥ (२.३.७२)

**सूत्रार्थः** - तुलाभिन्नैः उपमाभिन्नैः च सादृश्यार्थकशब्दैः योगे षष्ठी स्यात् तृतीया च।

**सूत्रावतरणम्** - रामेण तुल्यः कृष्णः इत्यादौ रामादिशब्देभ्यः केन सूत्रेण तृतीया जाता। अत्र तु षष्ठी शेषे इति सूत्रेण केवलं षष्ठी एव प्राप्ता वर्तते इति चेदुच्यते। एवम्भूतेषु स्थलेषु तृतीयाविधानाय भगवान् पाणिनिः तुल्यार्थैरतुलोपमाभ्यां तृतीयान्तरस्याम् इति भिन्नमेव सूत्रं रचितवान्। तस्यैवात्र व्याख्यानं क्रियते।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं षष्ठीविभक्तिं तृतीयाविभक्तिं च विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। तुल्यार्थैः इति तृतीयाबहुवचनान्तं पदम्। अतुलोपमाभ्याम् इति तृतीयाद्विवचनान्तं पदम्। तृतीया इति प्रथमैकवचनान्तं पदम्। अन्यतरस्याम् इति अव्ययपदम्। अत्र षष्ठी शेषे इति सूत्रात् षष्ठी इति अनुवर्तते। तुल्यार्थैः इत्यस्य सादृश्यार्थकशब्दैः इत्यर्थः। अतुलोपमाभ्याम् इत्यस्य तुलोपमाभिन्नैः इत्यर्थः। अत्र तुल्यार्थैः इत्यत्र बहुव्रीहिसमासः अस्ति। तस्य च विग्रहः भवति तुल्यः अर्थः येषां ते तुल्यार्थाः। तैः तुल्यार्थैः। अतुलोपमाभ्याम् इत्यत्र द्वन्द्वगर्भतत्पुरुषसमासः अस्ति। अस्य च विग्रहः भवति - तुला च उपमा च इति तुलोपमे। न तुलोपमे इति अतुलोपमे। ताभ्याम् अतुलोपमाभ्याम्। अत्र योगे इति प्रातिपदिकात् इति अध्याह्रियते। एवञ्च सूत्रार्थो भवति - तुलाभिन्नैः उपमाभिन्नैः च सादृश्यार्थकशब्दैः योगे प्रातिपदिकात् षष्ठी स्यात् तृतीया च।

**उदाहरणम्** - रामेण तुल्यः कृष्णः। रामस्य तुल्यः कृष्णः। कृष्णेन समः रामः, कृष्णस्य समः रामः।

**सूत्रार्थसमन्वयः** -

**रामेण तुल्यः कृष्णः। रामस्य तुल्यः कृष्णः।** अत्र वाक्ये तुल्यार्थकस्य तुल्यशब्दस्य प्रयोगः अस्ति। तस्मिन् प्रयोगे तस्यार्थेन युक्तः अस्ति रामः। अतः राम इति प्रातिपदिकात् तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् इति सूत्रेण तृतीया षष्ठी च भवति। तेन रामेण तुल्यः कृष्णः। रामस्य तुल्यः कृष्णः। इति वाक्ययोः सिद्धिः भवति।

## [२५.८] आयुक्तकुशलाभ्यां चासेवायाम्॥ (२.३.४०)

**सूत्रार्थः** - आसेवायां गम्यमानायाम् आयुक्तयोगे कुशलयोगे च प्रातिपदिकात् षष्ठी भवति सप्तमी च भवति।

**सूत्रावतरणम्** - आयुक्तः हरिपूजनस्य, आयुक्तः हरिपूजने। कुशलः हरिपूजनस्य। कुशलः हरिपूजने इत्यादौ आयुक्तकुशलयोगे राज्ञः पुरुषः इत्यादौ इव केवला षष्ठी प्राप्ता आसीत्। सप्तमी तु न केनापि सूत्रेण प्राप्ता। तद्विधानाय आयुक्तकुशलाभ्यां चासेवायाम् इति सूत्रं समागतम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं षष्ठीविभक्तिं सप्तमीविभक्तिं च विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। आयुक्तकुशलाभ्याम् इति तृतीयाद्विवचनान्तं पदम्। च इति अव्ययपदम्। आसेवायाम् इति सप्तम्येकवचनान्तं पदम्। अत्र सप्तम्यधिकरणे च इति सूत्रात् सप्तमी इति पदमनुवर्तते। षष्ठी चानादरे इति सूत्रात् षष्ठी इति पदम् अनुवर्तते। अत्र आयुक्तकुशलाभ्याम् इति पदं समस्तं वर्तते। अत्र च इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति - आयुक्तश्च कुशलश्च इति आयुक्तकुशलौ, ताभ्याम् आयुक्तकुशलाभ्याम्।आसेवायाम् आयुक्तकुशलाभ्यां षष्ठी सप्तमी च भवति इति वाक्ययोजना। आयुक्तकुशलाभ्याम् इति तृतीयाबलात् योगे इति आक्षिप्यते। प्रातिपदिकात् इति च आक्षिप्यते। एवञ्च सूत्रार्थो भवति - आसेवायां गम्यमानायाम् आयुक्तयोगे कुशलयोगे च प्रातिपदिकात् षष्ठी भवति सप्तमी च भवति।

**उदाहरणम्** - आयुक्तः हरिपूजनस्य, आयुक्तः हरिपूजने। कुशलः हरिपूजनस्य, कुशलः हरिपूजने।

**सूत्रार्थसमन्वयः** -

**आयुक्तः हरिपूजनस्य, आयुक्तः हरिपूजने।** अत्र वाक्ये आयुक्तशब्दस्य प्रयोगः अस्ति। पुनः अस्य वाक्यस्य तात्पर्यम् अस्ति यत् कश्चित् जनः हरिपूजने अत्यन्तसंलग्नः अस्ति। अतः आसेवा अपि गम्यमाना अस्ति। एवञ्च आसेवायां गम्यमानायाम् आयुक्तयोगे सति हरिपूजन इति प्रातिपदिकात् आयुक्तकुशलाभ्यां चासेवायाम् इति सूत्रेण यदा षष्ठी भवति तदा आयुक्तः हरिपूजनस्य इति प्रयोगः सिद्धः। यदा च सप्तमी भवति तदा आयुक्तः हरिपूजने इति प्रयोगः सिद्धः।

**कुशलः हरिपूजनस्य, कुशलः हरिपूजने।** अत्र वाक्ये कुशलशब्दस्य प्रयोगः अस्ति। पुनः अस्य वाक्यस्य तात्पर्यम् अस्ति यत् कश्चित् जनः हरिपूजने अत्यन्तकुशलः अस्ति, अतः आसेवा अपि गम्यमाना अस्ति। एवञ्च आसेवायां गम्यमानायाम् कुशलयोगे सति हरिपूजन इति प्रातिपदिकात् आयुक्तकुशलाभ्यां चासेवायाम् इति सूत्रेण यदा षष्ठी भवति तदा कुशलः हरिपूजनस्य इति प्रयोगः सिद्धः। यदा च सप्तमी भवति तदा कुशलः हरिपूजने इति प्रयोगः सिद्धः।

## पाठगतप्रश्नाः -३

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

११. अतसुच् -प्रत्ययार्थः कः।

१२. ग्रामस्य दक्षिणतः इत्यत्र षष्ठी केन सूत्रेण।

१३. षष्ठ्यतसर्थप्रत्ययेन इत्यस्य उदाहरत।

१४. ग्रामस्य दक्षिणेन इत्यत्र षष्ठी केन सूत्रेण।

१५. एनप् -प्रत्ययान्तं शब्दमेकं लिखत।

१६. एनबन्तेन योगे का का विभक्तिः भवति।

१७. रामेण तुल्यः कृष्णः इत्यत्र तृतीया केन सूत्रेण।

१८. रामेण तुल्यः कृष्णः। रामस्य तुल्यः कृष्णः। इत्यनयोः कः साधुप्रयोगः।

१९. कुशलः हरिपूजनस्य, कुशलः हरिपूजने। इत्यनयोः कः साधुप्रयोगः।

२०. अतुलोपमाभ्याम् इति पदे कः समासः अस्ति। कश्च विग्रहः।

२१. आयुक्तकुशलाभ्याम् इति पदे कः समासः अस्ति। कश्च विग्रहः।

२२. प्रसितोत्सुकाभ्याम् इति पदे कः समासः अस्ति। कश्च विग्रहः।

---

## [२५.९] प्रसितोत्सुकाभ्यां तृतीया च॥ (२.३.४४)

**सूत्रार्थः** - प्रसितयोगे उत्सुकयोगे च प्रातिपदिकात् तृतीयाविभक्तिः भवति सप्तमीविभक्तिः च भवति।

**सूत्रावतरणम्** - हरिणा प्रसितः, हरौ प्रसितः, इत्यादौ प्रसितादिशब्दप्रयोगे राज्ञः पुरुषः इत्यादौ इव केवला षष्ठी प्राप्ता आसीत्, सप्तमी तु न केनापि सूत्रेण प्राप्ता, तद्विधानाय आयुक्तकुशलाभ्यां चासेवायाम् इति सूत्रं समागतम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं तृतीयाविभक्तिं सप्तमीविभक्तिं च विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। प्रसितोत्सुकाभ्याम् इति तृतीयाद्विवचनान्तं पदम्। तृतीया इति प्रथमैकवचनान्तं पदम्। च इति अव्ययपदम्। अत्र सप्तम्यधिकरणे च इति सूत्रात् सप्तमी इति पदमनुवर्तते। अत्र प्रसितोत्सुकाभ्याम् इति पदं समस्तं वर्तते। अत्र च इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति प्रसितश्च उत्सुकश्च इति प्रसितोत्सुकौ, ताभ्याम् प्रसितोत्सुकाभ्याम्।

**सूत्रार्थविचारः** - प्रसितोत्सुकाभ्यां तृतीयाविभक्तिः सप्तमीविभक्तिः च भवति इति वाक्ययोजना। प्रसितोत्सुकाभ्याम् इति तृतीयाबलात् योगे इति आक्षिप्यते। प्रातिपदिकात् इति च आक्षिप्यते। एवञ्च सूत्रार्थो भवति। प्रसितयोगे उत्सुकयोगे च प्रातिपदिकात् तृतीयाविभक्तिः भवति सप्तमीविभक्तिः च भवति।

**उदाहरणम्** - हरिणा प्रसितः, हरौ प्रसितः। हरिणा उत्सुकः, हरौ उत्सुकः।

**सूत्रार्थसमन्वयः** -हरिणा प्रसितः, हरौ प्रसितः। हरिणा उत्सुकः, हरौ उत्सुकः। इति उदाहरणेषु सूत्रार्थस्य समन्वयः क्रियते।

**हरिपूजनेन प्रसितः भक्तः, हरिपूजने प्रसितः भक्तः।** अत्र वाक्ये प्रसितशब्दस्य प्रयोगः अस्ति। एवञ्च प्रसितशब्दयोगे इति प्रातिपदिकात् प्रसितोत्सुकाभ्यां तृतीया च इति सूत्रेण तृतीया सप्तमी च प्राप्ता। तत्र अस्मिन् वाक्ये प्रातिपदिकद्वयं वर्तते हरिपूजन इति भक्त इति च। तत्र कस्मात् प्रातिपदिकात् तृतीयासप्तम्यौ भवतः इति चेत् प्रसितशब्दस्य तत्परः इत्यर्थः। एवञ्च यस्मिन् विषये तत्परः अस्ति तद्वाचकात् शब्दात् एव तृतीयासप्तम्यौ भविष्यतः। प्रकृते च कश्चित् भक्तः हरिपूजनविषये तत्परः

अस्ति, तद्वाचकं च हरिपूजन इति प्रातिपदिकम् अस्ति, अतः तस्माद् यदा तृतीया जाता तदा हरिपूजनेन प्रसितः भक्तः इति सिद्धम्। यदा च सप्तमी जाता तदा हरिपूजने प्रसितः भक्तः इति सिद्धम्।

**हरिपूजनेन उत्सुकः भक्तः, हरपूजने उत्सुकः भक्तः।** अत्र वाक्ये उत्सुकशब्दस्य प्रयोगः अस्ति। एवञ्च उत्सुकशब्दयोगे प्रातिपदिकात् प्रसितोत्सुकाभ्यां तृतीया च इति सूत्रेण तृतीया सप्तमी च प्राप्ता। तत्र अस्मिन् वाक्ये प्रातिपदिकद्वयं वर्तते हरिपूजन इति भक्त इति च। तत्र कस्मात् प्रातिपदिकात् तृतीयासप्तम्यौ भवतः इति चेत् उत्सुकशब्दस्य तत्परः इत्यर्थः। एवञ्च यस्मिन् विषये तत्परः अस्ति तद्वाचकात् शब्दात् एव तृतीयासप्तम्यौ भविष्यतः। प्रकृते च कश्चित् भक्तः हरिपूजनविषये तत्परः अस्ति, तद्वाचकं च हरिपूजन इति प्रातिपदिकम् अस्ति, अतः तस्माद् यदा तृतीया जाता तदा हरिपूजनेन उत्सुकः भक्तः इति सिद्धम्। यदा च सप्तमी जाता तदा हरिपूजने उत्सुकः भक्तः इति सिद्धम्।

## [२५.१०] साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः॥ (२.३.४३)

**सूत्रार्थः** - अर्चायां गम्यमानां साधुयोगे निपुणयोगे च प्रातिपदिकात् सप्तमीविभक्तिः भवति प्रतेः अप्रयोगे।

**सूत्रावतरणम्** - मातरि साधुः कृष्णः, मातरि निपुणः कृष्णः, इत्यादौ साधुनिपुणशब्दप्रयोगे राज्ञः पुरुषः इत्यादौ इव केवला षष्ठी प्राप्ता आसीत्, सप्तमी तु न केनापि सूत्रेण प्राप्ता, तद्विधानाय साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः इति सूत्रं समागतम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं सप्तमीविभक्तिं विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। साधुनिपुणाभ्याम् इति तृतीयाद्विवचनान्तं पदम्। अर्चायाम् इति सप्तम्येकवचनान्तं पदम्। सप्तमी इति प्रथमान्तं पदम्। अप्रतेः इति षष्ठ्यन्तं पदम्। साधुनिपुणाभ्याम् इति पदं समस्तं वर्तते। अत्र च इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति साधुश्च निपुणश्च इति साधुनिपुणौ, ताभ्यां साधुनिपुणाभ्याम्।

**सूत्रार्थविचारः** - अर्चायां साधुनिपुणाभ्यां सप्तमीविभक्तिः भवति प्रतेः अप्रयोगे इति वाक्ययोजना। साधुनिपुणाभ्याम् इति तृतीयाबलात् योगे इति आक्षिप्यते। प्रातिपदिकात् इति च आक्षिप्यते। गम्यमानायाम् इति च आक्षिप्यते। एवञ्च सूत्रार्थो भवति। अर्चायां गम्यमानायां साधुयोगे निपुणयोगे च प्रातिपदिकात् सप्तमीविभक्तिः भवति किन्तु प्रतेः प्रयोगे सति न भवति।

**उदाहरणम्** - मातरि साधुः कृष्णः। मातरि निपुणः कृष्णः।

**सूत्रार्थसमन्वयः** - मातरि साधुः कृष्णः। मातरि निपुणः कृष्णः, इति उदाहरणेषु सूत्रार्थस्य समन्वयः क्रियते।

**मातरि साधुः कृष्णः।** अत्र वाक्ये साधुशब्दस्य प्रयोगः अस्ति। पुनः अत्र अर्चा अपि गम्यमाना अस्ति। एवञ्च अर्चायां गम्यमानायाम् साधुयोगे सति मातृ इति प्रातिपदिकात् साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः इति सूत्रेण यदा सप्तमी भवति तदा मातरि साधुः कृष्णः इति वाक्यं सिद्धम्।



**मातरि निपुणः कृष्णः।** अत्र वाक्ये निपुणशब्दस्य प्रयोगः अस्ति। पुनः अत्र अर्चा अपि गम्यमाना अस्ति। एवञ्च अर्चायां गम्यमानायाम् निपुणयोगे सति मातृ इति प्रातिपदिकात् साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः इति सूत्रेण यदा सप्तमी भवति तदा मातरि निपुणः कृष्णः इति वाक्यं सिद्धम्।

## [२५.११] स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च॥ (२.३.३९)

**सूत्रार्थः** - स्वामियोगे ईश्वरयोगे अधिपतियोगे दायादयोगे साक्षियोगे प्रतिभूयोगे प्रसूतयोगे च प्रातिपदिकात् षष्ठी भवति सप्तमी च भवति। ।

**सूत्रावतरणम्** - तत्र स्वामीश्वरादिशब्दानां प्रयोगे केवलं षष्ठी प्राप्ता आसीत्, किन्तु एतैः प्रयोगे सप्तमी अपि इष्टा अतः सप्तमीविधानाय सूत्रमिदं समागतम्।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं षष्ठीविभक्तिं सप्तमीविभक्तिं च विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः इति तृतीयाबहुवचनान्तं पदम्। च इति अव्ययपदम्। अत्र सप्तम्यधिकरणे च इति सूत्रात् सप्तमी इति पदमनुवर्तते। षष्ठी चानादरे इति सूत्रात् षष्ठी इति पदम् अनुवर्तते। अत्र स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः इति पदं समस्तं वर्तते। अत्र च इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः स्वामी च ईश्वरश्च अधिपतिश्च दायादश्च साक्षी च प्रतिभूश्च प्रसूतश्च इति स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूताः। तैः स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः।

**सूत्रार्थविचारः** - स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी भवति सप्तमी च भवति इति वाक्ययोजना। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः इति तृतीयाबलात् योगे इति आक्षिप्यते। प्रातिपदिकात् इति च आक्षिप्यते। एवञ्च सूत्रार्थो भवति स्वामियोगे ईश्वरयोगे अधिपतियोगे दायादयोगे साक्षियोगे प्रतिभूयोगे प्रसूतयोगे च प्रातिपदिकात् षष्ठी भवति सप्तमी च भवति। दायमादत्ते स दायादः।

**उदाहरणम्** - गवां स्वामी कृष्णः, गोषु स्वामी कृष्णः। गवाम् ईश्वरः, गोषु ईश्वरः। गवाम् अधिपतिः, गोषु अधिपतिः। गवां दायादः, गोषु दायादः। गवां साक्षी, गोषु साक्षी। गवां प्रतिभूः, गोषु प्रतिभूः। गवां प्रसूतः, गोषु प्रसूतः।

**सूत्रार्थसमन्वयः** - गवां स्वामी कृष्णः, गोषु स्वामी कृष्णः इति उदाहरणे सूत्रार्थस्य समन्वयः प्रस्तूयते।

**गवां स्वामी कृष्णः, गोषु स्वामी कृष्णः।** अत्र वाक्ये स्वामिशब्दस्य प्रयोगः अस्ति। एवञ्चात्र स्वामिशब्दस्य योगे प्रातिपदिकात् षष्ठी भवति सप्तमी च भवति इत्यंशेन षष्ठीसप्तम्यौ प्राप्नुतः तत्र स्वामिशब्दस्य प्रयोगे कस्मात् षष्ठीसप्तम्यौ भवतः इति चेत् यस्य स्वामी अस्ति तद्वाचकात् प्रातिपदिकात् एव। प्रकृते च स्वामिशब्दस्य प्रयोगे गवां स्वामी कृष्णः अस्ति इत्यत्र तात्पर्यम् अस्ति। तेन गवां स्वामी प्रतिपाद्यते। अतः गोवाचकात् प्रातिपदिकात् षष्ठीसप्तम्यौ भविष्यतः। एवञ्च यदा षष्ठी भवति तदा गवां

स्वामी कृष्णः इति सिद्धम्। यदा च सप्तमी भवति तदा गोषु स्वामी कृष्णः इति सिद्धम्। एवमेव अन्ये प्रयोगाः अपि ज्ञेयाः।

## [२५.१२] यतश्च निर्धारणम्॥ (२.३.४१)

**सूत्रार्थः** - यस्मात् समुदायात् पृथक् क्रियते तादृशसमुदायवाचकात् शब्दात् षष्ठी सप्तमी च भवति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। इदं सूत्रं षष्ठीविभक्तिं विदधाति। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। यतः इति तसिल्प्रत्ययान्तमव्ययपदम्। च इति अव्ययपदम्। निर्धारणम् इति प्रथमैकवचनान्तं पदम्। षष्ठी चानादरे इति सूत्रात् षष्ठी इति पदम् अनुवर्तते। सप्तम्यधिकरणे च इति सूत्रात् सप्तमी इति पदमनुवर्तते। यतः निर्धारणम् ततः षष्ठी सप्तमी च भवति इति वाक्ययोजना। अत्र यतः इत्यस्य यस्मात् समुदायात् इत्यर्थः। निर्धारणम् इत्यस्य पृथक्करणम् इत्यर्थः। पृथक्करणम् इत्यस्य स्वभिन्नसमुदायावृत्तिधर्मवत्त्वबोधनम् इत्यर्थः। ततः इत्यस्य अध्याहारः क्रियते। एवञ्च सूत्रार्थो भवति - यस्मात् समुदायात् पृथक् क्रियते तादृशसमुदायवाचकात् शब्दात् षष्ठी सप्तमी च भवति। अर्थात् यस्मात् समुदायात् तदेकदेशस्य स्वभिन्नसमुदायावृत्तिधर्मवत्त्वबोधनं भवति तादृशसमुदायवाचकात् प्रातिपदिकात् षष्ठी सप्तमी च भवति।

**उदाहरणम्** - नृणां ब्राह्मणः श्रेष्ठः, नृषु ब्राह्मणः श्रेष्ठः। गवां कृष्णा बहुक्षीरा, गोषु कृष्णा बहुक्षीरा। गच्छतां धावन् शीघ्रः, गच्छत्सु धावन् शीघ्रः। छात्राणां मैत्रः पटुः, छात्रेषु मैत्रः पटुः।

**सूत्रार्थसमन्वयः** -

**नृणां ब्राह्मणः श्रेष्ठः, नृषु ब्राह्मणः श्रेष्ठः।** इदमस्य सूत्रस्य उदाहरणम्। अत्र तावत् इदं बोध्यम् यद् मनुष्यसमुदाये ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राः च भवन्ति। अतः ब्राह्मणक्षत्रियवैश्यशूद्राणां समुदायः एव मनुष्यशब्देन व्यवह्रियते। तत्र ब्राह्मणभिन्नसमुदायः क्षत्रियवैश्यशूद्रसमुदायः भवति। अपि च श्रेष्ठत्वं केवलं ब्राह्मणे एव अभिमतम् न तु क्षत्रियवैश्यशूद्रेषु इति। एवञ्चास्य वाक्यस्य तात्पर्यम् अस्ति यत् मनुष्यसमुदायस्य एकदेशभूतः यः ब्राह्मणसमुदायः सः ब्राह्मणभिन्नक्षत्रियवैश्यशूद्रावृत्तिश्रेष्ठत्वधर्मवान् अस्ति। एवञ्च प्रकृते मनुष्यसमुदायात् तदेकदेशभूतस्य ब्राह्मणसमुदायस्य ब्राह्मणभिन्नसमुदायावृत्तिधर्मवत्त्वबोधनं क्रियते। अतः तादृशमनुष्यसमुदायवाचकात् नृशब्दात् षष्ठी सप्तमी च अभवत्। तेन नृणां ब्राह्मणः श्रेष्ठः, नृषु ब्राह्मणः श्रेष्ठः इति च सिद्धम्। एवमेव नृणां क्षत्रियः शूरः, नृषु क्षत्रियः शूरः। नृणां वैश्यः धनिकः, नृषु वैश्यः धनिकः। इत्यादावपि बोध्यम्।

**गवां कृष्णा बहुक्षीरा, गोषु कृष्णा बहुक्षीरा।** इदमस्य सूत्रस्य उदाहरणम्। अत्र तावत् इदं बोध्यम् गोसमुदाये कपिलाः कृष्णाः रक्ताः चित्राः च गावः भवन्ति। तत्र कृष्णगोभिन्नगोसमुदायः चित्ररक्तकपिलगोसमुदायः भवति। यद्यपि सर्वाः गावः दुग्धं यच्छन्ति किन्तु बहुक्षीरत्वं केवलं कृष्णायां गवि एव तिष्ठति न तु चित्ररक्तकपिलगोसमुदाये इति। एवञ्चास्य वाक्यस्य तात्पर्यम् अस्ति यत् गोसमुदायस्य

एकदेशभूतः यः कृष्णगोसमुदायः सः कृष्णगोभिन्नचित्ररक्तकपिलगोसमुदायावृत्तिबहुक्षीरत्वधर्मवान् अस्ति। एवञ्च प्रकृते गोसमुदायात् तदेकदेशभूतस्य कृष्णगोसमुदायस्य कृष्णगोभिन्नगोसमुदायावृत्तिबहुक्षीरत्वधर्मवत्त्वबोधनं क्रियते अतः तादृशगोसमुदायवाचकात् गोशब्दात् षष्ठी सप्तमी च अभवत्। तेन गवां कृष्णा बहुक्षीरा, गोषु कृष्णा बहुक्षीरा इति सिद्धम्।

**छात्राणां मैत्रः पटुः, छात्रेषु मैत्रः पटुः।** इदमस्य सूत्रस्य उदाहरणम्। अत्र तावत् इदं बोध्यम् यत् छात्रसमुदाये चैत्र, राम, हरि, कृष्ण, मैत्र इत्यादिविविधनामकाः छात्राः भवन्ति। तत्र मैत्रभिन्नसमुदायः रामकृष्णहरिचैत्रछात्रसमुदायः भवति। अपि च पटुत्वं केवलं मैत्रे एव अस्ति न तु रामकृष्णहरिचैत्रछात्रसमुदाये इति। एवञ्चास्य वाक्यस्य तात्पर्यम् अस्ति यत् छात्रसमुदायस्य एकदेशभूतः यः मैत्रनामकछात्रः सः मैत्रभिन्नरामकृष्णहरिचैत्रछात्रसमुदायावृत्तिपटुत्वधर्मवान् अस्ति। एवञ्च प्रकृते छात्रसमुदायात् तदेकदेशभूतस्य मैत्रनामकछात्रस्य मैत्रभिन्नसमुदायावृत्तिपटुत्वधर्मवत्त्वबोधनं क्रियते। अतः तादृशछात्रसमुदायवाचकात् छात्रशब्दात् षष्ठी सप्तमी च अभवत्।

**गच्छतां धावन् शीघ्रः, गच्छत्सु धावन् शीघ्रः।** इदमस्य सूत्रस्य उदाहरणम्। अत्र तावत् इदं बोध्यम् यद् गच्छत्समुदाये केचन् गच्छन्तः भवन्ति केचित् धावन्तः भवन्ति। अतः गच्छतां धावतां च समुदायः एव गच्छत्समुदायशब्देन व्यवह्रियते। तत्र धावत्समुदायभिन्नसमुदायः गच्छत्समुदायः भवति। अपि च शीघ्रत्वं केवलं धावत्समुदाये एव तिष्ठति न तु गच्छत्समुदाये इति। एवञ्चास्य वाक्यस्य तात्पर्यम् अस्ति यत् गच्छत्समुदायस्य एकदेशभूतः यः धावत्समुदायः सः धावत्समुदायभिन्नगच्छत्समुदायावृत्तिशीघ्रत्वधर्मवान् अस्ति। एवञ्च प्रकृते गच्छत्समुदायात् तदेकदेशभूतस्य धावत्समुदायस्य धावत्समुदायगच्छत्समुदायावृत्तिशीघ्रधर्मवत्त्वबोधनं क्रियते। अतः तादृशगच्छत्समुदायवाचकात् गच्छदिति शब्दात् षष्ठी सप्तमी च अभवत्। तेन गच्छतां धावन् शीघ्रः, गच्छत्सु धावन् शीघ्रः इति वाक्यद्वयं सिद्धम्।

## पाठगतप्रश्नाः -४

अत्र केचन पाठगतप्रश्नाः प्रदीयन्ते।

२३. साधुनिपुणाभ्याम् इति पदे कः समासः अस्ति। कश्च विग्रहः।

२४. मातरि साधुः कृष्णः इत्यत्र सप्तमी केन सूत्रेण।

२५. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः इत्यत्र कः समासः कश्च विग्रहः।

२६. निर्धारणम् इत्यस्य कः अर्थः।

## पाठसारः

अत्र पाठे अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति सूत्रस्य व्याख्यानं वर्तते। कर्मकरणसम्प्रदानापदानाधिकरणरूपाः अर्थाः प्रातिपदिकार्थश्च उक्ताः, तेभ्यः अन्यः च सम्बन्धः वर्तते, तस्मात्सम्बन्धः एव शेषपदस्यार्थः। एवञ्च सम्बन्धे अर्थे षष्ठी शेषे इति अनेन सूत्रेण षष्ठी विभक्तिः विधीयते। ततः परं चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः इति, षष्ठी हेतुप्रयोगे इति, सर्वनाम्नस्तृतीया च इति, षष्ठ्यतसर्थप्रत्ययेन इति, एनपा द्वितीया इति, तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् इति, आयुक्तकुशलाभ्यां चासेवायाम् इति, प्रसितोत्सुकाभ्यां तृतीया च इति, साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः इति, स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च इति, यतश्च निर्धारणम् इति सूत्राणां व्याख्या अस्ति। एवम् सूत्राणि तेषामुदाहरणानि च सविस्तरमुपन्यस्तानि बोधसौकर्याय समेषाम् अध्येतृणाम्।

## पाठान्तप्रश्नाः

अत्र परीक्षोपयोगिनः प्रष्टव्याः प्रश्नाः प्रदीयन्ते।

१. षष्ठी शेषे इति सूत्रं व्याख्यात।

२. अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति सूत्रस्य व्याख्या लेख्या।

३. तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् इति सूत्रं व्याख्यात।

४. आयुक्तकुशलाभ्यां चासेवायाम् इति सूत्रस्य व्याख्यां लिखत।

५. प्रसितोत्सुकाभ्यां तृतीया च इति सूत्रस्य व्याख्या कार्या।

६. साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः इति सूत्रं व्याख्यात।

७. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च इति सूत्रं व्याख्यात।

८. यतश्च निर्धारणम् इति सूत्रं व्याख्यात।

९. राज्ञः पुरुषः इति प्रयोगं साधयत।

१०. नृणां नृषु वा ब्राह्मणः श्रेष्ठः इति प्रयोगं साधयत।

११. रामाद् अन्यः कृष्णः इति प्रयोगं साधयत।

१२. मातरि साधुः कृष्णः इति प्रयोगं साधयत।

## पाठगतप्रश्नोत्तराणि

### उत्तराणि-१

१. कर्मकरणसम्प्रदानापदानाधिकरणरूपाः अर्थाः प्रातिपदिकार्थश्च उक्ताः, तेभ्यः अन्यः च सम्बन्धः वर्तते, तस्मात्सम्बन्धः एव शेषपदस्यार्थः।

२. सम्बन्धस्य द्वौ सम्बन्धिनौ भवतः एकः प्रतियोगी अपरश्च अनुयोगी।

३. प्रतियोगिनः।

४. राज्ञः पुरुषः।

### उत्तराणि-२

५. चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः।

६. आयुष्यं देवदत्ताय देवदत्तस्य वा भूयात्।

७. हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी स्यात्।

८. षष्ठी हेतुप्रयोगे।

९. निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् इति वार्तिकेन।

१०. प्रथमादिसप्तम्यन्ताः सर्वा विभक्तयो भवन्ति।

### उत्तराणि-२

११. दिग्देशकालरूपः अर्थः।

१२. षष्ठ्यतसर्थप्रत्ययेन।

१३. ग्रामस्य दक्षिणतः।

१४. एनपा द्वितीया।

१५. दक्षिणेन।

१६. एनबन्तेन योगे द्वितीया षष्ठी च भवति।

१७. तुल्यार्थैरतुलोपमाभ्यां तृतीयान्तरस्याम् इति सूत्रेण।

१८. द्वावपि।

१९. द्वावपि।

२०. अतुलोपमाभ्याम् इत्यत्र द्वन्द्वगर्भतत्पुरुषसमासः अस्ति। अस्य च विग्रहः भवति - तुला च उपमा च इति तुलोपमे। न तुलोपमे इति अतुलोपमे। ताभ्याम् अतुलोपमाभ्याम्।

२१. आयुक्तकुशलाभ्याम् इति पदे इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति आयुक्तश्च कुशलश्च इति आयुक्तकुशलौ, ताभ्याम् आयुक्तकुशलाभ्याम्।

२२. प्रसितोत्सुकाभ्याम् इति पदे इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति प्रसितश्च

उत्सुकश्च इति प्रसितोत्सुकौ, ताभ्याम् प्रसितोत्सुकाभ्याम्।

**उत्तराणि-३**

२३. साधुनिपुणाभ्याम् इति पदे इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः भवति साधुश्च निपुणश्च इति साधुनिपुणौ, ताभ्यां साधुनिपुणाभ्याम्।

२४. साधुनिपुणामर्चायां सप्तम्यप्रतेः।

२५. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः इति पदे इतरेतरयोगद्वन्द्वसमासः अस्ति। अस्य च विग्रहः स्वामी च ईश्वरश्च अधिपतिश्च दायादश्च साक्षी च प्रतिभूश्च प्रसूतश्च इति स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूताः। तैः स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः।

२६. निर्धारणम् इत्यस्य पृथक्करणम् इत्यर्थः, स्वभिन्नसमुदायावृत्तिधर्मवत्त्वबोधनम् इति यावत्।

।।इति पञ्चविंशः पाठः।।

# २६

# कृत्यप्रकरणम्

## प्रस्तावना

इतः पूर्वं सप्त विभक्त्यर्थप्रकरणानि समाप्तानि। इतः परं चत्वारि कृत्-प्रत्ययप्रकरणानि सन्ति। तेषु कृत्यप्रकरणं प्रथमम्।

धातोः परे द्विविधः प्रत्ययो भवति। तौ तिङ् -कृतौ। तौ च धातोः विधीयेते। तिङ्प्रत्याहारस्थप्रत्ययः धातोः अन्ते भवति चेत् तिङन्तशब्दः इति व्यवहारः। कृत्प्रत्ययः धातोः अन्ते भवति चेत् कृदन्तशब्दत्वेन व्यवहारः। तिङ् इति प्रत्याहारः। स च प्रत्याहारः तिप्प्रत्ययम् आरभ्य महिङ्प्रत्ययम् यावत् अष्टादशानाम् प्रत्ययानाम् बोधकः इति भ्वादिप्रकरणे। ते च तिङ्प्रत्ययाः धातोः विहितस्य लकारस्य स्थाने विधीयन्ते। कृदतिङ् इति सूत्रेण धातुभ्यः विहितान् तिङ्प्रत्ययान् विहाय तद्भिन्नानाम् अच् -ण्यत् -णमुल् इत्यादीनाम् प्रत्ययानाम् कृत्संज्ञा विधीयते। यदा च धातोः परे कृत्प्रत्ययो भवति तदा कृदन्तशब्दः जायते। तस्य च कृदन्तशब्दस्य प्रयोगः तिङन्तस्थले कर्तुं शक्यः। यथा - सोऽगमत्, सोऽपश्यत् इत्यादितिङन्तप्रयोगस्थले सः गतः, सः गतवान्, तेन दृष्टम्, सः दृष्टवान् इत्यादिकृदन्तप्रयोगाः सौन्दर्यम् आनयन्ति। हितोपदेशः, पञ्चतन्त्रम्, संस्कृतनाटकम् इत्यादिषु कृदन्तप्रयोगस्य प्राचुर्यमस्ति। तदेतत् समग्रम् कृदन्तप्रकरणम् कृत्य -पूर्वकृदन्त -उणादि -उत्तरकृदन्तभेदेन चतुर्धा विभक्तम्। एतेषु उणादेः आलोचना अत्र पाठेषु नैव करिष्यते। अपि तु पूर्वकृदन्तस्य भागद्वयं विहितमस्ति इत्याहत्य चत्वारः पाठाः कल्पिताः सन्ति समग्रस्य कृदन्तप्रकरणस्य। कृत्प्रत्ययेषु केषाञ्चित् कृत्यसंज्ञापि भवति। अत एव कृत्यप्रकरणम् इत्युच्यते। एतदेव प्रकरणम् पाठेऽस्मिन् आलोच्यम्।

## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- कः कृत्प्रत्ययः कश्च कृत्यप्रत्ययः भवति इति ज्ञास्यति।
- कति कृत्यप्रत्यया भवन्ति इत्यपि ज्ञास्यति।
- कृत्प्रत्ययः कस्मात् कस्मिन्नर्थे विधीयते इत्यधिगमिष्यति।
- कृत्यप्रत्ययाः कस्मिन्नर्थे भवन्ति इत्यवगमिष्यति।
- उत्सर्गापवादप्रत्यययोः विकल्पेन प्रवृत्तिनियमनम् ज्ञास्यति।

- बहुलम् -शब्दार्थं ज्ञास्यति।
- लोके व्यवहारोपयोगिनाम् केषाञ्चित् कृदन्तशब्दानां प्रक्रियाः अत्र प्रदर्शिताः सन्ति। ताः ज्ञास्यति।

## [२६.१] धातोः॥ (३.१.९१)

**सूत्रार्थः** - आतृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः।

**सूत्रव्याख्या** - अधिकारसूत्रमिदम् एकपदात्मकम्। धातोः इति पञ्चम्येकवचनान्तम्। प्रत्ययः (१/१), परः (१/१) इति द्वयम् अधिकृतम्। धातोः इत्यस्य अधिकारः तृतीयाध्यायसमाप्तिम् यावत्। सूत्रस्याशयस्तावत् - इतः आरभ्य तृतीयाध्यायस्य समाप्तिं यावत् ये प्रत्ययाः विहिताः ते धातोः पराः भवन्ति। तेषु प्रत्ययेषु तिङ्प्रत्ययाः, कृत्प्रत्ययाः इति द्विविधाः प्रत्ययाः वर्तन्ते। तिङ्प्रत्ययभिन्नाः ये प्रत्ययाः वर्तन्ते तेषां कृदतिङ् इति सूत्रेण कृत् इति संज्ञा भवति। कृत्संज्ञायाः प्रयोजनम् - कर्तरि कृत् इत्यादिसूत्रैः कृत्प्रत्ययानाम् अर्थनिर्देशः। किञ्च धातोः कृत्प्रत्यये विहिते सति कृदन्तसमुदायो जायते। तस्य च कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा भवति। ततः स्वादिप्रत्ययानाम् उत्पत्तिः। तिङः तु न कृत्संज्ञा। तेन न तेषां प्रातिपदिकसंज्ञा। तदभावे च न तेभ्यः स्वादिप्रत्ययविधानम् इत्यस्ति विशेषः अत्र।

अधुना कृदन्तप्रकरणे बहुप्रयोजनवती परिभाषेयम् आरभ्यते -

## [२६.२] वासरूपोऽस्त्रियाम्॥ (३.१.९४)

**सूत्रार्थः** - अस्मिन् धात्वधिकारेऽसरूपोऽपवादप्रत्ययः उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण उत्सर्गापवादप्रत्यययोः विकल्पेन प्रवृत्तिः नियम्यते। वा (अव्ययम्) असरूपः (१/१) अस्त्रियाम् (७/१) इति सूत्रगतपदच्छेदः। समानं रूपं यस्य स सरूपः इति बहुव्रीहिसमासः, न सरूपः असरूपः इति नञ्समासः। तत्रोपपदं सप्तमीस्थम् इति सूत्रात् तत्र इति अव्ययपदम् अनुवर्तते। तत्र इत्यनेन धातोः इति अधिकारसूत्रं परामृश्यते। तत्र धात्वधिकारे इत्यर्थः। न स्त्री अस्त्री इति नञ्तत्पुरुषसमासः। तस्याम् अस्त्रियाम्। लिङ्गवती परिभाषा इति परिभाषालक्षणम्। असरूपः इति लिङ्गनिर्देशः। यत्र असरूपप्रत्ययो विधास्यते तत्र वा इत्युपतिष्ठते। वा इत्यतः प्राक् बाधकः इति पदस्य अध्याहारः करणीयः। असरूपो वा बाधको भवतीति। अपवादप्रत्ययः कस्य वा बाधकः इति आकाङ्क्षायाम् उत्सर्गस्य इति लभ्यते। अत एव धातोः इत्यधिकारे विधीयमानाः असरूपाः अपवादप्रत्ययाः उत्सर्गप्रत्ययस्य विकल्पेन बाधकाः भवन्ति इति सूत्रार्थो लभ्यते। सरूपास्तु अपवादप्रत्यया उत्सर्गस्य नित्यं बाधका इत्यर्थः पर्यालोचनया लभ्यते।

अत्र रूपम् इत्यनेन अनुबन्धरहिता आनुपूर्वी बोध्या। येन प्रत्ययेन अनुबन्धरहितेन यस्य अपरप्रत्ययस्य आनुपूर्वी तुल्या स प्रत्ययः अपरप्रत्ययस्य सरूपः भवति। आनुपूर्वीभेदः अस्ति चेत् असरूपः भवति।



**उदाहरणे सूत्रार्थसमन्वयः** - अत्र दिङ्मात्रमुदाहरणं प्रदर्श्यते। तथाहि ण्वुल्तृचौ इति उत्सर्गः। इगुपधज्ञाप्रीकिरः कः इति विशेषविहितत्वात् अपवादः। अयञ्च कप्रत्ययः असरूपोऽस्ति। तस्मात् प्रकृतपरिभाषया विकल्पेन उत्सर्गयोः ण्वुल्तृचोः बाधको भवति। तेन पक्षे ण्वुल्तृचौ अपि भवतः। एवं (कप्रत्यये) विक्षिपः, (ण्वुल्प्रत्यये) विक्षेपकः, (तृच्प्रत्यये) विक्षेप्ता इति त्रीणि रूपाणि सम्भवन्ति। ण्वुल् तृच् कः इति त्रयः प्रत्ययाः। अनुबन्धरहिताः चेत् वु तृ अ इति शिष्यन्ते। तत्र ण्वुलः आनुपूर्वी वु इति। तृचः आनुपूर्वी तृ इति। क -प्रत्ययस्य आनुपूर्वी अ इति। एतेषाम् आनुपूर्वीषु भेदः वर्तते। अतः ते परस्परम् असरूपाः सन्ति।

कर्मण्यण् इति उत्सर्गसूत्रम्। आतोऽनुपसर्गे कः इति अपवादसूत्रम्। कप्रत्ययस्य अण् -प्रत्ययस्य च अनुबन्धविनिर्मुक्तस्य 'अ'मात्रशेषस्य समानरूपत्वात् कप्रत्ययः अण् -प्रत्ययस्य नित्यं बाधकः। अर्थात् कप्रत्यये ककारः अनुबन्धः। अनुबन्धलोपे 'अ' इति एतावन्मात्रम् अवशिष्यते। इदं कप्रत्ययस्य रूपम्। अण् इति प्रत्ययः। तस्य णकारः इत्संज्ञकः। णलोपे 'अ' इति एतावन्मात्रम् शिष्यते। इदं तस्य रूपम्। कप्रत्ययस्य यद् रूपम् तदेव अण् इति प्रत्ययस्य अपि रूपम्। अतः अण् इत्यस्य सरूपः क -प्रत्ययः भवति। तेन गां ददातीति विग्रहे अण्बाधकस्य कस्य विधानात् गोदः इति रूपं सिद्धम्।

अस्त्रियाम् इति सूत्रस्य अपरांशः। अस्त्रियाम् इत्यत्र स्त्रीशब्दः स्वर्यते। स्त्रियां क्तिन् इति अधिकारसुत्रम्। अत्र स्त्रियाम् इति पदम् अधिकृतम्। स्त्र्यधिकारस्थः तु असरूपः प्रत्ययः उत्सर्गस्य नित्यमेव बाधकः। तथाहि स्त्रियां क्तिन् इति उत्सर्गसूत्रम्। अ प्रत्ययात् इति प्रत्ययान्तात् विहितः अकारप्रत्ययः तस्य अपवादः। स च नित्यमेव बाधकः भवति। चिकीर्षा इत्यादि इह उदाहरणम्।

**अत्रायं सारः -**

१. धातोः इत्यधिकारे असरूपः अपवादप्रत्ययः उत्सर्गस्य विकल्पेन बाधकः।
२. तस्मिन्नेव अधिकारे सरूपः अपवादप्रत्ययः उत्सर्गं नित्यं बाधते।
३. स्त्रियां क्तिन् इत्यधिकारे असरूपः अपवादप्रत्ययः उत्सर्गस्य नित्यं बाधकः।

## [२६.३] कृत्याः॥ (३.१.९५)

**सूत्रार्थः** - ण्वुल्तृचौ (३.१.१३३) इत्यतः प्राक् कृत्यसंज्ञाः स्युः॥

**सूत्रव्याख्या** - अधिकारसूत्रमिदम् एकपदात्मकम्। अनेन सूत्रेण कृत्यसंज्ञा विधीयते। कृत्याः इति प्रथमाबहुवचनान्तम्। अग्रे ण्वुल्तृचौ (३.१.१३३) इति सूत्रात् पूर्वं ये प्रत्ययाः विधीयन्ते ते कृत्यसंज्ञाः अपि भवन्ति इति सूत्रार्थः। अत्र कृत्संज्ञकप्रत्ययानाम् कृत्यसंज्ञा भवति। एवम् अत्र प्रकरणे धातोः विहितस्य प्रत्यस्य द्विविधा संज्ञा भवति इत्यस्ति विशेषः। कृत्यसंज्ञायाः प्रयोजनम् - तयोरेव कृत्यक्तखलर्थाः, कृत्यलुटो बहुलम् इत्यादिसूत्रेषु वक्ष्यते। कृत्संज्ञायाः प्रयोजनम् तु अग्रे उच्यमानम् अस्ति। समग्रकृत्यप्रकरणे सप्त प्रत्ययाः वर्णिताः सन्ति। प्रसङ्गेऽस्मिन् प्रसिद्धैका कारिकास्ति -

तव्यं च तव्यतञ्चैवानीयर् -केलिमरौ तथा।

यतं ण्यतं क्यपं चापि कृत्यान् सप्त प्रचक्षते॥ इति

कृत्यप्रकरणस्थानां प्रत्ययानाम् अर्थनिर्देशाय आदौ सामान्यम् सूत्रम् प्रस्तूयते -

## [२६.४] कर्तरि कृत्॥ (३.४.६७)

**सूत्रार्थः** - कृत्प्रत्ययः कर्तरि स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण कृत् -प्रत्ययाः कर्तरि अर्थे विधीयन्ते। कर्तरि (७/१) कृत् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति एतत्त्रयम् अधिकृतम्। धातोः पराः कृत्संज्ञकाः प्रत्ययाः कर्त्रर्थे भवन्ति इति सूत्रार्थः। यत्र विशिष्टः अर्थः न निर्दिष्टः तत्र कर्ता इत्यर्थे कृत्प्रत्ययाः प्रवर्तन्ते। यथा ण्वुल्तृचौ इत्यत्र। तत्र अर्थविशेषः न निर्दिष्टः अतः तौ कर्त्रर्थे भवतः।

**उदाहरणम्** - करोति इति कारकः, कर्ता।

तव्यत्, तव्य, अनीयर् इत्यादयः वक्ष्यमाणाः कृत्यप्रत्ययाः अपि कृत्संज्ञकाः भवन्ति। अतः तेषां कर्तरि विधाने प्राप्ते अपवादोऽयं योगः आरभ्यते -

## [२६.५] तयोरेव कृत्यक्तखलर्थाः॥ (३.४.७०)

**सूत्रार्थः** - कृत्यक्तखलर्थप्रत्ययाः भावकर्मणोरेव स्युः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण कृत्यक्तखलर्थप्रत्ययाः भावे कर्मणि च विधीयन्ते। तयोः (७/२) एव (अव्ययम्) कृत्यक्तखलर्थाः (१/३) इति सूत्रस्थपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। प्रत्ययः परः इति अनयोः प्रत्ययाः पराः इति च प्रथमाबहुवचनान्ततया विपरिणामः। कृत्याश्च क्तश्च खलर्थाश्च कृत्यक्तखलर्थाः इति इतरेतरयोगद्वन्द्वः। तच्छब्देन लः कर्मणि च भावे चाकर्मकेभ्यः (३.१.६९) इति सूत्रे विद्यमाने भावे कर्मणि चेति पदे गृह्येते। धातोः पराः तयोरेव भावकर्मणोः कृत्यसंज्ञकाः क्तखलर्थाश्च प्रत्यया भवन्ति इति सूत्रार्थः। तेन कृत्यप्रत्ययाः भावे कर्मणि च अर्थे प्रवर्तन्ते। तत्र एते प्रत्ययाः धातुः अकर्मकश्चेत् भावे, सकर्मकश्चेत् कर्मणि भवन्ति।

**उदाहरणे सूत्रार्थसमन्वयः** -

**कृत्याः** - तव्यत् तव्य अनीयर् इत्यादयः कृत्यप्रत्ययाः। कर्तव्यो कटो भवता, करणीयः कटो भवता। अत्र कृत्यप्रत्ययाः कृधातोः सकर्मकत्वात् कर्मणि विहिताः भवन्ति। भवता शयितव्यम्, भवता शयनीयम् इत्यादौ तु शीधातोः अकर्मकत्वात् भावे कृत्यप्रत्ययाः।

**क्तः** - कृतो घटस्त्वया। अत्र क्तप्रत्ययः कृधातोः सकर्मकत्वात् कर्मणि विहितः। भवता शयितम् इत्यादौ तु शीधातोः अकर्मकत्वात् भावे क्तप्रत्ययः।

**खलर्थः** - ईष्त्करः कटो भवता। सुकरः कटो भवता। अत्र कृधातोः सकर्मकत्वात् ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् इति कर्मणि खल्प्रत्ययः। दुर्जीवमपथ्यभुजा रोगिणा इत्यत्र जीव् -धातोः अकर्मकत्वात् पूर्वोक्तसूत्रेण भावे खल्प्रत्ययः।

## पाठगतप्रश्नाः -१

१. धातोः इत्यस्य अधिकारः कियान्।

२. वासरूपोऽस्त्रियाम् इत्यस्य कोऽर्थः।

३. कृत्याः इति कीदृशम् सूत्रम्।

४. कृत्याः इत्यस्य अधिकारः कियान्।

५. वासरूपोऽस्त्रियाम् इति कीदृशम् सूत्रम्।

६. कृत्यक्तखलर्थाः कस्मिन्नर्थे भवन्ति।

७. तयोरेव कृत्यक्तखलर्थाः इति कस्य अपवादसूत्रम्।

८. एकस्यैव प्रत्ययस्य कृत्संज्ञा कृत्यसंज्ञा चेति संज्ञाद्वयम् सम्भवति न वा।

९. कति कृत्यप्रत्ययाः सन्ति।

१०. कृत्यप्रत्ययानां संख्याविषये प्रसिद्धा कारिका का।

---

सम्प्रति कृत्यप्रत्ययविधायकम् अतीव प्रसिद्धम् सूत्रमारभ्यते -

### [२६.६] तव्यत्तव्यानीयरः॥ (३.१.९३)

**सूत्रार्थः** - धातोः तव्यत्तव्यानीयरः प्रत्ययाः स्युः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् एकपदात्मकम्। अनेन सूत्रेण तव्यत्तव्यानीयरः प्रत्ययाः विधीयन्ते। तव्यत्तव्यानीयरः इति प्रथमाबहुवचनान्तम् पदम्। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। तव्यत् च तव्यश्च अनीयर् च तव्यत्तव्यानीयरः इति इतरेतरयोगद्वन्द्वः। सूत्रार्थस्तावत् धातोः परे तव्यत्तव्यानीयरः प्रत्ययाः स्युरिति। अनेन सूत्रेण विहिताः प्रत्ययाः कृत्संज्ञकाः कृत्यसंज्ञकाश्च भवन्ति। तव्यत् अनीयर् इत्यत्र तकाररेफौ इतौ हलन्त्यम् इत्यनेन। तव्यत्तव्ययोः रूपाभेदेऽपि स्वरः एव तौ भिनत्ति। तव्यतः तित्त्वात् तित्स्वरितम् इति तव्यत्प्रत्ययान्तशब्दः स्वरितान्तः। निरनुबन्धकस्य च तव्यस्य प्रत्ययस्वरेण आद्युदात्तत्वम्। अनीयर् इत्यस्यापि रित्त्वात् उपोत्तमं रिति इति सूत्रेण अनीयरः नी इति स्वरितो भवति।

**उदाहरणम्** - एधितव्यम्, एधनीयं त्वया। चेतव्यः चयनीयो वा धर्मस्त्वया।

**सूत्रार्थसमन्वयः** -

एधनीयम्, एधितव्यम्। तव्य तव्यत् अनीयर् इत्येतेषाम् त्रयाणाम् प्रत्ययानाम् धात्वधिकारे पठितत्वात् तिङ्भिन्नत्वात् धातोः विहितत्वात् च कृदतिङ् इति कृत्संज्ञा। पुनः कृत्याः इत्यनेन कृत्यसंज्ञापि अस्ति। कर्तरि कृत् इति कर्त्रर्थे विधाने प्राप्ते तन्निषेधे भावे प्रकृतसूत्रेण वृद्ध्यर्थकात् भ्वादिगणीयात् अकर्मकात् सेटः एध् -धातोः अनीयर् -प्रत्ययेन निष्पन्नस्य एधनीयशब्दस्वरूपस्य

कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां सौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे एधनीयम् इति रूपं सिध्यति। **भावे** एतदुदाहरणम्। तिङ्वाच्यभावना असत्त्वरूपा। लः कर्मणि च भावे चाकर्मकेभ्यः इत्यत्रापि असत्त्वरूपः एव भावः गृहीतः। अतः तयोरेव कृत्यक्तखलर्थाः इत्यत्र तच्छब्देन तस्यैव भावस्य परामर्शः। असत्त्वे लिङ्गस्य संख्यायाः च अन्वयः न भवति। अतः एधनीयमित्यत्र द्विवचनस्य बहुवचनस्य वा प्रत्ययः न भवति। पुंसि स्त्रियाम् वा प्रत्ययः न भवति। अत एव भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। तव्ये तव्यति वा आर्धधातुकस्येड्वलादेः इडागमे प्रक्रियया एधितव्यम् इति रूपम्।

**कर्मणि** उदाहरणम् - चयनीयं, चेतव्यं वा पुष्पं त्वया इत्यादि। चिञ् चयने (स्वादि. उभय़. अनिट्) इति धातोः सकर्मकत्वात् प्रकृतसूत्रेण तव्यति तव्ये वा प्रत्यये तव्यतः तव्यस्य वा आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन इण्निषेधे सार्वधातुकार्धधातुकयोः इत्यनेन आर्धधातुकगुणे एकारे चेतव्य इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे चेतव्यम् इति रूपं सिध्यति।

अनीयरि चेः इकारस्य गुणे एचोऽयवायावः इत्यनेन अयादेशे प्रक्रियया चयनीयम् इति रूपं सिध्यति।

**केलिमर् प्रत्ययः -**

केलमिर् -प्रत्ययविधायकम् वार्तिकम् **केलिमर उपसंख्यानम्** इति। एतच्च वार्तिकम् महाभाष्ये तव्यत्तव्यानीयरः इति सूत्रे पठितम्। तव्यदादिप्रत्ययेन सह केलिमर्-प्रत्ययस्यापि परिगणनं कार्यमिति वार्तिकार्थः। अर्थात् धातोः परं यथा तव्यदादिप्रत्ययाः भवन्ति तथैव केलिमर् अपि भवति इति भावः। केलमिरः ककारः लशक्वतद्धिते इत्यनेन इत्संज्ञकः। रेफश्च हलन्त्यम् इत्यनेन। तेन एलिम इति शिष्यते। पच्धातोः प्रकृतवार्तिकेन कर्मणि केलिमर् -प्रत्यये अनुबन्धलोपे पचेलिम इति कृदन्तशब्दो जायते। ततः कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा। तदनन्तरम् माषाः इति विशेष्यानुसारम् लिङ्गविभक्तिवचनानि भवन्ति। तेन प्रथमाबहुवचने जसि पचेलिमाः इति रूपम् जायते।

कृत्यप्रत्ययानाम् विषये प्रसिद्धः एकः नियमः अग्रिमेण सूत्रेण प्रदर्श्यते -

## [२६.७] कृत्यल्युटो बहुलम्॥ (३.३.११३)

**सूत्रार्थः** - कृत्यसंज्ञकाः प्रत्ययाः ल्युट् च बहुलेन भवन्ति।

**सूत्रव्याख्या** - विधिसूत्रमिदम् द्विपदात्मकम्। अनेन सूत्रेण कृत्यसंज्ञकाः प्रत्ययाः ल्युट् च बहुलं विधीयन्ते। कृत्यलुटः (१/३) बहुलम् (१/१) इति सूत्रगतपदच्छेदः। बहून् अर्थान् लाति = आदत्ते इति बहुलम् इत्ययं बहुलम् -शब्दः नानार्थग्राहकः। बहुलम् -शब्दः पारिभाषिको नास्ति। तत्र तत्र सूत्रे बहुलम्शब्दस्य प्रयोगः दृश्यते चेत् तत्र आचार्यः पाणिनिः इतोऽपि कञ्चित् अर्थम् प्रतिपादयितुम् इच्छति इत्यर्थः। असौ अर्थः बहुलम् -शब्दयोजनेन लभ्यते। यस्मिन् अर्थे प्रत्ययाः विहिताः ततः अन्येषु अपि

अर्थेषु भवन्ति इति सूत्रस्य भावः। भावकर्मणोः अर्थयोः कृत्याः विहिताः कारकान्तरे अपि भवन्ति। बहुलम् -शब्दस्य चतुर्धा अर्थाः पूर्वाचार्यैः प्रोक्ताः सन्ति। तथा च उपेन्द्रवज्रोपनिबद्धपद्यमेकमस्ति -

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव॥**

**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥**

**क्वचित्प्रवृत्तिः** - बहुलम् -शब्दयुक्तस्य सूत्रस्य कार्यम् सूत्रप्रवृत्तियोग्यस्थले तु भवति, कुत्रचित् प्रवृत्त्ययोग्यस्थलेऽपि भवति।

**क्वचिदप्रवृत्तिः** - बहुलम् -शब्दयुक्तस्य सूत्रस्य कार्यम् क्वचित् सूत्रप्रवृत्तियोग्यस्थलेऽपि न भवति।

**क्वचिद्विभाषा** - बहुलम् -शब्दयुक्तस्य सूत्रस्य कार्यम् कुत्रचित् विकल्पेन भवति।

**क्वचिदन्यदेव** - बहुलम् -शब्दयुक्तस्य सूत्रस्य कार्यम् क्वचित् भिन्नमेव भवति। अर्थात् निर्दिष्टार्थातिरिक्तार्थेऽपि भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - प्रकृतसूत्रे कृत्यप्रत्ययाः ल्युट्प्रत्ययश्च च बहुलेन अर्थेषु भवन्ति इत्युक्तमस्ति। अतः ते प्रत्ययाः पूर्वोक्तनियमेन भिन्नार्थकस्थलेऽपि भवन्ति। यथा भावकर्मणोः अर्थयोः विहिताः कृत्याः करणसम्प्रदानादिकारकान्तरे अपि भवन्ति।

स्नाति अनेन स्नानीयम् चूर्णम् - अत्र स्ना (ष्णा शौचे , अदादि. परस्मै. अनिट्) इति धातोः करणे कृत्यसंज्ञके अनीयर् -प्रत्यये अनुबन्धलोपे सवर्णदीर्घे स्नानीयम् इति रूपम् सिध्यति। दीयतेऽस्मै दानीयो विप्रः - अत्र दा (डुदाञ् दाने, जुहोत्यादि. उभय. अनिट्) इति धातोः सम्प्रदाने कृत्यसंज्ञके अनीयर् -प्रत्यये अनुबन्धलोपे सवर्णदीर्घे दानीयः इति रूपम् सिध्यति।

एवम् ल्युटि अपि। भावे ल्युटि हस् -धातोः हसनम्, गम् -धातोः गमनम् इत्यादिरूपाणि सिध्यन्ति। उपमीयते अनेन इति उपमानम् - करणे उपपूर्वकमाधातोः ल्युटि उपमानम् इति रूपम्। गावो दुह्यन्ते अस्यामिति गोदोहनी पात्री इत्यत्र अधिकरणार्थे ल्युट्प्रत्ययो विहितः। किन्तु प्रकृतसूत्रे बहुलम् -शब्दप्रयोगकारणात् कारकान्तरेऽपि अपि ल्युट् - प्रस्कन्दति अस्माद् इति प्रस्कन्दनम्। अत्र प्रपूर्वकात् स्कन्द् (स्कन्दिर् गतिशोषणयोः, भ्वादि. परस्मै. अनिट्) धातोः अपादाने ल्युटि योः स्थाने युवोरनाकौ इति अनादेशे प्रस्कन्दनम् इति रूपम् सिध्यति।

## [२६.८] अचो यत्॥ (३.१.९७)

**सूत्रार्थः** - अजन्ताद्धातोर्यत् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण यत्प्रत्ययो विधीयते। अचः (५/१) यत् (१/१)इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। अचः इति धातोः इत्यस्य विशेषणम्। तेन तदन्तविधिना अजन्ताद् धातोः इत्यर्थलाभः। इत्थं सूत्रार्थस्तावत् - अजन्ताद् धातोः परे यत्प्रत्ययः भवति। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः कृत्यसंज्ञकश्च भवति। कृत्यसंज्ञकत्वात् तयोरेव कृत्यक्तखलर्थाः इत्यनेन भावे कर्मणि च यत्प्रत्ययो

भवति। यतः तकारः हलन्त्यम् इत्यनेन इत्संज्ञकः। तेन य -मात्रम् शिष्यते। तकारानुबन्धः यतोऽनावः इत्यनेन आद्युदात्तस्वरविधानार्थः।

**उदाहरणम्** - चेयम्, जेयम् इत्यादि। स्वादिगणीयात् उभयपदिनः अनिटः सकर्मकात् अजन्तात् चि (चिञ् चयने) इति धातोः प्रकृतसूत्रेण यति अनुबन्धलोपे सार्वधातुकार्धधातुकयोः इत्यनेन धातोरिकारस्य गुणे एकारे निष्पन्नस्य चेयशब्दस्वरूपस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां नपुंसके सौ प्रक्रियया चेयम् इति। तयोरेव कृत्यक्तखलर्थाः इति सूत्रनिर्देशात् यत् इत्ययम् कृत्यप्रत्ययः भावकर्मणोरेव विधीयते। तथा च पुष्पाणि त्वया चेयानि, त्वया जेयम् इत्यादीनि वाक्यानि सम्भवन्ति।

दानक्रियावाचिनः जुहोत्यादिगणे पठितात् भूवादयो धातवः इत्यनेन धातुसंज्ञकात् ञितः उभयपदिनः सकर्मकात् अनिटः दाधातोः कृत्याः इत्यधिकारे पठितेन तयोरेव कृत्यक्तखलर्थाः इति सूत्रकृतनियमेन अचो यत् इति सूत्रेण कर्मणि कृत्संज्ञके यत्प्रत्यये अनुबन्धलोपे दा य इति स्थिते सूत्रमिदमारभ्यते -

## [२६.९] ईद्यति॥ (६.४.६५)

**सूत्रार्थः** - यति परे आत ईत्स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण ईकारादेशो विधीयते। ईत् (१/१) यति (७/१) इति सूत्रगतपदच्छेदः। आतो लोप इटि च इत्यतः आतः (६/१) इति पदम् अनुवर्तते। अङ्गस्य (६/१) इत्यधिकृतम्। अनुवृत्तम् आतः इति पदम् अङ्गस्य इति अधिकृतस्य पदस्य विशेषणम्। अतः तदन्तविधौ आदन्तस्य अङ्गस्य इत्यर्थलाभः। इत्थं सूत्रार्थः भवति - आकारान्तस्य अङ्गस्य स्थाने ईकारादेशो भवति यति परतः इति। अलोऽन्त्यस्य इति परिभाषया अयमादेशः आकारान्तस्य अङ्गस्य अन्त्यस्य अलः स्थाने भवति।

**उदाहरणम्** - देयम्।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण दा य इति स्थिते दा इति आकारान्तम् अङ्गम् अस्ति। अतः अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन ईद्यति इति सूत्रेण ददातेराकारस्य ईकारे दी य इति जाते तिङ्शिद्भ्यो भिन्नत्वेन धातोः विहितत्वेन च यत्प्रत्ययस्य आर्धधातुकं शेषः इत्यार्धधातुकसंज्ञायाम् इको गुणवृद्धी इति अलोऽन्त्यस्य इति च परिभाषाभ्यां परिष्कृतेन सार्वधातुकार्धधातुकयोः इत्यनेन इगन्ताङ्गस्य दी इत्यस्य ईकारस्य गुणे एकारे संयोगे निष्पन्नस्य देयशब्दस्वरूपस्य कृदन्तत्वेन कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां विशेष्यनिघ्नात् सामान्ये नपुंसकम् इति नियमेन नपुंसके वर्तमानात् ततः सौ सोरमि पूर्वरूपे देयम् इति रूपं सिद्धम्।

आक्रोशक्रियावाचिनो भ्वादिगणे पठितात् भूवादयो धातवः इत्यनेन धातुसंज्ञकात् सकर्मकात् आत्मनेपदिनः शप् -धातोः कृत्याः इत्यधिकारे पठितेन तयोरेव कृत्यक्तखलर्थाः इति सूत्रकृतनियमेन ऋहलोर्ण्यत् इति वक्ष्यमाणेन सूत्रेण ण्यति प्राप्ते सूत्रमिदमारभ्यते -

## [२६.१०] पोरदुपधात्॥ (३.१.९८)

**सूत्रार्थः** - पवर्गान्താददुपधाद्यत्स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण यत्प्रत्ययो विधीयते। पोः (५/१) अदुपधात् (५/१) इति सूत्रस्थपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। अचो यत् इत्यतः यत् (१/१) इति पदम् अनुवर्तते। अत् उपधा यस्य सः अदुपधः, तस्मात् अदुपधात् इति बहुव्रीहिसमासः। पोः इति धातोः इत्यस्य विशेषणमस्ति। विशेषणत्वात् तदन्तविधौ पवर्गान्ताद् धातोः इत्यर्थलाभः। सूत्रार्थस्तावत् - पवर्गान्तात् अदुपधात् धातोः यत्प्रत्ययः स्यात्। योगोऽयम् ऋहलोर्ण्यत् इत्यस्य अपवादः। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः कृत्यसंज्ञकश्च भवति।

**उदाहरणम्** - शप्यम्। लभ्यम्।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण शप् -धातोः प्राप्तस्य ण्यतः प्रकृतसूत्रेण बाधः शप्धातोः पवर्गान्तत्वात् अदुपधत्वाच्च। ततः पोरदुपधात् इति प्रकृतसूत्रेण शप् -धातोः कर्मणि कृत्संज्ञके यत्प्रत्ययेऽनुबन्धलोपे शप् य इति स्थिते संयोगे निष्पन्नस्य शप्यशब्दस्वरूपस्य कृदन्तत्वेन कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां विशेष्यनिघ्नात् सामान्ये नपुंसकम् इति नियमेन नपुंसके वर्तमानात् ततः सौ अतोऽम् इति सोरमि शप्य अम् इति जाते अमि पूर्वः इत्यनेन पूर्वरूपे शप्यम् इति रूपं सिद्धम्। एवमेव लभ्धातोः प्रकृतसूत्रेण यति प्रक्रियया लभ्यम् इति रूपम् सिध्यति।

## पाठगतप्रश्नाः -२

११. तव्य -तव्यत्प्रत्यययोः को भेदः।

१२. केलिमर उपसंख्यानम् इति वार्तिकस्य उदाहरणं लिखत।

१३. बहुलम् कतिविधम् भवति।

१४. अचो यत् इत्यस्य कोऽर्थः।

१५. ईद्यति इत्यस्य उदाहरणम् किम्।

१६. लभ्यम् इत्यत्र कः प्रत्ययः केन।

१७. बहुलम् -विषेय प्रसिद्धा कारिका का।

इदानीम् क्यप्प्रत्ययविधायकम् सूत्रम् आरभ्यते -

## [२६.११] एतिस्तुशास्वृदृजुषः क्यप्॥ (३.१.१०९)

**सूत्रार्थः** - एतिस्तुशास्वृदृजुषः क्यप् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण क्यप्प्रत्ययो विधीयते। एतिस्तुशास्वृदृजुषः (५/१) क्यप् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। एति इति इण्गतौ इति धातोः श्तिप्प्रत्ययान्तरूपम् (इक्श्तिपौ धातुनिर्देशे)। एतिश्च स्तुश्च शास् च वृ च दृ च जुष् च एतिस्तुशास्वृदृजुष् च इति समाहारद्वन्द्वः। तस्मात् एतिस्तुशास्वृदृजुषः। इण्, स्तु, शास्, वृ, दृ, जुष् इति धातुभ्यः क्यप् -प्रत्ययः परो भवति। क्यपः ककारः लशक्वतद्धिते इत्यनेन इत्संज्ञकः, पकारश्च हलन्त्यम् इत्यनेन। तेन य -मात्रम् शिष्यते। ककारानुबन्धः गुणवृद्धिनिषेधार्थः। पकारानुबन्धश्च तुगागमार्थः। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः कृत्यसंज्ञकश्च भवति।

**उदाहरणम्** - क्रमशः सूत्रस्यास्य उदाहरणानि प्रदर्श्यन्ते -

इ (इण् गतौ अदादि. परस्मै. अनिट्) - एत्यः।

स्तु (ष्टुञ् स्तुतौ अदादि. उभय. अनिट्) - स्तुत्यः।

शास् (शासु अनुशिष्टौ अदादि. परस्मै. अनिट्) - शिष्यः।

वृ (वृञ् वरणे स्वादि./क्र्यादि. उभय. सेट्) - वृत्यः।

दृ (दृङ् आदरणे - प्रायेण आङ्पूर्वः। तुदादि. आत्मने. अनिट्) -आदृत्यः।

जुष् ( जुषी प्रीतिसेवनयोः तुदादि. आत्मने. सेट्) - जुष्यः।

**सूत्रार्थसमन्वयः** -

**शिष्यः** - अनुशिष्टिक्रियावाचिनः अदादिगणे पठितात् भूवादयो धातवः इति सूत्रेण धातुसंज्ञकात् परस्मैपदिनः सकर्मकात् सेटः शासः कृत्याः इत्यधिकारे पठितेन तयोरेव कृत्यक्तखलर्थाः इति सूत्रकृतनियमेन एतिस्तुशास्वृदृजुषः क्यप् इति सूत्रेण कर्मणि कृत्संज्ञके क्यप्प्रत्यये अनुबन्धलोपे शास् य इति स्थिते सूत्रमिदमारभ्यते -

## [२६.१२] शास इदङ्हलोः॥ (६.४.३४)

**सूत्रार्थः** - शास उपधाया इत्स्यादङि हलादौ क्ङिति।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण इदादेशो विधीयते। शासः (६/१) इत् (१/१) अङ्हलोः (७/२) इति सूत्रगतपदच्छेदः। अनिदितां हल उपधायाः क्ङिति इत्यतः, उपधायाः (६/१) क्ङिति (७/१) इति पदे अनुवर्तेते। अङ् च हल् च अङ्हलौ इति इतरेतरयोगद्वन्द्वः, तयोः अङ्हलोः। क्ङिति इत्यस्य विशेषणम् हलि इति। अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ हलादौ क्ङिति इत्यर्थलाभः। सूत्रार्थस्तावत् - अङ्गसंज्ञकस्य शासः उपधायाः स्थाने ह्रस्वः इकारादेशो भवति अङि हलादौ क्ङिति च परतः इति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण शास् य इत्यत्र क्यपः हलादित्वात् कित्त्वाच्च शास इदङ्हलोः इति प्रकृतसूत्रेण शास उपधाया आकारस्य इकारे शिस् य इति जाते तिङ्शिद्भ्यो भिन्नत्वेन धातोः विहितत्वेन च आर्धधातुकं शेषः इति क्यपः आर्धधातुकत्वेऽपि कित्त्वेन पुगन्तलघूपधस्य च इति

लघूपधस्य अङ्गस्य इकः स्थाने प्राप्तस्य गुणस्य क्ङिति च इत्यनेन निषेधे शासिवसिघसीनाञ्च इति शासः सस्य षत्वे संयोगे निष्पन्नस्य शिष्यशब्दस्वरूपस्य कृदन्तत्वेन कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां विशेष्यनिघ्नात् ततः सौ विभक्तिकार्ये शिष्यः इति रूपं सिद्धम्। गुरुणा शिष्यः शिष्यः इत्याद्युदाहरणम्। धातोः अत्र कर्मणि प्रत्ययविधानेन कर्मणः उक्तत्वात् प्रातिपदिकार्थमात्रे ततः प्रथमा कर्तुरनुक्तत्वात् च कर्तृवाचकात् गुरुशब्दात् कर्तृकरणयोस्तृतीया इति तृतीया सिद्ध्यति। जुष्धातोः क्यपि कित्त्वात् लघूपधगुणनिषेधे जुषः इति रूपम् सिध्यति।

ष्टुञ् स्तुतौ इति धातोः धात्वादेः षः सः इत्यनेन षकारस्य स्थाने सकारादेशे निमित्तापाये नैमित्तिकस्याप्यपायः इत्यनेन षकाररूपनिमित्तापाये नैमित्तिकटकारस्यापि अपाये तकारो भवति। ततः स्तुधातोः एतिस्तुशास्वृदृजुषः क्यप् इति सूत्रेण क्यपि अनुबन्धलोपे स्तु य इति जाते सूत्रमिदमारभ्यते -

## [२६.१३] ह्रस्वस्य पिति कृति तुक्॥ (६.१.७१)

**सूत्रार्थः** - पिति कृति परे ह्रस्वस्य तुगागमो भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदचतुष्टयात्मकम्। अनेन सूत्रेण तुगागमो विधीयते। ह्रस्वस्य (६/१) पिति (७/१) कृति (७/१) तुक् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प् इत् यस्य सः पित् तस्मिन् पिति इति बहुव्रीहिसमासः। शप्, तिप्, सिप्, क्यप् इति पितः। सूत्रार्थस्तावत् - कृत्संज्ञके पिति परे ह्रस्वस्य तुगागमो भवति। तुकः ककारः हलन्त्यम् इत्यनेन इत्संज्ञकः उकारश्च उच्चारणार्थः। तुक् कित् अस्ति अतः आद्यन्तौ टकितौ इति परिभाषया ह्रस्वस्य अन्त्यावयवो भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण स्तु य इति जाते क्यप् कृदतिङ् इत्यनेन कृत्संज्ञकः किञ्च पित् अपि अस्ति। अतः प्रकृतसूत्रेण स्तोः ह्रस्वस्य उकारस्य तुगागमे अनुबन्धलोपे स्तु त् य इति जाते संयोगे निष्पन्नस्य स्तुत्यशब्दस्वरूपस्य कृदन्तत्वेन कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां विशेष्यनिघ्नात् ततः सौ विभक्तिकार्ये स्तुत्यः इति रूपं सिद्धम्। एवमेव प्रक्रियया अन्यानि रूपाणि बोद्धव्यानि।

(मृजु संशुद्धौ, अदादि. परस्मै. वेट्) मृज्धातोः ऋदुपधाच्चाक्लृपिचृतेः इति नित्यं क्यपि प्राप्ते विकल्पेन क्यप् -प्रत्ययविधानाय सूत्रमिदमारभ्यते -

{सूत्रम्. **ऋदुपधाच्चाक्लृपिचृतेः** (३.१.११०) = ऋदुपधात् धातोः क्यप् स्यात् क्लृप् -चृत् इत्येतौ धातू विना।}

## [२६.१४] मृजेर्विभाषा॥ (३.१.११३)

**सूत्रार्थः** - मृजेः क्यब्वा।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण विकल्पेन क्यप्प्रत्ययो विधीयते। मृजेः (५/१) विभाषा (अव्ययम्) इति सूत्रगतपदच्छेदः। एतिस्तुशास्वृदृजुषः क्यप् इत्यतः क्यप् (१/१)

इति पदमनुवर्तते। मृजेः इत्यत्र मृज् -धातोः इक्प्रत्ययः धातुनिर्देशार्थः इक्श्तिपौ धातुनिर्देशे इति योगेन। मृज् -धातोः क्यप्प्रत्ययः परो भवति विकल्पेन इति सूत्रार्थः।

**उदाहरणे सूत्रार्थसमन्वयः -** मृज्यः। पूर्वोक्तप्रकारेण मृज्धातोः नित्यं क्यपि प्राप्ते तम् अपवादत्वेन प्रबाध्य सूत्रेणानेन विकल्पेन क्यपि अनुबन्धलोपे मृज् य इति जाते मृजेर्वृद्धिः इति वक्ष्यमाणेन सूत्रेण वृद्धौ प्राप्तायाम् क्ङिति च इति निषेधे संयोगे निष्पन्नस्य मृज्यशब्दस्वरूपस्य कृदन्तत्वेन कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां विशेष्यनिघ्नात् ततः सौ विभक्तिकार्ये मृज्यः इति रूपं सिद्धम्।

क्यप्प्रत्याभावे च अग्रिमसूत्रम् प्रवर्तते -

## [२६.१५] ऋहलोर्ण्यत्॥ (३.१.१२४)

**सूत्रार्थः -** ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्।

**सूत्रव्याख्या -** विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण ण्यत्प्रत्ययः विधीयते। ऋहलोः (६/२) ण्यत् (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। ऋहलोः इत्यत्र पञ्चम्यर्थे षष्ठीप्रयोगः छान्दसः। ऋवर्णश्च हल् च तयोः इतरेतरयोगद्वन्द्वे ऋहलौ तयोः ऋहलोः। ऋहलोः इति धातोः इत्यस्य विशेषणमस्ति। अतः तदन्तविधौ ऋवर्णान्तात् हलन्तात् च धातोः इत्यर्थलाभः। सूत्रार्थस्तावत् - ऋवर्णान्तात् हलन्तात् च धातोः ण्यत्प्रत्ययः परो भवति। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः कृत्यसंज्ञकश्च भवति। ऋवर्णान्तात् धातोः अचो यत् इत्यनेन प्राप्तस्य यतः अपवादोऽयम् ण्यत्प्रत्ययः। ण्यतः णकारः चुटू इत्यनेन इत्संज्ञकः। तकारश्च हलन्त्यम् इत्यनेन। तेन य -मात्रम् शिष्यते। तकारानुबन्धः स्वरार्थः। णकारानुबन्धश्च अचो ञ्णिति इति वृद्ध्यर्थः।

**उदाहरणे सूत्रार्थसमन्वयः -** पूर्वोक्तप्रकारेण मृज्धातोः ण्यति अनुबन्धलोपे मृज् य इति जाते अग्रिमसूत्रम् प्रवर्तते -

## [२६.१६] चजोः कु घिण्ण्यतोः॥ (७.३.५२)

**सूत्रार्थः -** चजोः कुत्वं स्यात् घिति ण्यति च परे।

**सूत्रव्याख्या -** विधिसूत्रमिदम् पदत्रयात्मकमस्ति। अनेन सूत्रेण कुत्वम् विधीयते। चजोः (६/२) कु (१/१ – लुप्तविभक्तिकं पदम्) घिण्ण्यतोः (७/२) इति सूत्रगतपदच्छेदः। चश्च ज् च चजौ इति इतरेतरयोगद्वन्द्वः, तयोः चजोः। चकारादकारः उच्चारणार्थः। घ् इत् यस्य सः घित् इति बहुव्रीहिसमासः। घित् ण्यत् च घिण्ण्यतौ इति इतरेतरयोगद्वन्द्वः, तयोः घिण्ण्यतोः। सूत्रार्थस्तावत् - घिति ण्यति च प्रत्यये परतः चकारस्य जकारस्य वा स्थाने कवर्गादिशो भवति।

**उदाहरणे सूत्रार्थसमन्वयः -** पूर्वोक्तप्रकारेण मृज् य इति स्थिते स्थानेऽन्तरतमः इति परिभाषासहयोगेन प्रकृतसूत्रेण जकारस्य स्थाने गकारादेशे मृग् य इति जाते अग्रिमसूत्रमारभ्यते -

## [२६.१७] मृजेर्वृद्धिः॥ (७.२.११४)

**सूत्रार्थः** - मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण वृद्धिः विधीयते। मृजेः (६/१) वृद्धिः (१/१) इति सूत्रगतपदच्छेदः। इको गुणवृद्धी इति परिभाषया इकः इति षष्ठ्यन्तम् पदम् उपतिष्ठते। सूत्रार्थस्तावत् - मृज् -धातोः इकः स्थाने वृद्धिः भवति। अत्र कस्मिन् प्रत्यये परे वृद्धिर्भवति इति निर्देशो नास्ति। परन्तु धातोरुच्यमानं कार्यं तत्प्रत्यये भवति इति परिभाषाबलात् मृजः विहिते प्रत्यये एव वृद्धिरूपकार्यं भवति। मृजः द्विविधप्रत्ययविधानसम्भवः सार्वधातुकप्रत्ययः आर्धधातुकप्रत्यय चेति। ततश्च सूत्रार्थो भवति मृज् -धातोः इकः स्थाने वृद्धिः स्यात् सार्वधातुकार्धधातुकयोः इति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण मृग् य इति स्थिते ण्यतः आर्धधातुकत्वात् मृजः (एकदेशविकृतमनन्यवत् इति न्यायेन) ऋकारस्य वृद्धौ उरण् रपरः इति रपरत्वे मार्ग्य इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ मार्ग्यः इति रूपं सिध्यति। एवञ्च मृज्धातोः क्यपि मृज्यः, ण्यति मार्ग्यः इति रूपं सिध्यति।

एतावता ऋहलोर्ण्यत् इति हलन्तधातोः आलोचितम्। ऋकारस्य उदाहरणम् - कृधातोः **कार्यम्** - कृ धातुः ऋकारान्तः वर्तते। अतः ऋहलोर्ण्यत् इति सूत्रेण कृधातोः ण्यत्प्रत्यये णकारतकारयोः अनुबन्धलोपे कृ य इति स्थिते ण्यत्प्रत्ययः णित् अस्ति इत्यतः अचो ञ्णिति इति सूत्रेण कृ इत्यस्य ऋकारस्य वृद्धौ आकारे उरण् रपरः इति रपरत्वे च कार् य इति जाते वर्णसंयोगे कार्य इति जाते अयं कृदन्तः इति हेतोः कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां सुप्रत्यये विभक्तिकार्ये च कार्यम् इति रूपं भवति। एवमेव हृधातोः हार्यम्, धृधातोः धार्यम् इत्यादि सिध्यति।

**मार्ग्यः इति रूपसाधनम्** - शुद्धिक्रियावाचिनः अदादिगणे पठितात् भूवादयो धातवः इत्यनेन धातुसंज्ञकात् परस्मैपदिनः सकर्मकात् वेटः ऋदुपधात् मृज्धातोः कृत्याः इत्यधिकारे पठितेन ऋदुधाच्चाक्लृपिचृतेः इत्यनेन नित्यं क्यपि प्राप्ते मृजेर्विभाषा इति विकल्पेन तस्य विधानात् क्यबभावपक्षे ऋहलोर्ण्यत् इति सूत्रेण कर्मणि कृत्संज्ञके ण्यत्प्रत्यये णतयोः यथाक्रमं चुटू हलन्त्यम् चेति सूत्रद्वयेन इत्संज्ञायां तस्य लोपः इति लोपे च कृते मृज् य इति स्थिते ण्यतः णित्त्वेन तस्मिन् परे स्थानेऽन्तरतमः इति परिभाषया परिष्कृतेन चजोः कु घिण्ण्यतोः इति सूत्रेण मृजेः संवारस्य नादस्य घोषस्य अल्पप्राणस्य जकारस्य कुत्वे तादृशे गकारे मृग् य इति जाते तिङ्शिद्भ्यो भिन्नत्वेन धातोः विहितत्वेन च आर्धधातुकं शेषः इति ण्यतः आर्धधातुकत्वेन लघूपधगुणं प्रबाध्य इको गुणवृद्धी इति परिभाषया परिष्कृतेन मृजेर्वृद्धिः इति सूत्रेण मृजेरिकः ऋकारस्य वृद्धौ उरण् रपरः इति रपरत्वे च कृते संयोगे निष्पन्नस्य मार्ग्यशब्दस्वरूपस्य कृदन्तत्वेन कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां विशेष्यनिघ्नात् ततः सौ विभक्तिकार्ये मार्ग्यः इति रूपं सिद्धम्।

## पाठगतप्रश्नाः -३

१८. शिष्यः इत्यत्र कः प्रत्ययः केन।

१९. शिष्यः इत्यत्र शास्धातोः आकारस्य इकारः कथम्।

२०. स्तुत्यः इत्यत्र तुगागमः केन।

२१. मृज्धातोः कति कृत्प्रत्यया भवन्ति।

२२. चजोः कु घिण्ण्यतोः इत्यस्य कोऽर्थः।

२३. मार्ग्यः इत्यत्र वृद्धिः केन।

२४. मृज्धातोः क्यप् केन।

## पाठसारः

कृत्यप्रकरणाख्ये अस्मिन् पाठे तव्य, तव्यत्, अनीयर्, यत्, ण्यत्, क्यप्, केलिमर् इत्येते सप्त प्रत्ययाः आलोचिताः। एतेषाम् कृदतिङ् इत्यधिकारे पठितत्वात् कृत्संज्ञा। पुनः कृत्याः इत्यधिकारे पठितत्वात् कृत्यसंज्ञका अपि भवन्ति। एतेषाम् प्रत्ययानाम् कर्तरि कृत् इति कर्त्रर्थे विधाने प्राप्ते तयोरेव कृत्यक्तखलर्थाः इति सूत्रेण भावकर्मणोरेव अर्थयोः ते विधीयन्ते। अतः कर्त्रर्थे कृत्यप्रत्यया न भवन्ति। आदौ तव्यत्तव्यानीयरः इत्यनेन तव्य -तव्यत् -अनीयर् इत्येतेषाम् त्रयाणां विषये उक्तम्। तत्रैव केलिमर उपसंख्यानम् इति वार्तिकेन केलिमर् -प्रत्ययविधानम् भवति इत्यालोचितम्। ततः अचो यत् इति यत्प्रत्ययः, ऋहलोर्ण्यत् इति ण्यत्प्रत्ययः, एतिस्तुशास्वृदृजुषः क्यप् इति क्यप्प्रत्ययः इति शिष्टाः त्रयः आलोचिताः। तत्तत्सूत्रस्थलेषु केषाञ्चित् कृत्यप्रत्ययान्तशब्दानाम् प्रक्रियाः अपि प्रदर्शिताः सन्ति।

## पाठान्तप्रश्नाः

१. कृत्यप्रत्ययानाम् विषये लघुप्रबन्धो लेख्यः।

२. वासरूपोऽस्त्रियाम् इति सूत्रं व्याख्यात।

३. तयोरेव कृत्यक्तखलर्थाः इति सूत्रं सोदाहरणम् व्याख्यात।

४. कृत्यलुटो बहुलम् इति सूत्रं सोदाहरणम् व्याख्यात।

५. तव्यत्तव्यानीयरः इति सूत्रं सोदाहरणम् व्याख्यात।

६. एतिस्तुशास्वृदृजुषः क्यप् इति सूत्रं सोदाहरणम् व्याख्यात।

७. ह्रस्वस्य पिति कृति तुक् इति सूत्रं सोदाहरणम् व्याख्यात।

८. एधितव्यम्, एधनीयम् इत्यनयोः रूपसिद्धिः कार्या।

९. पचेलिमा इत्यस्य रूपसिद्धिः कार्या।

१०. शिष्यः इत्यस्य रूपसिद्धिः कार्या।

११. मार्ग्यः इत्यस्य रूपसिद्धिः कार्या।

१२. देयम् इत्यस्य रूपसिद्धिः कार्या।

## पाठगतप्रश्नोत्तराणि

### उत्तराणि-१

१. धातोः इत्यस्य अधिकारः तृतीयाध्यायसमाप्तिम् यावत्।

२. अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्ययः उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना।

३. अधिकारसूत्रम्।

४. ण्वुल्तृचौ (३.१.१३३) इत्यतः प्राक्

५. परिभाषासूत्रम्।

६. भावकर्मणोः।

७. कर्तरि कृत् इत्यस्य।

८. संज्ञाद्वयम् सम्भवति।

९. सप्त।

१०. तव्यं च तव्यतञ्चैवानीयर् -केलिमरौ तथा।
यतं ण्यतं क्यपं चापि कृत्यान् सप्त प्रचक्षते। इति

### उत्तराणि-२

११. रूपाभेदेऽपि स्वरे भेदः।

१२. पचेलिमा माषाः। पक्तव्या माषाः इत्यर्थः।

१३. चतुर्विधम्।

१४. अजन्तात् धातोः परे कृत्संज्ञकः कृत्यसंज्ञकश्च यत्प्रत्ययः स्यात्।

१५. देयम्।

१६. पोरदुपधात् इति सूत्रेण यत्प्रत्ययः।

१७. क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव॥
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥ ।

**उत्तराणि-३**

१८. एतिस्तुशास्वृदृजुषः क्यप्

१९. शास इदङ्हलोः।

२०. ह्रस्वस्य पिति कृति तुक्।

२१. क्यप् ण्यत् चेति कृत्प्रत्ययद्वयम्।

२२. चजोः कुत्वं स्यात् घिति ण्यति च परे।

२३. मृजेर्वृद्धिः।

२४. मृजेर्विभाषा

॥इति षड्विंशः पाठः॥

## २७

# पूर्वकृदन्तम् -१

## प्रस्तावना

पूर्वस्मिन् पाठे भवन्तः कृत्यप्रत्ययानां परिचयं प्राप्तवन्तः। अस्मिन् पाठे पूर्वकृदन्तस्य प्रथमभागस्य आलोचना करिष्यते। द्वितीयभागस्य तु उत्तरपाठे। अस्मिन् आलोचयिष्यमाणानां प्रत्ययानाम् कृत्संज्ञामात्रमस्ति न तु कृत्यसंज्ञापि। कृत्प्रत्ययाः सामान्यतया कर्त्रर्थे भवन्ति। किन्तु क्वचित् भिन्नार्थेऽपि इति तत्तत्सूत्रैः ज्ञास्यते। क्वचित् कृत्प्रत्ययः धातुमात्रात् विधास्यते। क्वचिच्च कश्चित् शब्दविशेषः उपपदम् भवति चेदेव धातोः कृत्प्रत्ययो विधास्यते। पाठेऽस्मिन् ण्वुल् -तृच् -ल्यु -णिनि -अच् -क -अण् -ट इत्येते प्रत्ययाः आलोचयिष्यन्ते। तत्र तत्र कृत्प्रत्ययसंयोजनेन निष्पन्नानाम् शब्दानाम् प्रक्रियाः अपि प्रदर्शयिष्यन्ते। किञ्च अन्ते निष्ठासंज्ञकप्रत्ययसम्बन्धिनी चर्चापि विधास्यते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- ण्वुल्तृचौ इति बहुप्रयोजनवतः सूत्रस्य अर्थं ज्ञास्यति।।
- कर्त्रर्थातिरिक्तकर्माद्यर्थे कृत्प्रत्ययानाम् प्रयोगान् ज्ञास्यति।
- निष्ठासंज्ञकप्रत्ययानाम् प्रयोगान् अधिगमिष्यति।
- कारकः, कर्ता, गृहम्, प्रियः, कुम्भकारः, कुरुचरः, स्तुतः, कृतवान्, शीर्णः, शुष्कः, पक्वः, भावितः, दत्तः इत्येतेषाम् लौकिकव्यवहारोपयोगिनाम् कृदन्तशब्दानाम् प्रक्रियाः अधिगमिष्यति।
- तत्तदनुबन्धानाम् प्रयोजनम् ज्ञास्यति।

### [२७.१] ण्वुल्तृचौ॥ (३.१.१३३)

**सूत्रार्थः** - धातोः ण्वुल्तृचौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् एकपदात्मकम्। अनेन सूत्रेण ण्वुल्तृचौ प्रत्ययौ विधीयेते। ण्वुल्तृचौ इति प्रथमाद्विवचनान्तम्। अस्मिन् सूत्रे प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। तत्र प्रत्ययः इत्यस्य प्रत्ययौ (१/२), परः इत्यस्य परौ (१/२) इत्यनयोः द्विवचनान्ततया विपरिणामो भवति। ण्वुल् च तृच् च ण्वुल्तृचौ इति इतरेतरयोगद्वन्द्वसमासः। धातोः ण्वुल्तृचौ कृतौ प्रत्ययौ परौ कर्तरि इति पदयोजना। सूत्रार्थो भवति - धातोः ण्वुल्तृचौ कृत्संज्ञकौ प्रत्ययौ परौ कर्तरि भवतः। एवञ्च अनेन सूत्रेण धातोः विहितौ प्रत्ययौ

कृत्संज्ञकौ भवतः। तौ च कर्त्रर्थे विधीयेते इति। ण्वुलः णकारस्य चुटू इत्यनेन इत्संज्ञा, अतः ण्वुल्प्रत्ययः णित् भवति। अस्य च फलम् अचो ञ्णिति इति सूत्रेण धातोः अन्त्यस्य अचः वृद्धिः, अत उपधायाः इत्यनेन धातोः उपधायाः वृद्धिः। ण्वुलः लकारश्च हलन्त्यम् इत्यनेन इत्संज्ञको भवति, तेन लिति इति लित्स्वरः सिध्यति। ततः वु -मात्रं शिष्यते। तृचः चकारस्तु हलन्त्यम् इत्यनेन इत्संज्ञकः, तेन तृ -मात्रं शिष्यते।

**उदाहरणम्** - कारकः। कर्ता।

**सूत्रार्थसमन्वयः** - कृ (डुकृञ् करणे, तनादि. उभय. अनिट्) धातोः प्रकृतसूत्रेण कर्त्रर्थे तृचि अनुबन्धलोपे कृ तृ इति स्थिते तृचः धात्वधिकारोक्तत्वात् तिङ्शिद्भिन्नत्वात् च आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते कृधातोः उपदेशे एकाच्त्वात् अनुदात्तत्वाच्च एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः भवति। ततः सार्वधातुकार्धधातुकयोः इत्यनेन कृ इत्यस्य ऋकारस्य गुणे अकारे उरण् रपरः इत्यनेन रपरत्वे क् अर् तृ इति जायते। ततः कर्तृ इति समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ ऋदुशनस्पुरुदंसोनेहसां च इत्यनेन अनङि कर् त् अन् स् इति जायते। ततः अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् इत्यनेन उपधादीर्घे कर् त् आन् स् इति जाते हल्ङ्यादिलोपे न लोपः प्रातिपदिकान्तस्य इत्यनेन पदान्तस्य नकारस्य लोपे कर्ता इति रूपं सिध्यति।

कृधातोः प्रकृतसूत्रेण ण्वुलि अनुबन्धलोपे कृ वु इति जाते सूत्रमिदमारभ्यते -

## [२७.२] युवोरनाकौ॥ (७.१.१)

**सूत्रार्थः** - यु वु एतयोरनाकौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदं पदद्वयात्मकमस्ति। अनेन सूत्रेण अनाकौ आदेशौ विधीयेते। युवोः (६/१) अनाकौ (१/२) इति सूत्रगतपदच्छेदः। युश्च वुश्च युवुः तस्य युवोः इति समाहारद्वन्द्वः (सौत्रं पुंस्त्वम्)। अनश्च अकश्च अनाकौ इति इतरेतरयोगद्वन्द्वः। अन अक इत्युभावपि अदन्तौ आदेशौ। अत्र स्थान्यादेशयोः संख्यासाम्यात् यथासंख्यमनुदेशः समानाम् इति परिभाषा प्रवर्तते। सूत्रार्थस्तावत् - यु इत्यस्य स्थाने अन इत्यादेशः वु इत्यस्य स्थाने अक इत्यादेशः च भवति इति। अन अक इत्युभौ अपि अनेकालौ स्तः। अतः अनेकाल्शित् सर्वस्य इति परिभाषया उभौ अपि सर्वादेशौ भवतः।

**उदाहरणम्** - कारकः।

**सूत्रार्थसमन्वयः** - उपरि उक्तप्रकारेण कृ वु इति दशायां प्रकृतसूत्रेण वु इत्यस्य स्थाने अक इत्यादेशे कृ अक इति स्थिते स्थानिवद्भावेन अक इत्यादेशोऽपि णित्। तेन अचो ञ्णिति इत्यनेन कृ इत्यस्य ऋकारस्य वृद्धौ आकारे उरण् रपरः इत्यनेन रपरत्वे क् आर् अक इति जाते वर्णसम्मेलने कारक इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ कारकः इति रूपं सिध्यति।

**कारकः इति रूपसाधनम्** - करणार्थकात् तनादिगणपठितात् भूवादयो धातवः इत्यनेन धातुसंज्ञकात् उभयपदिनः सकर्मकात् अनिटः कृधातोः करोति इति विग्रहे कर्तरि कृत् इति कर्त्रर्थे कृत्संज्ञके कृदतिङ् इत्यधिकारे पठितेन ण्वुल्तृचौ इत्यनेन ण्वुल्प्रत्यये यथाक्रमं चुटू तथा हलन्त्यम् इत्येताभ्यां सूत्राभ्यां णलयोरित्संज्ञायां तस्य लोपः इत्यनेन तयोर्लोपे कृ वु इति जाते ण्वुलः णित्त्वात् अचो ञ्णिति इति सूत्रेण धातोः ऋकारस्य वृद्धौ आकारे उरण्रपरः इत्यनेन रपरत्वे कार् वु इति जाते यथासंख्यमनुदेशः समानाम् इति परिभाषापरिष्कृतेन युवोरनाकौ इति सूत्रेण वोरकादेशे निष्पन्नस्य कारकशब्दस्वरूपस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां विशेष्यनिघ्नत्वात् प्रसङ्गात् अत्र पुंसि वर्तमानात् ततः सौ सकारस्य रुत्वे रेफस्य च विसर्गे कारकः इति रूपं सिध्यति।

अन इत्यादेशस्य उदाहरणाय सूत्रमिदम् प्रारभ्यते -

## [२७.३] नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः॥ (३.१.१३४)

**सूत्रार्थः** - नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदं पदद्वयात्मकमस्ति। अनेन सूत्रेण ल्यु -णिनि -अच् इत्यादेशाः विधीयन्ते। नन्दिग्रहिपचादिभ्यः (५/३) ल्युणिन्यचः (१/३) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। नन्दिश्च ग्रहिश्च पच् च नन्दिग्रहिपच्, समाहारद्वन्द्वः। नन्दिग्रहिपच् आदिः येषां ते नन्दिग्रहिपचादयः, तेभ्यः नन्दिग्रहिपचादिभ्यः इति द्वन्द्वगर्भबहुव्रीहिसमासः। आदिशब्दः प्रत्येकमभिसम्बद्ध्यते। नन्द्यादिगणः, ग्रह्यादिगणः, पचादिगणः इति गणत्रयं पठितं पाणिनीयगणपाठे। टुनदि समृद्धौ (भ्वादि. परस्मै. सेट्) इति धातोः हेतुमति च इति णिचि नन्दि इति जायते। अयमेव नन्द्यादिगणीयः, नान्यः। ग्रहि इत्यत्र इक्श्तिपौ धातुनिर्देशे इत्यनेन इक्प्रत्ययः। पचादिः आकृतिगणः। ल्युश्च णिनिश्च अच् च ल्युणिन्यचः इति इतरेतरयोगद्वन्द्वः। अत्र धातुप्रत्यययोः संख्यासाम्यात् यथासंख्यमनुदेशः समानाम् इति परिभाषा प्रवर्तते। सूत्रार्थस्तावत् - नन्द्यादिगणपठितधातुभ्यः ल्युप्रत्ययः, ग्रह्यादिगणपठितधातुभ्यः णिनिप्रत्ययः, पचादिगणपठितधातुभ्यः अच् -प्रत्ययः च परो भवति इति। अनेन सूत्रेण विहिताः प्रत्ययाः कृत्संज्ञकाः भवन्ति। ते च कर्त्रर्थे विधीयन्ते। ल्यु इत्यस्य लकारः इत्संज्ञकः अतः यु इत्येव शिष्यते। णिनिः इत्यत्र णकारः चुटू इत्यनेन इत्संज्ञकः नकारोत्तरवर्तिनः इकारश्च उपदेशेऽजनुनासिक इत् इति इत्संज्ञकः। तेन इन् इत्येव शिष्यते। णिनेः णित्करणेन अत उपधायाः इत्यनेन उपधावृद्धिर्भवति। अचः चकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा।

**उदाहरणम्** - नन्दनः। ग्राही। पचः।

**सूत्रार्थसमन्वयः - नन्दयतीति नन्दनः** - समृद्ध्यर्थकस्य भ्वादिगणे पठितस्य भूवादयो धातवः इत्यनेन धातुसंज्ञकस्य परस्मैपदिनः सकर्मकस्य सेटः इदितः नद् (टुनदि) इत्यस्य इदित्त्वात् मिदचोऽन्त्यात्परः इति परिभाषया परिष्कृतेन इदितो नुम्धातोरित्यनेन नुमि अनुबन्धलोपे न न् द् इति स्थिते नश्चापदान्तस्य झलि इत्यनेन नकारस्य झलि दकारे परे अनुस्वारे नंद् इति जाते अनुस्वारस्य

ययि परसवर्णः इत्यनेन अनुस्वारस्य परसवर्णे नकारे नन्द् इति जायते। ततः णिचि विहिते नन्दि इति णिजन्तसमुदायो भवति। अस्य च णिजन्तस्य नन्द्यादिगणे पठितत्वात् प्रकृतसूत्रेण तस्मात् कर्त्रर्थे ल्युप्रत्यये नन्दि ल्यु इति स्थिते लशक्वतद्धिते इत्यनेन लस्येत्संज्ञायां तस्य लोप इति लस्य लोपे नन्दि यु इति जाते णेरनिटि इति णेर्लोपे नन्द् यु इति जाते यथासङ्ख्यमनुदेशः समानाम् इति परिभाषापरिष्कृतेन युवोरनाकौ इति सूत्रेण योरनादेशे निष्पन्नस्य नन्दनशब्दस्वरूपस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां विशेष्यनिघ्नत्वात् प्रसङ्गात् अत्र पुंसि वर्तमानात् सौ अनुबन्धलोपे सस्य रुत्वे विसर्गे नन्दन इति रूपं सिध्यति। एवमेव जनमर्दयतीति जनार्दनः।

**गृह्णातीति ग्राही** - ग्रह उपादाने (क्र्यादि. उभय .सेट्) इति धातोः ग्रह्यादित्वात् प्रकृतसूत्रेण कर्त्रर्थे णिनिप्रत्यये अनुबन्धलोपे ग्रह् इन् इति जाते णिनेः णित्त्वात् अत उपधायाः इत्यनेन उपधायाः अकारस्य वृद्धौ आकारे ग्राहिन् इति जाते कृदन्तत्वात् प्रातिपदिकसंज्ञायां सुप्रत्यये सौ च इत्यनेन उपधादीर्घे हल्ङ्यादिलोपे नलोपः प्रातिपदिकान्तस्य इत्यनेन पदान्तनकारस्य लोपे ग्राही इति रूपं सिध्यति। एवमेव तिष्ठति इति स्थायी, मन्त्रयते इति मन्त्री इत्यादीनि रूपाणि सिध्यन्ति।

{सूत्रम्. **सौ च** (६.४.१३) = इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ।}

**पचतीति पचः** - डुपचष् पाके इति धातोः कर्त्रर्थे प्रकृतसूत्रणे अच्प्रत्यये अनुबन्धलोपे पच् अ इति जायते। ततः अस्य समुदायस्य प्रातिपदिकत्वात् सुविभक्तौ पचः इति रूपं सिध्यति। एवमेव वदतीति वदः, वक्तीति वचः, चलतीति चलः इत्यादीनि रूपाणि भवन्ति।

## [२७.४] इगुपधज्ञाप्रीकिरः कः॥ (३.१.१३५)

**सूत्रार्थः** - इगुपधज्ञाप्रीकिरः कः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण कप्रत्ययः विधीयते। इगुपधज्ञाप्रीकिरः (५/१) कः (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। इक् (प्रत्याहारः) उपधा यस्य सः इगुपधः इति बहुव्रीहिसमासः। इगुपधश्च ज्ञा च प्री च कृ च तेषां समाहारद्वन्द्वे इगुपधज्ञाप्रीकिर्, तस्मात् इगुपधज्ञाप्रीकिरः। समाहारे नपुंसकत्वेऽपि ह्रस्वाभावः सौत्रः, ततः प्रकृतिवदनुकरणं भवति इति परिभाषया प्रकृतिवद्भावात् ऋत इद्धातोः इत्यनेन रपरत्वे सति इरादेशः। इगुपधधातोः, ज्ञाधातोः, प्रीधातोः, कृधातोः च कृत्संज्ञकः कप्रत्ययः परो भवति कर्तरि इति सूत्रार्थः। अनेन सूत्रेण पूर्वोक्तधातुभ्यः विहितः कप्रत्ययः कृत्संज्ञक एव भवति। स च कर्त्रर्थे विधीयते। कप्रत्ययस्य ककारस्य लशक्वतद्धिते इत्यनेन इत्संज्ञा अतः अकारमात्रं शिष्यते। कप्रत्ययस्य कित्त्वात् गुणनिषेधः तथा च आतो लोप इटि च इत्यनेन आकारलोपः सिध्यति।

**उदाहरणम्** - बुधः। कृशः। ज्ञः। प्रियः। किरः।

**सूत्रार्थसमन्वयः** - बुध्यते इति वा **बुधः** इत्यत्र बुध अवगमने इति धातोः उपधायाम् इक्प्रत्याहारस्थः उकारः अस्ति। अतः अस्य धातोः इगुपधत्वात् प्रकृतसूत्रेण कर्त्रर्थे कप्रत्यये अनुबन्धलोपे बुध् अ इति जायते। ततः

कप्रत्ययस्य आर्धधातुकसंज्ञायां पुगन्तलघूपधस्य च इत्यनेन लघूपधगुणे प्राप्ते कप्रत्ययस्य कित्त्वात् क्ङिति च इत्यनेन तन्निषेधो भवति। ततः बुध इति समुदायस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां स्वादिकार्ये बुधः इति रूपं सिध्यति।

एवमेव कृश्यति इति कृशः, लिखति इति लिखः, क्षिपति इति क्षिपः इत्यादि सिध्यति।

जानाति इति **ज्ञः**। अत्र ज्ञा अवबोधने (क्र्यादि. परस्मै. अनिट्) इति धातोः प्रकृतसूत्रेण कर्त्रर्थे कप्रत्यये अनुबन्धलोपे कप्रत्ययस्य कित्त्वात् आतो लोप इटि च इत्यनेन ज्ञाधातोः आकारस्य लोपे कृदन्तत्वात् प्रातिपदिकसंज्ञायां स्वादिकार्ये ज्ञः इति रूपं सिध्यति।

प्रीणाति इति **प्रियः**। अत्र प्रीञ् तर्पणे कान्तौ च ( क्र्यादि. उभय. अनिट्) इति धातोः कर्त्रर्थे प्रकृतसूत्रेण कप्रत्यये अनुबन्धलोपे कित्त्वात् गुणनिषेधे अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यनेन ईकारस्य स्थाने इयङादेशे स्वादिकार्ये प्रियः इति रूपं सिध्यति।

किरति इति **किरः**। अत्र कृ विक्षेपे (तुदादि. परस्मै. सेट्) इति धातोः कर्त्रर्थे प्रकृतसूत्रेण कप्रत्यये अनुबन्धलोपे कित्त्वात् आर्धधातुकनिबन्धनगुणनिषेधः। ततः ऋत इद्धातोः इत्यनेन ऋकारस्य रपरे इर् इत्यादेशे स्वादिकार्ये किरः इति रूपं सिध्यति।

## [२७.५] गेहे कः॥ (३.१.१४४)

**सूत्रार्थः** - गेहे कर्तरि ग्रहेः कः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण कप्रत्ययः विधीयते। गेहे (७/१) कः (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। विभाषा ग्रहः इत्यतः ग्रहः (५/१) इति पदमनुवर्तते। सूत्रार्थस्तावत् - ग्रहधातोः कृत्संज्ञकः कप्रत्ययः परो भवति गेहे कर्तरि। अनेन सूत्रेण धातोः विहितः प्रत्ययः कृत्संज्ञकः भवति। स च कर्त्रर्थे विधीयते।

**उदाहरणम्** - गृहम्।

**सूत्रार्थसमन्वयः** - गृह्णाति धान्यादिकम् इति गृहम् इत्यत्र ग्रहधातोः प्रकृतसूत्रेण कप्रत्यये अनुबन्धलोपे ग्रह् अ इति जाते कित्त्वात् ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च इत्यनेन रेफस्य सम्प्रसारणे ऋकारे सम्प्रसारणाच्च इत्यनेन पूर्वरूपैकादेशे गृह् अ इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां स्वादिकार्ये गृहम् इति रूपं सिध्यति।

कर्मणि उपपदे धातोः कृत्प्रत्ययविधायकसूत्रमारभ्यते -

## [२७.६] कर्मण्यण्॥ (३.२.१)

**सूत्रार्थः** - कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण अण्प्रत्ययः विधीयते। कर्मणि (७/१) अण् (१/१)इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम्



अधिकृतम्। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। तत्रोपपदं सप्तमीस्थम् इति सूत्रानुसारं कर्मणि इति सप्तम्यन्तम् उपपदसंज्ञकम्। सूत्रार्थो हि - कर्मणि उपपदे धातोः कृत्संज्ञकः अण्प्रत्ययः परो भवति कर्तरि इति। अनेन सूत्रेण धातोः विहितः प्रत्ययः कृत्संज्ञकः भवति। स च कर्त्रर्थे विधीयते। अणः णकारः इत्संज्ञकः हलन्त्यम् इत्यनेन। तेन अकारमात्रं शिष्यते। अस्य च फलम् अचो ञ्णिति इति सूत्रेण धातोः अन्त्यस्य अचः वृद्धिः, अत उपधायाः इत्यनेन च धातोः उपधायाः वृद्धिः। अपि च आतो युक्चिण्कृतोः इत्यनेन युगागमोऽपि भवति।

**उदाहरणम्** - कुम्भकारः।

**सूत्रार्थसमन्वयः** - कुम्भं करोतीति कुम्भकारः इत्यत्र कुम्भ इति कर्म उपपदम् अतः प्रकृतसूत्रेण कृधातोः अणि अनुबन्धलोपे कुम्भ अम् कृ अ इति जाते अणः णित्त्वात् अचो ञ्णिति इत्यनेन ऋकारस्य वृद्धौ कुम्भ अम् कार् अ इति जाते कार इति कृदन्तयोगात् कुम्भरूपकर्मणि कर्तृकर्मणोः कृति इति सूत्रेण षष्ठीविभक्तौ कुम्भ ङस् कार इति जाते गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति परिभाषया उपपदमतिङ् इत्यनेन उपपदसमासे समासत्वात् कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोः इत्यनेन ङसो लुकि कुम्भकार इति समुदायस्य एकदेशविकृतमनन्यवत् इति न्यायेन समासत्वात् प्रातिपदिकसंज्ञायां स्वादिकार्ये कुम्भकारः इति रूपं सिध्यति। एवमेव भाष्यं करोति इति भाष्यकारः, सूत्रं करोति इति सूत्रकारः इत्यादौ प्रक्रिया ज्ञेया।

## [२७.७] आतोऽनुपसर्गे कः॥ (३.२.३)

**सूत्रार्थः** - आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण कप्रत्ययो विधीयते। आतः (५/१) अनुपसर्गे (७/१) कः (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। कर्मण्यण् इत्यतः कर्मणि (७/१) इति पदमनुवर्तते। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। अविद्यमानः उपसर्गः यस्य असौ अनुपसर्गः तस्मिन् अनुपसर्गे इति बहुव्रीहिसमासः। अत्र पञ्चम्यर्थे सप्तमी। आतः इति धातोः इत्यस्य विशेषणमस्ति, अतः विशेषणत्वात् तदन्तविधौ आदन्तात् धातोः इत्यर्थो भवति। सूत्रार्थस्तावत् - कर्मणि उपपदे अनुपसर्गात् आदन्तात् धातोः कृत्संज्ञकः कप्रत्ययः परो भवति कर्तरि इति। सूत्रमिदं कर्मण्यण् इत्यस्य अपवादभूतम्। अनेन सूत्रेण धातोः विहितः प्रत्ययः कृत्संज्ञकः भवति। स च कर्त्रर्थे विधीयते। कप्रत्ययस्य ककार इत्संज्ञकः। अस्य फलं तु प्रागुक्तमेवास्ति।

**उदाहरणम्** - गोदः।

**सूत्रार्थसमन्वयः** - गां ददातीति गोदः। अत्र गो इति कर्म उपपदम्। किञ्च दा (डुदाञ् दाने) इति उपसर्गरहितः आकारान्तधातुः। अतः प्रकृतसूत्रेण अण् -अपवादे कप्रत्यये अनुबन्धलोपे गो अम् दा अ इति जाते कप्रत्ययस्य कित्वात् आतो लोप इटि च इत्यनेन दा इत्यस्य आकारस्य लोपे द इति कृदन्तयोगेन गोरूपकर्मणि कर्तृकर्मणोः कृति इति षष्ठीविभक्तिर्भवति। ततः गो ङस् द इति जाते गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति परिभाषया सुबुत्पत्तेः पूर्वमेव



उपपदमतिङ् इत्यनेन उपपदसमासे कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोः इत्यनेन ङसो लुकि **एकदेशविकृतमनन्यवत्** इति न्यायेन समासत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां स्वादिकार्ये गोदः इति रूपं सिध्यति। एवमेव धनं ददाति इति धनदः, कम्बलं ददाति इति कम्बलदः इत्यादौ प्रक्रिया।

## [२७.८] चरेष्टः॥ (३.२.१६)

**सूत्रार्थः** - अधिकरणे उपपदे चरः टः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण टप्रत्ययः विधीयते। चरेः (५/१) टः (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। अधिकरणे शेतेः इत्यतः अधिकरणे (७/१) इति पदमनुवर्तते तच्च तत्रोपपदं सप्तमीस्थमिति सूत्रेण उपपदसंज्ञकं भवति। चरेः इत्यत्र धातुनिर्देशे चर् -धातोः इक्श्तिपौ धातुनिर्देशे इत्यनेन इक्प्रत्ययः। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। अधिकरणे उपपदे चर् -धातोः कृत्संज्ञकः टप्रत्ययः परो भवति कर्तरि इति सूत्रार्थः। अनेन सूत्रेण धातोः विहितः प्रत्ययः कृत्संज्ञकः भवति। स च कर्त्रर्थे विधीयते। टप्रत्ययस्य टकारः इत्संज्ञकः। तेन अ -मात्रं शिष्यते। टित्करणस्य प्रयोजनं टिड्ढाणञादिसूत्रेण स्त्रीलिङ्गे ङीप् -प्रत्ययविधानम्।

**उदाहरणम्** - कुरुचरः।

**सूत्रार्थसमन्वयः** - कुरुषु चरति इति कुरुचरः। अत्र कुरु इत्यधिकरणमुपपदमस्ति। किञ्च चर गतिभक्षणयोः (भ्वादि. परस्मै. सेट्) इति धातुरपि अस्ति। अतः प्रकृतसूत्रेण कर्त्रर्थे टप्रत्यये अनुबन्धलोपे कुरु सुप् चर् अ इति जाते गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति परिभाषया सुबुत्पत्तेः पूर्वमेव उपपदमतिङ् इत्यनेन उपपदसमासे कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोः इत्यनेन सुपो लुकि **एकदेशविकृतमनन्यवत्** इति न्यायेन समासत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां स्वादिकार्ये कुरुचरः इति रूपं सिध्यति।

## पाठगतप्रश्नाः -१

१. ण्वुल्तृचौ इत्यस्य कोऽर्थः।

२. ण्वुल्तृचौ इत्यस्य किम् उदाहरणम्।

३. कारकः इत्यत्र अक इत्यादेशः केन।

४. पचः इत्यत्र केन कः प्रत्ययः।

५. प्रियः इत्यत्र कः प्रत्ययः केन।

६. गेहे कः इत्यस्य उदाहरणम् किम्।

७. कर्मण्यण् इत्यस्य उदाहरणम् किम्।

८. आतोऽनुपसर्गे कः इत्यस्य उदाहरणम् किम्।

९. कुरुचरः इत्यत्र कः प्रत्ययः केन।

१०. टप्रत्ययस्य टित्करणम् किमर्थम्।

११. सूत्रकारः इत्यस्य कोऽर्थः।

१२. भाष्यकारः इत्यत्र कः प्रत्ययः।

---

अधना निष्ठाप्रकरणम् आरभ्यते। तत्रादौ निष्ठासंज्ञाविधायकसूत्रमारभ्यते -

## [२७.९] क्तक्तवतू निष्ठा॥ (१.१.२६)

**सूत्रार्थः** - क्तक्तवतू निष्ठासंज्ञौ स्तः।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण निष्ठा संज्ञा विधीयते। क्तक्तवतू निष्ठा इति सूत्रगतपदानां विभक्तिनिर्देशः। क्तश्च क्तवतुश्च क्तक्तवतू इति इतरेतरयोगद्वन्द्वः। यत्र सूत्रे निष्ठा इति पदं श्रूयते तत्र निष्ठापदेन क्तप्रत्ययस्य क्तवतुप्रत्ययस्य च ग्रहणमिति सूत्रस्यास्याशयः। क्त क्तवतु इत्युभयत्रापि ककारः इत्संज्ञकः लशक्वतद्धिते इत्यनेन। किञ्च क्तवतोः उकारोऽपि इत्संज्ञकः उपदेशेऽजनुनासिक इत् इत्यनेन। उभावपि प्रत्ययौ आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञकौ भवतः। तौ वलादी अपि स्तः। अतः आर्धधातुकस्येड्वलादेः इत्यनेन कुत्रचित् इटः प्राप्तिः, क्वचित् वा इण्निषेधो भवति। उभयोः प्रत्यययोः ककारानुबन्धेन गुणवृद्धिनिषेधसम्प्रसाणादिकार्यं भवति। क्तवतोः उकारानुबन्धस्तु उगितश्च इति उगित्कार्यार्थः। अत्र प्रत्ययभेदेन यद्यपि रूपभेदो भवति। तथापि प्रक्रियायां न तथा तारताम्यम्।

**उदाहरणम्** - अग्रिमसूत्रेषु वक्ष्यते।

## [२७.१०] निष्ठा॥ (३.२.१०२)

**सूत्रार्थः** - भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् एकपदात्मकस्ति। अनेन सूत्रेण निष्ठासंज्ञकप्रत्ययो विधीयते। निष्ठा (१/१) इति प्रथमैकवचनान्तम्। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) , भूते (७/१) इति चतुष्टयम् अधिकृतम्। कृदतिङ्, कर्तरि कृत् इति उभयमपि सूत्रम् अधिकृतम्। सूत्रार्थो हि - भूतकालवृत्तित्वविवक्षायाम् धातोः निष्ठासंज्ञकौ क्तक्तवतुप्रत्ययौ परौ भवतः इति। अनेन सूत्रेण धातोः विहितौ प्रत्ययौ कृत्संज्ञकौ भवतः। किञ्च कर्तरि कृत् इत्यस्य अपवादभूतेन तयोरेव कृत्यक्तखलर्थाः इति सूत्रेण क्तप्रत्ययः भावकर्मार्थे भवति। अकर्मकधातुस्थले क्तप्रत्ययः भावे, सकर्मकधातुस्थले च कर्मणि भवति। अकर्मकस्थले कर्ता प्रथमान्तो भवति, सकर्मकस्थले च कर्ता तृतीयान्तः। क्तवतुप्रत्ययस्तु कर्तरि कृत् इति नियमानुसारं कर्तरि एव अकर्मकधातुस्थले सकर्मकधातुस्थले वा। अत्र च कर्ता प्रथमान्तो भवति इत्यस्ति तयोः प्रत्यययोः विशेषः।



**उदाहरणम् -** स्नातं मया। स्तुतस्त्वया विष्णुः। विश्वं कृतवान् विष्णुः।

**सूत्रार्थसमन्वयः - अकर्मकधातुस्थले क्तप्रत्ययस्य उदाहरणम् -**

**स्नातं मया** - स्ना (ष्णा शौचे, अदा.परस्मै.अनिट्) धातुः अकर्मकः। तस्माच्च धातोः भूतकालवृत्तित्वविवक्षायाम् निष्ठा इति प्रकृतसूत्रेण भावे (धात्वर्थे) क्तप्रत्यये अनुबन्धलोपे क्तप्रत्ययस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः। ततः स्नात इत्यस्य अद्रव्यत्वात् भावे सामान्ये नपुसंकम् इत्यनेन नपुंसकलिङ्गे औत्सर्गिकम् एकवचनम् भवति। ततः स्नात इति समुदायस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमैकवचने सुप्रत्यये अतोऽम् इति सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे स्नातम् इति रूपं सिध्यति। स्नातं मया इत्यत्र मया इति अनभिहिते (अनुक्ते) कर्तरि तृतीया कर्तृकरणयोस्तृतीया इत्यनेन।

**सकर्मकधातुस्थले क्तप्रत्ययस्य उदाहरणम् -**

**स्तुतस्त्वया विष्णुः** - स्तु (ष्टुञ् स्तुतौ, अदादि.उभय.अनिट्) इति सकर्मकधातोः भूतार्थे वृत्तित्वविवक्षायाम् प्रकृतसूत्रेण क्तप्रत्यये पूर्ववत् इण्निषेधे कित्त्वात् सार्वधातुकार्धधातुकयोः इति प्राप्तस्य गुणस्य क्ङिति च इत्यनेन निषेधः। अत्र च क्तप्रत्ययः कर्मणि विहितः अत्र कर्म विष्णुः। अतः तदनुसारम् कृदन्तात् लिङ्गवचने विहिते स्तुतः इति रूपं सिध्यति। कर्मणः अभिहितत्वात् विष्णुः इत्यत्र प्रथमाविभक्तिर्भवति। कर्तुः अनभिहितत्वात् च कर्तृकरणयोस्तृतीया इत्यनेन तृतीयाविभक्तिर्भवति।

**कर्त्रर्थमात्रे क्तवतुप्रत्ययस्योदाहरणम् -**

**विश्वं कृतवान् विष्णुः** - भूतकालवृत्तित्वविवक्षायाम् कृ (डुकृञ् करणे, तनादि.उभय.अनिट्) इति धातोः कर्त्रर्थे क्तवतुप्रत्यये अनुबन्धलोपे इण्निषेधे कित्त्वात् आर्धधातुकनिबन्धनगुणनिषेधे कृ तवत् इति जायते। ततः कृतवत् इति समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां सुवभिक्तौ अत्वसन्तस्य चाधातोः इत्यनेन उपधासंज्ञकस्य वकारोत्तरवर्तिनः अकारस्य दीर्घे मिदचोऽन्त्यात्परः इति परिभाषापरिष्कृतेन उगिदचां सर्वनामस्थानेऽधातोः इत्यनेन नुमागमे अनुबन्धलोपे कृतवान् त् स् इति जाते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यनेन सकारस्य लोपे संयोगान्तस्य लोपेः इत्यनेन संयोगान्ततकारस्यापि लोपे कृतवान् इति रूपं भवति। अत्र क्तवतुस्थले कर्त्रनुसारं लिङ्गवचनं भवति। यथा प्रकृते विष्णुः इति कर्त्रनुसारं लिङ्गवचनं जातम्। अन्यत्र च विश्वं कृतवती देवी, विश्वं कृतवन्तः देवाः, भाग्यं कृतवत् जगत् इत्यादावपि कर्त्रनुसारं लिङ्गवचनमस्ति।

{सूत्रम्. **अत्वसन्तस्य चाधातोः** (६.४.१४) = अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे।}

{सूत्रम्. **उगिदचां सर्वनामस्थानेऽधातोः** (७.१.७० = अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे।}

**अत्र विशेषः** - क्तवतुप्रत्ययः कर्त्रर्थे भवतीति हेतोः कर्म अनुक्तं भवति। तेन कर्मणि द्वितीया इत्यनेन द्वितीयाविभक्तिर्भवति। अत्र कृद्योगे कर्तृकर्मणोः कृति इत्यनेन प्राप्तायाः षष्ठीविभक्तेः न लोकाव्ययनिष्ठाखलर्थतृनाम् इत्यनेन निषेधः।



शॄ हिंसायाम् (क्र्यादि. परस्मै. सेट्) इति धातोः भूतकालवृत्तित्वविवक्षायाम् निष्ठा इत्यनेन कर्मणि निष्ठासंज्ञके क्तप्रत्यये अनुबन्धलोपे आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य श्र्युकः किति इति निषेधः, सार्वधातुकार्धधातुकयोः इति प्राप्तस्य गुणस्य क्ङिति च इत्यनेन निषेधो भवति। ततः ॠत इद्धातोः इत्यनेन धातोः ॠकारस्य इत्वे उरण् रपरः इत्यनेन रपरत्वे हलि च इत्यनेन रेफान्तस्य उपधासंज्ञकस्य इकारस्य दीर्घे शीर् त इति जाते अग्रिमसूत्रमारभ्यते -

{सूत्रम्. **श्र्युकः किति** (७.२.११ = श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न।}

## [२७.११] रदाभ्यां निष्ठातो नः पूर्वस्य च दः॥ (८.२.४२)

**सूत्रार्थः** - रदाभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दस्य च।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् षट् पदानि सन्ति। रदाभ्याम् (५/२) निष्ठातः (६/१) नः (१/१) पूर्वस्य (६/१) च (अव्ययम्) दः (६/१) इति सूत्रगतपदच्छेदः। नः इत्यत्र नकारादकारः उच्चारणार्थः। रश्च दश्च रदौ ताभ्याम् रदाभ्याम् इति इतरेतरयोगद्वन्द्वः। निष्ठायाः त् इति निष्ठात्, तस्य निष्ठातः इति षष्ठीतत्पुरुषसमासः। सूत्रे प्रयुक्तः पूर्वशब्दः सापेक्षम् अस्ति। तत्र कस्मात् पूर्वम् इति जिज्ञासा भवति। अतः निकटस्थनिष्ठाशब्दस्यैवात्र ग्रहणम् भवति। तेन निष्ठासंज्ञकात् प्रत्ययात् पूर्वस्य (दकारस्य स्थाने) इत्यर्थलाभः। सूत्रार्थो हि - रेफदकाराभ्यां परस्य निष्ठासंज्ञकस्य त् इत्यस्य स्थाने न् इत्यादेशो भवति किञ्च निष्ठासंज्ञकात् प्रत्ययात् पूर्वस्य दकारस्य स्थानेऽपि न् इत्यादेशो भवति।

**उदाहरणम्** - शीर्णः। भिन्नः।

**सूत्रार्थसमन्वयः** - उपरि उक्तप्रकारेण शॄधातोः क्तप्रत्यये शीर् त इति जाते प्रकृतसूत्रेण निष्ठासंज्ञकस्य क्तप्रत्ययस्य तकारस्य स्थाने नकारादेशो भवति। यतो हि अयं तकारः **रेफात्** परोऽस्ति। ततः शीर् न् अ इति जाते रषाभ्यां नो णः समानपदे इति नकारस्य णकारादेशे शीर्ण इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये शीर्णः इति रूपं सिध्यति।

कर्तरि क्तवतुप्रत्यये प्रक्रियया शीर्णवान् इति रूपम् अपि भवति।

भिदिर् विदारणे (रुधादि. उभय. अनिट्) इति धातुः सकर्मकः। अतः निष्ठा इति सूत्रेण कर्मणि क्तप्रत्यये अनुबन्धलोपे भिद् त इति जाते आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य एकाच उपदेशेऽनुदात्तात् इति निषेधः, सार्वधातुकार्धधातुकयोः इति प्राप्तस्य गुणस्य क्ङिति च इत्यनेन निषेधो भवति क्तप्रययस्य कित्त्वात्। ततः प्रकृतसूत्रेण **दकारात्** परस्य तकारस्य नकारे पूर्वस्य दकारस्यापि नकारे भिन्न इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये छिन्नः इति रूपं सिध्यति।

कर्तरि क्तवतुप्रत्यये प्रक्रियया छिन्नवान् इति रूपम् अपि भवति।

द्रा कुत्सायां गतौ (अदादि.परस्मै.अनिट्) इति धातोः भूतकालवृत्तित्वविवक्षायाम् निष्ठा इत्यनेन निष्ठासंज्ञकक्तप्रत्यये अनुबन्धलोपे धातोः एकाच्त्वात् अनुदात्तत्वात् च प्राप्तस्य इडागमस्य निषेधे द्रा त इति जाते सूत्रमिदमारभ्यते -

## [२७.१२] संयोगादेरातो धातोर्यण्वतः॥ (८.२.४३)

**सूत्रार्थः** - निष्ठातस्य नः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदचतुष्टयात्मकम्। अनेन सूत्रेण निष्ठातस्य नत्वं विधीयते। संयोगादेः (५/१) आतः (५/१) धातोः (५/१) यण्वतः (५/१) इति सूत्रगतपदच्छेदः। रदाभ्यां निष्ठातो नः पूर्वस्य च दः इति सूत्रात् निष्ठातः (६/१) नः (१/१) इति पदद्वयमनुवर्तते। संयोगः आदिः यस्य सः संयोगादिः तस्मात् संयोगादेः इति बहुव्रीहिसमासः। यण् अस्य अस्तीति यण्वान् ( तदस्यास्त्यस्मिन्निति मतुप् इति मतुप्प्रत्ययः, मादुपधायाश्च इति मतुपः मकारस्य वकारः।) तस्माद् यण्वतः। निष्ठायाः त् इति निष्ठात् तस्य निष्ठातः इति षष्ठीतत्पुरुषसमासः। आतः इति धातोः इत्यस्य विशेषणम् अतः तदन्तविधौ आदन्तात् धातोः इत्यर्थलाभः। सूत्रार्थस्तावत् - संयोगादेः यण्वतः आदन्तात् धातोः परस्य निष्ठासंज्ञकस्य तकारस्य स्थाने नकारादेशो भवति। अर्थात् धातोः आदौ संयोगवर्णः स्यात्, ततः तस्मिन्नेव धातौ यण्प्रत्याहारस्थेषु य् -व् -र् -ल् -वर्णेषु कश्चित् स्यात् किञ्च स धातुः आकारन्तः स्यात् इति त्रितयमत्र अपेक्षितमस्ति निष्ठासंज्ञकतकारस्य नकारादेशविधानाय।

**उदाहरणम्** - द्राणः। ग्लानः।

**सूत्रार्थसमन्वयः** - उपरि उक्तप्रकारेण द्रा त इत्यत्र द्रा इति संयोगादिधातुः अस्ति, अपि च अयं धातुः आकारान्तः अस्ति, किञ्च धातौ यण्प्रत्याहारस्थः रेफवर्णः अस्ति इति अपेक्षितम् त्रितयमत्र वर्तते। अतः प्रकृतसूत्रेण निष्ठातकारस्य नकारादेशे अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन नकारस्य णत्वे द्राण इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये द्राणः इति रूपं सिध्यति। कर्तरि क्तवतु -प्रत्यये द्राणवान् इत्यपि रूपम्। एवमेव प्रक्रिया ग्लानः, ग्लानवान् इत्यत्रापि।

शुष् -धातोः विहितस्य निष्ठातकारस्य ककारादेशविधानाय सूत्रमिदमारभ्यते -

## [२७.१३] शुषः कः॥ (८.२.५१)

**सूत्रार्थः** - शुषः निष्ठातस्य कः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण ककारादेशो विधीयते। शुषः (५/१) कः (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। कः इत्यत्र ककारादकार उच्चारणार्थः। रदाभ्यां निष्ठातो नः पूर्वस्य च दः इति सूत्रात् निष्ठातः (६/१) इति पदमनुवर्तते। सूत्रार्थस्तावत् - शुष्धातोः विहितस्य निष्ठातकारस्य स्थाने ककारादेशो भवति इति।

**उदाहरणम्** - शुष्कः।



**सूत्रार्थसमन्वयः** - शुष शोषणे (दिवादि. परस्मै. अनिट्) इति अकर्मकात् धातोः भूतकालवृत्तित्वविवक्षायाम् कर्तरि क्तप्रत्यये अनुबन्धलोपे शुष् त इति जाते ष्टुना ष्टुः इत्यस्य शुषः कः इत्यस्य च युगपत् प्राप्तिः। ततः पूर्वत्रासिद्धम् इति सूत्रानुसारं शुषः कः (८.२.५१) इति पूर्वत्रिपादिस्थसूत्रं प्रति ष्टुना ष्टुः (८.४.४१) इति परत्रिपादिस्थसूत्रस्य असिद्धत्वात् शुषः कः इति सूत्रेण निष्ठातकारस्य स्थाने ककारादेशे शुष्क इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये शुष्कः इति रूपं सिध्यति। कर्तरि क्तवतुप्रत्यये तु शुष्कवान् इति रूपमपि भवति।

डुपचष् पाके (भ्वादि. उभय. अनिट्) इति धातोः निष्ठा इत्येनन भूतकालवृत्तित्वविवक्षायाम् कर्मणि क्तप्रत्यये अनुबन्धलोपे पच् त इति स्थिते सूत्रमिदमारभ्यते -

## [२७.१४] पचो वः॥ (८.२.५२)

**सूत्रार्थः** - पचः निष्ठातस्य वः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण वकारादेशो विधीयते। पचः (५/१) वः (१/१) इति सूत्रगतपदच्छेदः। ककारादकार उच्चारणार्थः। रदाभ्यां निष्ठातो नः पूर्वस्य च दः इति सूत्रात् निष्ठातः (६/१) इति पदमनुवर्तते। सूत्रार्थस्तावत् - शपच्धातोः विहितस्य निष्ठातकारस्य स्थाने वकारादेशो भवति इति।

**उदाहरणम्** - पक्वः।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण पच् त इति स्थिते पचो वः इति सूत्रेण तकारस्य स्थाने वकारादेशे पच् व इति जायते। ततः पचो वः (८.२.५२) इत्यस्य परत्रिपादित्वेन असिद्धत्वात् चोः कुः (८.२.३०) इत्यनेन चकारस्य कुत्वे ककारे पक्व इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये पक्वः इति रूपं सिध्यति।

कर्तरि क्तवतुप्रत्यये पक्ववान् इति रूपमपि।

भूधातोः हेतुमति च इति हेतुमण्णिचि णित्त्वात् अचो ञ्णिति इति अजन्तलक्षणावृद्धौ औकारे एचोऽयवायावः इति औकारस्य स्थाने आवादेशे भावि इति णिजन्तशब्दरूपम् भवति। ततः सनाद्यन्ता धातवः इत्यनेन भावि इत्यस्य धातुसंज्ञास्ति। स च सकर्मकोऽपि अस्ति। ततः भूतकालवृत्तित्वविवक्षायाम् निष्ठा इत्यनेन कर्मणि क्तप्रत्यये अनुबन्धलोपे भावि त इति जाते धातोः अनेकाच्त्वात् सेट्त्वात् आर्धधातुकस्येड्वलादेः इति इडागमे अनुबन्धलोपे भावि इ त इत जाते सूत्रमिदमारभ्यते -

## [२७.१५] निष्ठायां सेटि॥ (६.४.५२)

**सूत्रार्थः** - णेः लोपः स्यात् सेटि निष्ठायाम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण णिलोपो विधीयते। निष्ठायाम् (७/१) सेटि (७/१) इति सूत्रगतपदच्छेदः। णेरनिटि इत्यतः णेः (६/१) इति पदम् अनुवर्तते। अतो लोपः

इत्यतः लोपः इति पदम् च। इटा सह वर्तते सेट्, तस्मिन् सेटि इति बहुव्रीहिसमासः। सूत्रार्थस्तावत् - सेटि निष्ठायाम् णिच्प्रत्ययस्य लोपो भवति इति। निष्ठाप्रत्ययस्य इडागमे इट्परत्वात् णेरनिटि इति न प्रवर्तते अतः प्रकृतसूत्रारम्भः इट्स्थले णिलोपाय।

**उदाहरणम् -** भावितः।

**सूत्रार्थसमन्वयः -** पूर्वोक्तप्रकारेण भावि इत इत्यत्र सेट् निष्ठाप्रत्ययः परोऽस्ति। अतः निष्ठायां सेटि इति णेर्लोपे भाव् इत इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये भावितः इति रूपं सिध्यति।

भावि इत्यस्मात् क्तवतुप्रत्यये इडागमे भावि इ तवत् इति जाते प्रकृतसूत्रेण णिलोपे भावितवत् इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुप्रत्यये भावितवत् सु इति जाते अत्वसन्तस्य चाधातोः इति अत्वन्तस्य उपधायाः दीर्घे उगिदचां सर्वनामस्थानेऽधातोः इत्यनेन नुमागमे अनुबन्धलोपे हल्ङ्यादिलोपे संयोगान्ततकारलोपे वर्णसम्मेलने च भावितवान् इति रूपं सिध्यति। सूत्रेणानेन स्वार्थणिच् हेतुमण्णिच् इत्युभयोः णिचोः लोपो भवति।

डुदाञ् दाने (जुहोत्यादि. उभय. अनिट्) इति सकर्मकः धातुः घुसंज्ञकः दाधाघ्वदाप् इत्यनेन। अस्माच्च धातोः भूतार्थवृत्तित्वविवक्षायाम् निष्ठा इत्यनेन कर्मणि क्तप्रत्यये अनुबन्धलोपे दा त इति जाते धातोः अनुदात्तत्वात् इडागमनिषेधे दा इत्यस्य घुसंज्ञकत्वात् घुमास्थागापाजहातिसां हलि इत्यनेन आकारस्य ईत्वे प्राप्ते सूत्रमिदमारभ्यते -

## [२७.१६] दो दद्घोः॥ (७.४.४६)

**सूत्रार्थः -** घुसंज्ञकस्य दा इत्यस्य दथ् स्यात् तादौ किति।

**सूत्रव्याख्या -** विधिसूत्रमिदम् पदत्रयात्मकमस्ति। अनेन सूत्रेण दथ् -आदेशो विधीयते। दः (६/१) दथ् (१/१) घोः (६/१) इति सूत्रगतपदच्छेदः। द्यतिस्यतिमास्थामित्तिकिति इत्यतः ति (७/१) किति (७/१) इति पदद्वयमनुवर्तते। दाशब्दस्य षष्ठ्येकवचने आतो धातोः इत्यनेन आकारलोपे दः इति रूपं भवति। ति इति किति इत्यस्य विशेषणमस्ति। अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ तादौ किति इत्यर्थलाभः। सूत्रार्थो हि - तादौ किति घुसंज्ञकस्य दाधातोः स्थाने दथ् इत्यादेशो भवति। दथ् अनेकाल् अस्ति। अतः अनेकाल्शित्सर्वस्य इति परिभाषया दा इति सम्पूर्णस्थाने दथ् इत्यादेशो भवति।

{सूत्रम्. **आतो धातोः** (६.४.१४०) = आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः।}

**अत्र विशेषः**

दो दद्घोः इति सूत्रेण विधीयमानस्य आदेशस्य स्वरूपविषये मतचतुष्टयमस्ति -

तकारान्तः आदेशः - दत् ( दत् + घोः = दद्घोः)।

दकारान्तः आदेशः - दद् ( दद् + घोः = दद्घोः)।

धकारान्तः आदेशः - दध् ( दध् + घोः = दद्धोः)।

थकारान्तः आदेशः - दथ् ( दथ् + घोः = दद्धोः)।

अत्र सर्वत्रापि जश्त्वे सूत्रस्थः दद्धोः इति निर्देशः उपपन्नो भवति। भाष्यकृता तु थान्त एव पाठः समर्थितः। स एवात्र उपन्यस्तः।

**उदाहरणम् -** दत्तः।

**सूत्रार्थसमन्वयः -** पूर्वोक्तप्रकारेण दा त इति जाते प्रकृतसूत्रेण दा इत्यस्य स्थाने दथ् इति सर्वादेशे दथ् त इति जाते खरि च इत्यनेन तकारस्य स्थाने चर्त्वे तकारे दत्त इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये दत्तः इति रूपं सिध्यति।

कर्तरि क्तवतुप्रत्यये तु दत्तवान् इति रूपमपि।

## पाठगतप्रश्नाः -२

१३. निष्ठासंज्ञाविधायकसूत्रम् किम्।

१४. निष्ठा इत्यस्य कोऽर्थः।

१५. शीर्णः इत्यत्र निष्ठातकारस्य णत्वं केन।

१६. शुष्कः इत्यत्र कः प्रत्ययः केन।

१७. पचो वः इत्यस्य उदाहरणम् किम्।

१८. भावितः इत्यत्र णेर्लोपः केन।

१९. दो दद्धोः इत्यस्य उदाहरणम् किम्।

२०. ग्लानः इत्यत्र निष्ठातस्य नत्वं केन।

२१. भिद् -धातोः क्तप्रत्यये क्तवतुप्रत्यये च किम् रूपम्।

२२. पक्तः पक्वः इत्यनयोः कतरत् साधु।

## पाठसारः

अस्मिन् पाठे ण्वुल् -तृच् -ल्यु -णिनि -अच् -क -अण् -ट इत्येते प्रत्ययाः आलोचिताः सन्ति। यद्यपि कर्तरि कृत् इति सामान्यसूत्रेण कर्त्रर्थे कृत्प्रत्यया विधीयन्ते। तथापि केचित् प्रत्ययाः भिन्नार्थेऽपि भवन्ति। यथा क्तप्रत्ययः अकर्मकधातुस्थले कर्तरि सकर्मकधातुस्थले च कर्मणि भवति। भावेऽपि क्तप्रत्ययो भवति इति अन्तिमपाठे वक्ष्यते। क्तवतुप्रत्ययश्च कर्त्रर्थे एव भवति। कारकः, कर्ता, गृहम्, प्रियः, कुम्भकारः, कुरुचरः, स्तुतः, कृतवान्, शीर्णः, शुष्कः, पक्वः, भावितः, दत्तः इत्येतेषाम् कृदन्तशब्दानां

प्रक्रिया प्रदर्शिता। अन्ते निष्ठासंज्ञकयोः क्तक्तवतुप्रत्यययोः आलोचना विहिता। निष्ठातस्य स्थाने कदाचित् नकारः, क्वचित् ककारः, क्वचिच्च वकारः भवति। तेन सर्वत्र निष्ठातकारः न श्रूयते यथा - शुष्कः, शीर्णः, पक्वः इत्यादिषु।

## पाठान्तप्रश्नाः

१. कर्मण्यण् इति सूत्रं सोदाहरणं व्याख्यात।

२. आतोऽनुपसर्गे कः इति सूत्रं सोदाहरणं व्याख्यात।

३. निष्ठासंज्ञकप्रत्ययविषये लघुप्रबन्धो लेख्यः।

४. रदाभ्यां निष्ठातो नः पूर्वस्य च दः इति सूत्रं सोदाहरणं व्याख्यात।

५. संयोगादेरातो धातोर्यण्वतः इति सूत्रं सोदाहरणं व्याख्यात।

६. कुम्भकारः इत्यस्य रूपसिद्धिः कार्या।

७. गोदः इत्यस्य रूपसिद्धिः कार्या।

८. कारकः, कर्ता इत्यनयोः रूपसिद्धिः कार्या।

९. नन्दनः इत्यस्य रूपसिद्धिः कार्या।

१०. भावितः इत्यस्य रूपसिद्धिः कार्या।

## पाठगतप्रश्नोत्तराणि

### उत्तराणि-१

१. धातोः ण्वुल्तृचौ कृत्संज्ञकौ प्रत्ययौ परौ कर्तरि भवतः।

२. कारकः, कर्ता।

३. युवोरनाकौ इत्यनेन।

४. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः इत्यनेन अच् -प्रत्ययः।

५. कः प्रत्ययः इगुपधज्ञाप्रीकिरः कः इत्यनेन।

६. गृहम्।

७. कुम्भकारः।

८. गोदः।

९. चरेष्टः इत्यनेन टप्रत्ययः।

१०. टिड्ढाणञादिसूत्रेण स्त्रीलिङ्गे ङीप् -प्रत्ययविधानम्।

११. सूत्रम् करोति।

१२. अण्प्रत्ययः।

**उत्तराणि-२**

१३. क्तक्तवतू निष्ठा।

१४. भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्।

१५. रदाभ्यां निष्ठातो नः पूर्वस्य च दः।

१६. निष्ठा इत्यनेन क्तप्रत्ययः।

१७. पक्वः।

१८. निष्ठायां सेटि।

१९. दत्तः।

२०. संयोगादेरातो धातोर्यण्वतः।

२१. भिन्नः, भिन्नवान्।

२२. पक्वः।

।।इति सप्तविंशः पाठः।।

# २८

# पूर्वकृदन्तम् २

## प्रस्तावना

भवन्तः पूर्वतने पाठे पूर्वकृदन्तस्य प्रथमभागस्य परिचयं प्राप्तवन्तः। अस्मिन् तृतीयपाठे तस्यैव द्वितीयभागस्य परिचयः प्राप्स्यते। अत्र च कानच् -क्वसु -शतृ -शानच् -तृन् -ष्ट्रन् -उ इत्येते कृत्प्रत्ययाः आलोचयिष्यन्ते। एतेषु कानच् -क्वसु इत्येतौ प्रत्ययौ वैदिकौ भवतः। यद्यपि लोके क्वचित् क्वसुप्रत्ययान्तस्यापि पदस्य प्रयोगो दृश्यते। उपरि उक्तेषु प्रत्ययेषु शतृशानचोः सत्संज्ञा भवति। सत्संज्ञायाः किम् प्रयोजनम् इति अग्रे ज्ञास्यते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- कानच् -क्वसु इत्यनयोः वैदिकप्रत्यययोः प्रयोगान् अधिगमिष्यति।
- सत्संज्ञकप्रत्ययः कस्मिन्नर्थे विधीयते इति ज्ञास्यति।
- सत्संज्ञकप्रत्ययान्तानाम् शब्दानाम् प्रक्रियाः अधिगमिष्यति।
- चक्राणः, जगन्वान्, पचन्तम्, पचमानम्, विद्वान्, करिष्यन्तम्, करिष्यमाणम्, कर्ता, चिकीर्षुः, प्राट्, नद्ध्री, दंष्ट्रा, पत्त्रम्, मेढ्रम्, सेक्त्रम्, सेत्रम्, तोत्त्रम्, स्तोत्रम्, योक्त्रम्, योत्रम्, शस्त्रम्, नेत्रम्, दात्रम् इत्येतेषाम् कृदन्तशब्दानाम् प्रक्रियाः अधिगमिष्यति।
- तत्तदनुबन्धानाम् प्रयोजनम् ज्ञास्यति।

## [२८.१] लिटः कानज्वा॥ (३.२.१०६)

## [२८.२] क्वसुश्च॥ (३.२.१०७)

**सूत्रयोरर्थः** - लिटः कानच् क्वसुश्च वा स्तः।

**सूत्रव्याख्या** - उभयमपि विधिसूत्रमिदम्। लिटः (६/१) कानच् (१/१) वा (अव्ययम्) इति प्रथमसूत्रगतपदच्छेदः। क्वसुः (१/१) च (अव्ययम्) इति द्वितीयसूत्रगतपदच्छेदः। द्वितीयसूत्रे लिटः कानच् वा इत्यतः लिटः वा इति पदे अनुवर्तेते। लिटः स्थाने कानच् -आदेशो विकल्पने भवति इति **प्रथमसूत्रार्थः**। लिटः स्थाने क्वसु इत्यादेशोऽपि विकल्पेन भवति इति **द्वितीयसूत्रार्थः**। लिटः स्थाने

कानच् क्वसुश्च इत्यादेशौ विकल्पेन भवतः इति सम्मिलितार्थो भवति। आभ्यां सूत्राभ्यां पूर्वं छन्दसि लिट् (३.२.१०५) इति सूत्रमस्ति। तस्यार्थः वेदे भूतसामान्ये लिट्प्रत्ययो भवति इति। अस्यैव वैदिकलिटः स्थाने ताभ्याम् सूत्राभ्यां विधीयमानौ आदेशौ भवतः। अनयोः प्रत्यययोः वेदे एव प्रयोगो भवति इति पाणिनिः कात्यायनः पतञ्जलिः चेति मुनित्रयस्य मतम्। लोके यद्यपि क्वसुप्रत्ययान्तपदस्य प्रयोगो दृश्यते। यथा कालिदासः रघुवंशे लिखति - तं **तस्थिवांसम्**, श्रेयांसि सर्वाण्यधि**जग्मुष**स्ते इत्यादि। कानच्प्रत्ययस्य तङानावात्मनेपदम् इत्यनेन आत्मनेपदसंज्ञा भवति। कानचः ककारचकारौ इतौ। अतः तयोर्लोपे आन इत्येव शिष्यते। चित्करणं चितः इति अन्तोदात्तस्वरार्थम्, कित्करणं गुणवृद्धिनिषेधाद्यर्थम्। क्वसु इत्यत्र उकारककारौ इत्संज्ञकौ भवतः। अतः वस् -मात्रं शिष्यते। उकारानुबन्धः उगित्कार्यार्थम्, कित्प्रयोजनम् तु उक्तमेवास्ति।लिट्प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकोऽस्ति। अतः स्थानिवद्भावेन तयोः कानच् -क्वसुप्रत्यययोः कृत्संज्ञा सिध्यति। पुनः क्वसुकानचौ यद्यपि आदेशौ तथापि स्थानिवद्भावेन प्रत्ययत्वमुभयोः अस्त्येव। अतः बहुत्र कानच्प्रत्ययः, क्वसुप्रत्ययः इति व्यवहारः अस्ति। कानच्प्रत्ययः तङानावात्मनेपदम् इत्यनेन आत्मनेपदसंज्ञको भवति। अतः अनुदात्तङित आत्मनेपदम्, स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यादिसूत्रैः येभ्यो धातुभ्य आत्मनेपदं विधीयते तेभ्य एव विहितस्य लिटः स्थाने क्वसुकानचौ आदेशौ भवतः। क्वसु इत्यादेशस्तु लः परस्मैपदम् इति लादेशो भवति। अतः परस्मैपदसंज्ञकः। तस्मात् परस्मैपदिधातुस्थले एवायमादेशः भवति न तु आत्मनेपदिधातुस्थले।

**उदाहरणम् -** चक्राणः। तस्थिवांसम्।

**सूत्रार्थसमन्वयः -**

**कानचः** उदाहरणम् - चक्राणः। अत्र करणार्थकात् कृधातोः कर्तृत्वविवक्षायां भूतसामान्ये छन्दसि लिट् इति लिट्प्रत्ययः। पुनः क्रियाफलस्य कर्तृगामित्वे लिटः कानज्वा इत्यनेन लिटः स्थाने आत्मनेपदसंज्ञककानजादेशे अनुबन्धलोपे कृ आन इति जायते। ततः लिडादेशस्य कानचः स्थानिवद्भावेन लिड्वद्भावे लिटि धातोरनभ्यासस्य इत्यनेन द्वित्वे उरत् इति अत्त्वे उरण् रपरः इति रपरत्वे हलादिशेषे कुहोश्चुः इति अभ्यासस्य ककारस्य चकारादेशे चकृ आन इति जाते आनः आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन गुणे प्राप्ते कानचः कित्त्वात् क्ङिति च इति गुणनिषेधो भवति। ततः इको यणचि इत्यनेन यणि रेफे अट्कुप्वाङ्नुम्व्यवायेऽपि इति नस्य णत्वे चक्राणः इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये चक्राणः इति रूपं सिध्यति। वेदे प्रयोगो यथा - अग्निर्भुवद् रयिपतो रयीणां सत्रा चक्राणो अमृतानि विश्वा (ऋग्वेदः सं. १.७२.१)।

कानच् विकल्पने भवति इत्यतः क्वचित् तिङपि श्रूयते यथा अहं सूर्यमुभयतो ददर्श (यजुः. ८.९)। अत्र भूतसामान्ये लिट्।

**क्वसोः** उदाहरणम् - जगन्वान्।

गमॢ गतौ (भ्वादि.प.अनिट्) इति धातोः कर्तृत्वविवक्षायां भूतसामान्ये छन्दसि लिट् इति लिटि क्वसुश्च इति लिटः स्थाने क्वसु -आदेशे अनुबन्धलोपे गम् वस् इति जायते। ततः लिडादेशस्य क्वसोः

स्थानिवद्भावेन लिड्वद्भावे लिटि धातोरनभ्यासस्य इत्यनेन द्वित्वे द्वित्वस्य पूर्वभागस्य अभ्याससंज्ञायां हलादिशेषे कुहोश्चुः इति अभ्यासस्य गकारस्य स्थाने जकारादेशे जगम् वस् इति जायते। ततः क्वसोः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन प्राप्तस्य इडागमस्य नेड्वशि कृति इत्यनेन निषेधो भवति। तथापि क्रादिनियमेन इडागमः प्राप्त एवास्ति। ततः वस्वेकाजाद्घसाम् इत्यनेन पुनः इण्निषेधे विभाषा गन -हन -विद -विशाम् इत्यनेन विकल्पेन इडागमो भवत्येव। इट्पक्षे - गमहनजनखनघसां लोपः क्ङित्यनङि इत्यनेन उपधालोपे जग् मिवस् इति जायते। इडभावपक्षे च जगम् वस् इति स्थिते सूत्रमिदमारभ्यते -

{सूत्रम्. **वस्वेकाजाद्घसाम्** (७.२.६७) = कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट्, नान्येषाम्।}

{सूत्रम्. **विभाषा गनहनविदविशाम्** (७.२.६८) = गम् -हन् -विद् -विश् -धातुभ्यः वसोरिड्वा।}

{सूत्रम्. **गमहनजनखनघसां लोपः क्ङित्यनङि** (६.४.९८) = गमहनजनखनघसामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि।}

## [२८.३] म्वोश्च॥ (८.२.६५)

**सूत्रार्थः** - मान्तस्य धातोर्नत्वं म्वोः परतः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण नकारादेशो विधीयते। म्वोः (७/२) च (अव्ययपदम्) इति सूत्रगतपदच्छेदः। मो नो धातोः इति सूत्रमधिकृतम्। तस्य च सूत्रस्य मः (६/१) नः (१/१) धातोः (६/१) इति पदच्छेदः। म् च व् च म्वौ तयोः म्वोः इति इतरेतरयोगद्वन्द्वः। मः इति धातोः विशेषणम् अतः विशेषणत्वात् तदन्तविधौ मान्तस्य धातोः इत्यर्थो भवति। सूत्रार्थस्तावत् - मकारे वकारे वा परतः मान्तस्य धातोः स्थाने न् इत्यादेशो भवति। मो नो धातोः इति सूत्रेण मान्तस्य धातोः स्थाने नत्वं विधीयते पदान्ते। किन्तु मकारे वकारे वा परतः अपि नकारादेशविधानार्थं म्वोश्च इति सूत्रे चकारपदप्रयोगः। अलोऽन्त्यस्य इति परिभाषया अयं नकारादेशः अन्त्यस्यैव अलः स्थाने अर्थात् मकारस्य स्थाने भवति।

**उदाहरणम्** - जगन्वान्।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण जगम् वस् इत्यत्र वसः वकारः मकारात् परे अस्ति। अतः प्रकृतसूत्रेण जगम् इति मकारान्तस्य धातोः अन्त्यस्य मकारस्य स्थाने नकारादेशे जगन्वस् इति जायते। एवञ्च जग्मिवस्, जगन्वस् इति उभयोः समुदाययोः कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुप्रत्यये मिदचोऽन्त्यात्परः इति परिभाषसहयोगेन उगिदचां सर्वनामस्थाने इति नुमागमे सान्तमहतः संयोगस्य इत्यनेन उपधाया दीर्घे जग्मिवान् स् स्, जगन्वान् स् स् इति जाते हल्ङ्यादिलोपे संयोगान्तस्य लोपः इत्यनेन संयोगान्तस्य सकारस्य लोपे जग्मिवान्, जगन्वान् इति रूपद्वयम् सिध्यति।



{सूत्रम्. **सान्तमहतः संयोगस्य** (६.४.१०) = सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने।}

सम्प्रति **शतृशानचोः** प्रकरणमारभ्यते -

## [२८.४] लटः शतृशानचावप्रथमासमानाधिकरणे॥ (३.२.१२४)

**सूत्रार्थः** - अप्रथमान्तेन समानाधिकरणे लट शतृशानचौ वा स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण शतृशानचौ प्रत्ययौ विधीयेते। लटः (६/१) शतृशानचौ (१/२) अप्रथमासमानाधिकरणे (७/१) इति सूत्रगतपदच्छेदः। शता च शानच् च शतृशानचौ इति इतरेतरयोगद्वन्द्वः। न प्रथमा अप्रथमा इति नञ्तत्पुरुषः, पर्युदासप्रतिषेधः। सु औ जस् इत्येतेषां प्रत्ययानां प्रथमासंज्ञा इति वैयाकरणसम्प्रदाये प्रसिद्धास्ति। प्रत्ययग्रहणे तदन्ता ग्राह्याः इति परिभाषानुसारं प्रथमा इत्यनेन प्रथमान्तस्य ग्रहणम्। समानम् अधिकरणं यस्य स समानाधिकरणः। अप्रथमया (अप्रथमान्तेन द्वितीयान्तादिना) समानाधिकरणः अप्रथमासमानाधिकरणः तस्मिन् अप्रथमासमानाधिकरणे (लटि सति) इति तृतीयातत्पुरुषः, भावे सप्तमी। सूत्रार्थः - अप्रथमासमानाधिकरणे वाच्ये सति लटः स्थाने शतृशानचौ आदेशौ भवतः। द्वितीयान्तादिपदं यस्य अर्थस्य (कर्तुः कर्मणः वा) वाचकं भवति, धातुभ्यः विहितः लट् अपि यदि तस्यैव वाचको भवति तर्हि लट् अप्रथमासमानाधिकरणो भवति। तदा लटः स्थाने शतृशानचौ आदेशौ भवतः इति तात्पर्यम्। यथा - पचन्तं चैत्रं पश्य इत्युदाहरणे चैत्रम् इति द्वितीयान्तम् (अप्रथमान्तम्) पदं यस्य अधिकरणस्य वाचकः, पच्धातोः वर्तमानकाले विहितः लट् अपि तस्यैव वाचकः अतः लट् अप्रथमान्तेन सह समानाधिकरणः। अतः प्रकृतसूत्रेण लटः स्थाने शतृशानचौ आदेशौ भवतः। लटः स्थाने विधीयमानयोः शतृशानचोः कृत्संज्ञा प्रत्ययंसज्ञा च भवति। शतृप्रत्ययस्य ऋकारस्य उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञा, शकारस्य तु लशक्वतद्धिते इत्यनेन। अतः अत् -मात्रं शिष्यते। अत्र ऋकारस्य इत्संज्ञाकरणम् उगित्कार्यार्थम्। शानचः शकारस्य लशक्वतद्धिते इत्यनेन इत्संज्ञा भवति, चकारस्य तु हलन्त्यम् इत्यनेन। अत्र चित्करणं चितः इति अन्तोदात्तस्वरार्थम्। तेन आन इत्येव शिष्यते। शतृप्रत्ययः लः परस्मैदम् इत्यनेन परस्मैपदसंज्ञको भवति, शानचः तङानावात्मनेपदम् इत्यनेन आत्मनेपदसंज्ञा च भवति। एवञ्च परस्मैपदिधातुभ्यः शतृप्रत्ययः, आत्मनेपदिधातुभ्यः शानच् भवति। उभौ अपि प्रत्ययौ शितौ अतः तिङ्शित्सार्वधातुकम् इत्यनेन सार्वधातुकसंज्ञकौ भवतः। अतः तयोः प्रत्यययोः परतः कर्तृवाच्यविवक्षायां धातोः कर्तरि शप् इति शप्, दिवादिभ्यः श्यन् इति श्यन् इत्यादयः विकरणप्रत्यया भवन्ति। किञ्च कर्मवाच्ये धातोः सार्वधातुके यक् इति यक् -विकरणप्रत्ययो भवति। शतृप्रत्ययः कर्तरि एव भवति। शानच् तु कर्तरि कर्मणि च भवति।

**उदाहरणम्** - (शतृप्रत्यये) पचन्तम् चैत्रं पश्य। (शानच्प्रत्यये) पचमानम् चैत्रं पश्य।

**सूत्रार्थसमन्वयः -**

**(शतृप्रत्यये) पचन्तं चैत्रं पश्य। (चैत्रः पचति। तम् पश्य।)**

डुपचष् पाके (भ्वादि. उभय. अनिट्) इति धातोः कर्तृवाच्ये वर्तमाने लट् इति लटि अनुबन्धलोपे पच् ल् इति जायते। अत्र लटः वाच्यः स एव यः चैत्रम् इति अप्रथमान्तेन द्वितीयान्तेन वाच्यः। अतः अप्रथमान्तसमानाधिकरणस्य लटः स्थाने प्रकृतसूत्रेण शतृ इत्यादेशे अनुबन्धलोपे पच् अत् इति जाते शतृप्रत्ययस्य सार्वधातुकत्वात् कर्तरि शप् इति शपि अनुबन्धलोपे पच् अ अत् इति जाते अतो गुणे इति पररूपैकादेशे पचत् इति समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां कर्मत्वविवक्षायां अम् -विभक्तौ पचत् अम् इति जायते। ततः उगिदचां सर्वनामस्थानेऽधातोः इति नुमागमे अनुबन्धलोपे अपदान्तनकारस्य अनुस्वारे अनुस्वारस्य परसवर्णे पचन्तम् इति शतृप्रत्ययान्तम् रूपं सिध्यति। एवम् अन्यत्रापि।

**(शानच्प्रत्यये) पचमानम् चैत्रं पश्य। (चैत्रः पचते। तम् पश्य।)**

डुपचष् पाके (भ्वादि. उभय. अनिट्) इति धातोः कर्तृवाच्ये वर्तमाने लट् इति लटि अनुबन्धलोपे पच् ल् इति जायते। अत्र लटः वाच्यः स एव यः चैत्रम् इति अप्रथमान्तेन द्वितीयान्तेन वाच्यः। अतः अप्रथमान्तसमानाधिकरणस्य लटः स्थाने प्रकृतसूत्रेण आत्मनेपदसंज्ञकः शानच्प्रत्ययः भवति। शतृप्रत्ययस्तु न भवति यतो हि डुपचष् पाके इति धातुः स्वरितेत् अस्ति। अतः क्रियाफलस्य कर्तृगामित्वे स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन पच्धातोः आत्मनेपदं भवति। ततश्च स आत्मनेपदी भवति। शानचः शित्त्वात् सार्वधातुकसंज्ञायां कर्तरि शप् इति शपि पच् अ आन = पच आन इति जाते अग्रिमसूत्रमारभ्यते -

## [२८.५] आने मुक्॥ (७.२.८२)

**सूत्रार्थः** - अदन्ताङ्गस्य मुगागमः स्यादाने परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण मुगागमो विधीयते। आने (७/१) मुक् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। अतो येयः इत्यतः अनुवृत्तस्य अतः इति पञ्चम्यन्तस्य अतः इति षष्ठ्यन्ततया विपरिणामो भवति। अङ्गस्य (६/१) इत्यधिकृतम्। अतः इति अङ्गस्य इत्यस्य विशेषणमस्ति तस्मात् तदन्तविधौ अदन्तस्य अङ्गस्य इत्यर्थलाभः। सूत्रार्थो हि अदन्तस्य अङ्गस्य मुक् -आगमो भवति आने परतः। मुकः ककारः इत्संज्ञकः हलन्त्यम् इत्यनेन, उकारश्च उच्चारणार्थः। मुगागमस्य कित्त्वात् आद्यन्तौ टकितौ इत्यनेन अदन्ताङ्गस्य अन्त्यावयवो भवति।

**उदाहरणम्** - पचमानं चैत्रं पश्य।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण पच आन इति स्थिते अदन्ताङ्गस्य पच इत्यस्य मुगागमे अनुबन्धलोपे कित्त्वात् आद्यन्तौ टकितौ इति परिभाषया अदन्ताङ्गस्य अन्त्यावयवे पचम् आन इति जाते पचमान इति समुदायो भवति। अस्य च समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां द्वितीयैकवचनविवक्षायाम् अमि अमि पूर्वः इति पूर्वरूपैकादेशे पचमानम् इति रूपं सिध्यति।

**अत्र विशेषः** - शतृप्रत्ययः कर्तृवाच्ये एव भवति। कर्तृवाच्ये शानजपि भवति। किन्तु कर्मवाच्ये भावकर्मणोः इति आत्मनेपदविधानात् शानच्प्रत्यय एव भवति न तु शतृप्रत्ययः। यथा पीडयन्तम् इति कर्तृवाच्यत्वात् शतृप्रत्ययः। पीड्यमानम् इत्यत्र कर्मवाच्यत्वात् शानच्प्रत्यये यक् -विकरणम् भवति कर्तृवाच्ये शानचः उदाहरणम् उक्तमेवास्ति। क्वचित् प्रथमा -सामानाधिकरण्येऽपि शतृशानच्प्रत्ययौ भवतः लटः शतृशानचावप्रथमासमानाधिकरणे इति सूत्रे लडिति अनुवर्तमाने पुनः लटः इति ग्रहणात्। तेन अस्ति द्विजः इत्यत्र शतृप्रत्यये सन् द्विजः इति प्रयोगः। विद्यते ब्राह्मणः इत्यत्र शानच्प्रत्यये विद्यमानः ब्राह्मणः इति प्रयोगः।

अदादिगणीयात् परस्मैपदिनः विद ज्ञाने इति धातोः कर्तृवाच्ये विहितस्य लटः स्थाने शतृप्रत्यये अनुबन्धलोपे विद् अत् इति जाते शतृप्रत्ययस्य सार्वधातुकत्वात् कर्तरि शप् इति शपि अदिप्रभृतिभ्यः शपः इत्यनेन शपो लुकि विद् अत् इति स्थिते सूत्रमिदमारभ्यते -

## [२८.६] विदेः शतुर्वसुः॥ (७.१.३६)

**सूत्रार्थः** - वेत्तेः परस्य शतुर्वसुरादेशो वा।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकमस्ति। अनेन सूत्रेण वसु इत्यादेशो विधीयते। विदेः (५/१) शतुः (६/१) वसुः (१/१) इति सूत्रगतपदच्छेदः। तुह्योस्तातङाशिष्यन्यतरस्याम् इत्यतः अन्यतरस्याम् (७/१) इत्यव्ययम् अनुवर्तते। धातुनिर्देशाय अदादिगणीय -विद् -धातोः इक्श्तिपौ धातुनिर्देशे इत्यनेन इक्प्रत्यये विदिः इति प्रथमैकवचनान्तम्, तस्मात् विदेः इति पञ्चम्येकवचनान्तम्। सूत्रार्थो हि विद्धातोः विहितस्य लटः स्थाने जायमानस्य शतृप्रत्ययस्य स्थाने वसु इत्यादेशो विकल्पेन भवति। वसोः उकारः इत्संज्ञकः अनुनासिकत्वात्। अत्र सूत्रे अदादिगणीयः विद् -धातुरेव गृह्यते। वसोः अनेकालत्वात् अनेकाल्शित्सर्वस्य इति परिभाषया सर्वादेशो भवति।

**उदाहरणम्** - विदन्। विद्वान्।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण विद् अत् इति जाते प्रकृतसूत्रेण (शतुः) अतः स्थाने वसु इति सर्वादेशे अनुबन्धलोपे विद्वस् इति समुदायो भवति। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सौ नुमि दीर्घे सुलोपादिकार्ये विद्वान् इति रूपं सिध्यति।

स्त्रीलिङ्गे विद्वस् इति शब्दात् उगितश्च इत्यनेन ङीपि वसोः सम्प्रसारणम् इत्यनेन वसः वकारस्य सम्प्रसारणे उकारे षत्वे विदुषी इति जायते। अस्मात् च ङ्याबन्तात् सुविभक्तौ सोः हल्ङ्यादिलोपे विदुषी इति रूपं जायते।

वसु इत्यादेशाभावपक्षे शपो लुकि विदत् इति समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सौ नुमि सुलोपादिकार्ये विदन् इति रूपं सिध्यति।

शतृप्रत्ययाभावपक्षे वेत्ति इति तिङन्तपदप्रयोगो भवति।

अधुना शतृशानचोः सत्संज्ञाविधायकसूत्रम् प्रारभ्यते -

## [२८.७] तौ सत्॥ (३.२.१२७)

**सूत्रार्थः** - तौ शतृशानचौ सत्संज्ञौ स्तः।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण सत्संज्ञा विधीयते। तौ (१/२) सत् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। लटः शतृशानचावप्रथमासमानाधिकरणे इति पूर्वसूत्रोक्तस्य शतृशानचौ इत्यस्य स्वरूपनिर्देशाय तौ इति पदम् अस्मिन् सूत्रे उपात्तम्। यद्यपि अनवृत्त्या शतृशानचौ इत्यस्य लाभो भवति परन्तु तौ -ग्रहणम् उपाधिरहितस्य शुद्धस्य शतृशानचौ इत्यस्य ग्रहणार्थम्। अन्यथा वर्तमानकालिकलडादेशयोः शतृशानचोः सत्संज्ञा स्यात्, भविष्यतकालिकडादेशयोः शतृशानचोः सत्संज्ञा न स्यात्। सूत्रार्थस्तावत् - तौ शतृशानचौ सत्संज्ञौ स्तः इति। सत्संज्ञायाः प्रयोजनं पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन, लृटः सद्वा इत्यादिषु सूत्रेषु ज्ञास्यते।

लृटः स्थानेऽपि शतृशानचोः आदेशयोः विधानार्थमिदं सूत्रमारभ्यते -

## [२८.८] लृटः सद्वा॥ (३.३.१४)

**सूत्रार्थः** - लृटः स्थाने विकल्पेन सत्संज्ञकौ शतृशानचौ भवतः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम् भवति। अनेन सूत्रेण विकल्पेन शतृशानचौ विधीयेते। लृटः (६/१) सद् (१/१) वा (अव्ययम्) इति सूत्रगतपदच्छेदः। लटः शतृशानचावप्रथमासमानाधिकरणे इति पूर्वसूत्रेण वर्तमानकाले लटः स्थाने शतृशानचोर्विधानं कृतम्। अत्र तु भविष्यत्काले लृटः स्थाने शतृशानचोर्विधानम् क्रियते।

**उदाहरणम्** - करिष्यन्तम् करिष्यमाणम् वा देवदत्तम् पश्य।

**सूत्रार्थसमन्वयः** - अत्र कृधातोः कर्तृत्वविवक्षायां भविष्यत्सामान्ये लृट् शेषे च इत्यनेन लृटि स्यतासी लृलुटोः इत्यनेन स्यप्रत्यये तस्य च आर्धधातुकसंज्ञायां ऋद्धनोः स्ये इत्यनेन इडागमे सार्वधातुकार्धधातुकयोः इत्यनेन गुणे आदेशप्रत्यययोः इत्यनेन षत्वे करिष्य ल् इति जायते। ततः प्रकृतसूत्रेण लृटः स्थाने शतृप्रत्यये अनुबन्धलोपे करिष्य अत् इति जाते अतो गुणे इति पररूपैकादेशे करिष्यत् इति समुदायो भवति। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां द्वितीयैकवचने अमि उगिदचां सर्वनामस्थानेऽधातोः इत्यनेन नुमि नकारस्य अनुस्वारे अनुस्वारस्य परसवर्णे करिष्यन्तम् इति रूपं सिध्यति। कृधातुः ञित्त्वात् उभयपदी। अतः क्रियाफलस्य कर्तृगामित्वे कृधातोः विहितस्य लृटः स्थाने शतृ न भवति अपि तु आत्मनेपदसंज्ञकः शानजादेशः। ततः आने मुक् इति मुकि नकारस्य णत्वे करिष्यमाणम् इत्यपि रूपम्।

{सूत्रम्. **ऋद्धनोः स्ये** (७.२.७०) = ऋतः हन्तेश्च स्यस्य इट् स्यात्।}

## पाठगतप्रश्नाः -१

१. कानच्प्रत्ययान्तस्य उदाहरणम् लिखत।

२. क्वसुप्रत्ययान्तस्य उदाहरणम् लिखत।

३. कानच्क्वसुप्रत्ययौ छान्दसौ न वा।

४. म्वोश्च इत्यस्य कोऽर्थः।

५. लटः स्थाने शतृशानच्प्रत्ययविधायकसूत्रम् किम्।

६. पचमानम् इत्यत्र मुगागमः केन।

७. शतृप्रत्ययः परस्मैपदात्मनेपदस्थलयोः कुत्र भवति।

८. शानच्प्रत्ययः परस्मैपदात्मनेपदस्थलयोः कुत्र भवति।

९. विदेः शतुर्वसुः इत्यस्य उदाहरणम् किम्।

१०. कौ सत्संज्ञौ।

११. लृटः स्थाने विकल्पेन सत्संज्ञकौ शतृशानचौ केन विधीयते।

१२. कर्मणि शतृप्रत्ययो भवति किम्।

१३. कर्मणि शानच् भवति किम्।

---

अधुना ताच्छीलिककृत्प्रत्ययविधायकसूत्रमारभ्यते -

## [२८.९] तृन्॥ (३.२.१३६)

**सूत्रार्थः** - तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु धातोः तृन् प्रत्ययो भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम् एकपदात्मकम्। अनेन सूत्रेण तृन्प्रत्ययो विधीयते। तृन् इति प्रथमैकवचनान्तम्। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। कृदतिङ् कर्तरि कृत् इत्युभयमपि सूत्रम् अधिक्रियते। आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु इति सूत्रमधिक्रियते। तेन तच्छीलतद्धर्मतत्साधुकारिषु इति सप्तमीबहुवचनान्तम् पदम् लब्धम्। स (धात्वर्थः) शीलं = स्वभावो यस्य स तच्छीलः। स (धात्वर्थो) धर्मः = आचारो = कुलाचारो यस्य स तद्धर्मा। साधु (सम्यक्प्रकारेण) करोति इति साधुकारी। तस्य (धात्वर्थस्य) साधुकारी तत्साधुकारी। तच्छीलः च तद्धर्मा च तत्साधुकारी च तेषामितरेतरयोगद्वन्द्वः तच्छीलतद्धर्मतत्साधुकारिणः तेषु तच्छीलतद्धर्मतत्साधुकारिषु। तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु धातोः कृत्संज्ञकः तृन् प्रत्ययः परो भवति इति सूत्रार्थः। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति। तृनः नकारः हलन्त्यम् इत्यनेन इत्संज्ञकः। अतः तृ इत्येव शिष्यते। नकारानुबन्धः आद्युदात्तस्वरार्थम्। तृच् इत्यत्रापि तृ इत्येव शिष्यते। अतः तृन् तृच् इत्युभयत्र समानरूपत्वेऽपि स्वरे भेदः अस्ति एव।



**उदाहरणम् -** कर्ता कटान्।

**सूत्रार्थसमन्वयः -** कृधातोः तच्छीलकर्तृवाच्ये आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु इत्यधिकारे पठितेन तृन् इति योगेन तृन्प्रत्यये अनुबन्धलोपे कृ तृ इति जाते आर्धधातुकं शेषः इत्यनेन तृ इत्यस्य आर्धधातुकसंज्ञायां सार्वधातुकार्धधातुकयोः इत्यनेन गुणे अकारे उरण् रपरः इत्यनेन रपरत्वे कर् तृ इति जायते। तृनः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इति तन्निषेधः। ततः कर्तृ इति समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुप्रत्यये ऋदुशनस्पुरुदंसोनेहसां च इत्यनेन अनङि अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् इत्यनेन उपधादीर्घे हल्ङ्यादिलोपे न लोपः प्रातिपदिकान्तस्य इत्यनेन पदान्तस्य नकारस्य लोपे कर्ता इति रूपं सिध्यति। तृन्नन्तकृदन्तशब्दयोगेन कर्तृकर्मणोः कृति इति प्राप्ता षष्ठी न लोकाव्ययनिष्ठाखलर्थतृनाम् इति निषेधे कर्मणि द्वितीया इत्यनेन कटशब्दात् द्वितीयाविभक्तिर्भवति।

**तृजन्ततृन्नन्तयोः विशेषः -**

कर्ता कटानाम् इति वाक्ये कर्तृशब्दः तृजन्तः। कर्ता कटान् इति वाक्ये कर्तृशब्दः तृन्नन्तः। तृजन्तः सामान्यकर्तृवाचकः, तृन्नन्तस्तु तच्छीलादिकर्तुः वाचकः। तृजन्तशब्दयोगेन कर्मणि षष्ठी। तृन्नन्तशब्दयोगेन कर्मणि द्वितीया। स्वरे भेदोऽपि अस्ति इति तु उक्तमेवास्ति।

## [२८.१०] सनाशंसभिक्ष उः॥ (३.२.१६८)

**सूत्रार्थः -** सनाशंसभिक्ष उप्रत्ययो भवति।

**सूत्रव्याख्या -** विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण उप्रत्ययः विधीयते। सनाशंसभिक्षः (५/१) उः (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु इत्यधिकार आयाति। तेन तच्छीलतद्धर्मतत्साधुकारिषु इति सप्तमीबहुवचनान्तम् पदम् लब्धम्। सन् च आशंसश्च भिक्ष् च तेषां समाहारद्वन्द्वे सनाशंसभिक्ष्, तस्मात् सनाशंसभिक्षः। आशंस इत्यत्र अन्त्यः अकारः उच्चारणार्थः। अत्र सन् इति धातोः न ग्रहणम् अपि तु प्रत्ययस्य ग्रहणम्। ततः प्रत्ययग्रहणे तदन्ता ग्राह्याः इति नियमेन सन्प्रत्ययान्तस्य चिकीर्ष इत्यादिधातोः ग्रहणम्। आशंस् इत्यनेन आङ्पूर्वकात् शसि इच्छायाम् इति धातोः ग्रहणमभीष्टमस्ति। सूत्रार्थस्तावत् सन्प्रत्ययान्तधातोः आङ्पूर्वकशसिधातोः भिक्ष् -धातोः च तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु कृत्संज्ञकः उप्रत्ययो भवति। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति।

**उदाहरणम् -** चिकीर्षुः। आशंसुः। भिक्षुः।

**सूत्रार्थसमन्वयः -** चिकीर्षुः - कृधातोः सनि प्रक्रियया चिकीर्ष इति जाते तच्छीलादिकर्तृवाच्ये प्रकृतसूत्रेण उप्रत्यये उकारस्य आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायाम् अतो लोपः इत्यनेन षकारोत्तरवर्तिनः अकारस्य लोपे चिकीर्षु इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां विभक्तिकार्ये चिकीर्षुः इति रूपं सिध्यति।

आङ्पूर्वकात् शसि इच्छायाम् इति धातोः इदित्त्वात् नुमि अपदान्तनकारस्य अनुस्वारादेशे आशंस् इति धातोः तच्छीलादिकर्तृवाच्ये प्रकृतसूत्रेण उप्रत्यये कृदन्तत्वात् प्रातिपदिकसंज्ञायाम् स्वादिकार्ये आशंसुः इति रूपं सिध्यति।

एवमेव भिक्ष भिक्षायामलाभे लाभे च इति धातोः प्रकृतसूत्रेण उप्रत्यये कृदन्तत्वात् प्रातिपदिकादिकार्ये भिक्षुः इति रूपं सिध्यति।

पृच्छति तच्छीलः इति प्राट्। प्रच्छधातोः क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च इति वार्तिकेन क्विपि धातोः अकारस्य च दीर्घे क्विपः सर्वापहारलोपे प्राच्छ् इति जाते प्राप्तस्य सम्प्रसारणस्य ग्रहिज्यादिसूत्रेण निषेधे अग्रिमसूत्रमारभ्यते -

## [२८.११] च्छ्वोः शूडनुनासिके च॥ (६.४.१९)

**सूत्रार्थः** - सतुक्कस्य छस्य वस्य च क्रामात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदचतुष्टयात्मकम्। अनेन सूत्रेण श् -ऊठ् इत्यादेशौ विधीयते। च्छ्वोः (६/२) शूड् (१/१) अनुनासिके (७/१) च (अव्ययम्) इति सूत्रगतपदच्छेदः। अङ्गस्य (६.१) इत्यधिक्रियते। अनुनासिकस्य क्विझलोः क्ङिति इत्यतः क्विझलोः (७/२), क्ङिति (७/१) इति पदद्वयमनुवर्तते। अङ्गस्य इत्यधिकृतम्। च्छ् च व् च् च्छ्वौ तयोः च्छ्वोः इति इतरेतरयोगद्वन्द्वः। च्छ् इति तुक् + छ् इत्यनयोः बोधकः। श् च ऊठ् च तयोः समाहारः शूड् इति समाहारद्वन्द्वः। अङ्गस्य इत्यधिकारबलात् प्रत्यये इति पदमाक्षिप्तं भवति। आक्षिप्तस्य प्रत्यये इत्यस्य विशेषणमस्ति अनुनासिके इति। अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ अनुनासिकादौ प्रत्यये इत्यर्थलाभः। क्विश्च झल् च् क्विझलौ तयोः क्विझलोः इति इतरेतरयोगद्वन्द्वः। अत्र झलि इत्यंशस्य क्ङिति इत्यंशेन सह सम्बन्धः। ततः तदादिविधौ झलादौ क्ङिति इत्यर्थलाभः। अनुनासिकादौ प्रत्यये परतः अथवा क्वौ परतः अथवा झलादौ क्ङिति प्रत्यये परतः च्छस्य स्थाने श् इत्यादेशो भवति। वकारस्य स्थाने च ऊठ् इत्यादेशो भवति इति सूत्रस्य सम्पूर्णार्थः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण प्राच्छ् इत्यत्र क्विप्प्रत्ययस्य सर्वापहारलोपे जातेऽपि प्रत्ययलक्षणेन तस्य लाभात् क्विप्प्रत्यये परतः प्रकृतसूत्रेण च्छ् इत्यस्य स्थाने **शकारादेशे** प्राश् इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां प्रथमैकवचने सुप्रत्यये हल्ङ्यादिलोपे व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः इत्यनेन शकारस्य षकारे झलां जशोऽन्ते इत्यनेन षकारस्य डकारे वावसाने इति विकल्पेन चर्त्वे टकारे प्राट्, प्राड् इति रूपद्वयम् भवति। इति **क्वौ** परतः उदाहरणम्।

विच्छ् -धातोः यज -याच -यत -विच्छ -प्रच्छ -रक्षो नङ् इत्यनेन नङ्प्रत्ययो भवति। स च अनुनासिकादिप्रत्ययः विच्छधातोः परोऽपि अस्ति। अतः च्छस्य स्थाने शकारादेशो भवति। तेन विश् न इति जाते कृदन्तत्वात् प्रातिपदिकसंज्ञायाम् स्वादिकार्ये च विश्नः इति रूपं सिध्यति। प्रश्नादीनाम् कृदन्तानाम् सविस्तरम् प्रक्रिया उत्तरकृदन्ते ज्ञास्यते। इति **अनुनासिकादिप्रत्यये** परत उदाहरणम्।

प्रच्छधातोः कर्मणि निष्ठाक्तप्रत्यये ग्रहिज्यादिसूत्रेण सम्प्रसारणे सम्प्रसारणाच्च इत्यनेन पूर्वरूपैकादेशे पृच्छ् त इति जायते। अत्र झलादिकित्प्रत्ययः परोऽस्ति अतः प्रकृतसूत्रेण च्छ् इत्यस्य स्थाने शकारादेशे पृश् त इति जाते व्रश्चभ्रस्जादिसूत्रेण शकारस्य षकारे ष्टुना ष्टुः इत्यनेन तकारस्य टकारे पृष्ट इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां विशेष्यनिघ्नात् सामान्ये नपुंसकम् इति नियमेन नपुंसके वर्तमानात् ततः सौ सोरमि पूर्वरूपे पृष्टम् इति रूपं सिध्यति इति **झलादिकित्प्रत्यये** परतः उदाहरणम्।

सिव् -धातोः बाहुलकात् औणादिके नप्रत्यये सिव् न इति जायते। अत्र अनुनासिकादिप्रत्ययः परोऽस्ति। अतः प्रकृतसूत्रेण धातोः वकारस्य स्थाने **ऊठ्** इत्यादेशे यणि स्यू न इति जाते नप्रत्ययस्य आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन ऊकारस्य गुणे ओकारे वर्णसम्मेलने स्योन इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां स्वादिकार्ये स्योनः इति रूपं सिध्यति।

## [२८.१२] दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे॥ (३.२.१८२)

**सूत्रार्थः** - दाबादेः ष्ट्रन् स्यात्करणेऽर्थे।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण ष्ट्रन्प्रत्ययो विधीयते। दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः (५/१) करणे (७/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। दाप् च नीश्च शसश्च युश्च युजश्च स्तुश्च तुदश्च सिश्च सिचश्च मिहश्च पतश्च दशश्च नह् च तेषां समाहारद्वन्द्वे दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनह् तस्मात् दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः। धः कर्मणि ष्ट्रन् इत्यतः ष्ट्रन् (१/१) इत्यस्य अनुवृत्तिर्भवति। शस, युज, तुद, सिच, मिह, पत, दश इत्येतेषु अकार उच्चारणार्थः। दाप् + नी इत्यत्र पकारस्य जश्त्वे बकारे यरोऽनुनासिकेऽनुनासिको वा इति अनुनासिकमकारे दाम्नी इति निर्देशो भवति। दाप्, नी, शस्, यु, युज्, स्तु, तुद्, सि, सिच्, मिह्, पत्, दश्, नह् इति त्रयोदशभ्यः धातुभ्यः ष्ट्रन्प्रत्ययः परो भवति करणार्थे इति सूत्रार्थः। क्रियासिद्धौ प्रकृष्टोपकारकम् करणम् भवति। अस्य विवरणं कारकप्रकरणकपाठेषु प्राप्स्यते। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति। स च प्रत्ययः प्रकृतसूत्रेण करणे विधीयते। ष्ट्रन्प्रत्ययस्य नकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा, षकारस्य तु षः प्रत्ययस्य इत्यनेन। निमित्तस्य षकारस्य अपाये नैमित्तिकस्य टकारस्यापि अपायो भवति, निमित्तापाये नैमित्तिकस्याप्यपायः इति परिभाषाबलात्। एवञ्च ष्ट्रनः त्र -मात्रमवशिष्यते। ष्ट्रनः नकारानुबन्धः आद्युदात्तस्वरार्थः। षकारानुबन्धश्च स्त्रीत्वविवक्षायां षिद्गौरादिभ्यश्च इत्यनेन ङीब्विधानार्थः।

**उदाहरणे सूत्रार्थसमन्वयः** - क्रमश उदाहरणानि प्रस्तूयन्ते -

१. दान्त्यनेन इति **दात्रम्**। दाप् लवने (अदादि. परस्मै. अनिट्) इति धातोः करणत्ववाच्ये

प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे दा त्र इति जाते इण्निषेधे दात्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे दात्रम् इति रूपं सिध्यति।

२. नीयते अनेन इति **नेत्रम्**। णीञ् प्रापणे (भ्वादि. उभय. अनिट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे नी त्र इति जाते धातोः अनुदात्तत्वात् इट् न भवति किन्तु त्रस्य सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन ईकारस्य गुणे एकारे नेत्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे नेत्रम् इति रूपं सिध्यति।

३. शसति (हिनस्ति) अनेन इति **शस्त्रम्**। शसु हिंसायाम् (भ्वादि. परस्मै. सेट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे शस् त्र इति जाते धातोः विहितस्य त्रस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इटि प्राप्ते तन्निषेधार्थमिदं सूत्रमारभ्यते -

## [२८.१३] तितुत्रतथसिसुसरकसेषु च॥ (७.२.९)

**सूत्रार्थः** - एषां दशानां कृत्प्रत्ययानामिण् न।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण इण्निषेधो विधीयते। तितुत्रतथसिसुसरकसेषु (७/३) च (अव्ययम्) इति सूत्रगतपदानां विभक्तिनिर्देशः। नेड्वशि कृति इत्यतः अनुवृत्तस्य कृति इत्यस्य कृत्सु इति सप्तमीबहुवचनान्ततया विपरिणामो भवति। तिश्च तुश्च त्रश्च तश्च थश्च सिश्च सुश्च सश्च रश्च कश्च सश्च एतेषाम् इतरेतरयोगद्वन्द्वे तितुत्रतथसिसुसरकसाः, तेषु तितुत्रतथसिसुसरकसेषु। सूत्रार्थस्तावत् - ति -तु -त्र -त -थ -सि -सु -सर -क -साम् कृत्प्रत्ययानाम् इडागमो न भवति। सेट्धातुस्थले प्राप्तस्य इटः निषेधार्थमयं योगः। अनिट्धातुस्थले तु प्राप्तस्य इटः एकाच उपदेशेऽनुदात्तात् इत्यनेन निषेधः सिद्ध एव। अष्टाध्याय्याम् तितुत्रतथसिसुसरकसेषु च इत्येतस्मात् पूर्वसूत्रमस्ति नेड्वशि कृति (७.२.८) इति। तेन च योगेन वशादिकृत्प्रत्ययानाम् इण्निषेधः क्रियते। अनेन तु तितुत्रादीनाम् दशानाम् प्रत्ययानाम् इण्निषेधः क्रियते। उपरि उक्तानाम् दशानाम् प्रत्ययानाम् आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमः प्राप्नोति , तस्य अनेन निषेधो भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण शस् त्र इत्यत्र इडागमे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः भवति। तेन शस्त्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे शस्त्रम् इति रूपं सिध्यति।

सुत्रोक्ततिशब्देन स्त्रियां क्तिन् इति क्तिनो ग्रहणम्। तु इत्यनेन सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् इति तुनो ग्रहणम्। त इत्यनेन उणादि -तप्रत्ययस्य ग्रहणम्। थ इत्यनेन उणादि -क्थप्रत्ययस्य ग्रहणम्। सि इत्यनेन -उणादि -क्सिप्रत्ययस्य ग्रहणम्। सु इत्यनेन उणादि

-क्सुप्रत्ययस्य ग्रहणम्। सर इत्यनेन उणादि -सरन्प्रत्ययस्य ग्रहणम्। क स इत्याभ्याम् उणादिस्थयोः कसयोः प्रत्यययोर्ग्रहरणम्।

तथा च क्रमशः अस्य सूत्रस्य उदाहरणानि प्रदीयन्ते -

१. ति - तन्तिः।
२. तु - सक्तुः।
३. त्र - शस्त्रम् इति तु उपरि उक्तमेवास्ति।
४. त – हस्तः, लोतः, पोतः।
५. थ – काष्ठम्, कुष्ठम्।
६. सि - कुक्षिः।
७. सु - इक्षुः।
८. सर – अक्षरम्।
९. क – शल्कः (छिलका)।
१०. स – वत्सः।

११. अधुना पूर्वसूत्रस्य अवशिष्टानि उदाहरणानि प्रक्रियासहयोगेन आलोच्यन्ते -

४. **योत्रम् -** युवन्ति अनेन इति **योत्रम्**। यु मिश्रणामिश्रणयोः (अदादि. परस्मै. सेट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे यु त्र इति जाते त्रस्य आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इटि प्राप्ते तितुत्रतथसिसुसरकसेषु च इति सूत्रेण तस्य निषेधः भवति। ततः आर्धधातुकगुणे यो त्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे योत्रम् इति रूपं सिध्यति।

५. **योक्त्रम् -** युञ्जन्ति अनेन इति **योक्त्रम्**। युजिर् योगे (रुधादि. उभय.) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे युज् त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे लघूपधगुणे चोः कुः इत्यनेन जकारस्य गकारे खरि च इति चर्त्वेन गकारस्य ककारे योक्त्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे योक्त्रम् इति रूपं सिध्यति।

६. **स्तोत्रम् -** स्तुवन्ति अनेन इति **स्तोत्रम्**। स्तु (ष्टुञ् स्तुतौ, अदादि. उभय. अनिट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे स्तु त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे आर्धधातुकगुणे स्तोत्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे स्तोत्रम् इति रूपं सिध्यति।

७. तुदन्ति अनेन इति **तोत्त्रम्**। तुद व्यथने (तनादि. उभय. अनिट्) इति धातोः करणत्ववाच्ये

टिप्पणी



प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे तुद् त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे लघूपधगुणे दकारस्य चर्त्वे तकारे तोत्त्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे तोत्त्रम् इति रूपं सिध्यति।

८. **सेत्रम्** - सिन्वन्ति अनेन इति **सेत्रम्**। सि (षिञ् बन्धने, स्वादि) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे सि त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे आर्धधातुकगुणे सेत्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे सेत्रम् इति रूपं सिध्यति।

९. **सेक्त्रम्** - सिञ्चन्ति अनेन इति **सेक्त्रम्**। सिच् (षिच क्षरणे, तुदादि. उभय. अनिट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे सिच् त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे लघूपधगुणे चोः कुः इत्यनेन चकारस्य कुत्वे ककारे सेक्त्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे सेक्त्रम् इति रूपं सिध्यति।

१०. **मेढ्रम्** - मेहन्ति अनेन इति **मेढ्रम्**। मिह सेचने (भ्वादि. परस्मै. अनिट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे मिह त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे लघूपधगुणे हो ढः इत्यनेन हकारस्य ढकारे झषस्तथोर्धोऽधः इति तकारस्य धकारे ष्टुना ष्टुः इति धकारस्य ढकारे ढो ढे लोपः इति पूर्वढकारलोपे मेढ्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे मेढ्रम् इति रूपं सिध्यति।

११. **पत्त्रम्** - पतन्ति (गच्छन्ति) अनेन इति **पत्त्रम्**। पतॢ गतौ (भ्वादि. परस्मै. सेट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे पत् त्र इति जाते तितुत्रतथसिसुसरकसेषु च इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे पत्त्र इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे पत्त्रम् इति रूपं सिध्यति।

१२. **दंष्ट्रा** - दशन्ति अनया इति **दंष्ट्रा**। दंश दशने (भ्वादि. परस्मै. अनिट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे दंश् त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे लघूपधगुणे व्रश्चादिसूत्रेण शकारस्य षकारे ष्टुना ष्टुः इत्यनेन ष्टुत्वे तकारस्य टकारे दंष् ट्र इति जायते। ततः स्त्रीत्वविवक्षायां ष्ट्रनः षित्त्वात् षिद्गौरादिभ्यश्च इत्यनेन ङीप् प्राप्तः परन्तु अजादिगणे दंष्ट्रशब्दस्य पाठात् अजाद्यतष्टाप् इत्यनेन टापि अनुबन्धलोपे सवर्णदीर्घे दंष्ट्रा इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ सोः हल्ङ्यादिलोपे दंष्ट्रा इति रूपं

सिध्यति।

१३. **नद्ध्री** - नह्यते अनेन इति **नद्ध्री**। नह् (णह बन्धने, दिवादि. उभय. अनिट्) इति धातोः करणत्ववाच्ये प्रकृतसूत्रेण ष्ट्रनि अनुबन्धलोपे नह् त्र इति जाते एकाच उपदेशेऽनुदात्तात् इति सूत्रेण वलादिलक्षणस्य इडागमस्य निषेधे हो ढः इति प्राप्तं ढत्वं बाधित्वा नहो धः इति हकारस्य धकारे झषस्तथोर्धोऽधः इति तकारस्य धकारादेशे झलां जश्झशि इति पूर्वधकारस्य दकारे नद्ध्र इति जाते ष्ट्रनः षित्त्वात् स्त्रीत्वविवक्षायां षिद्गौरादिभ्यश्च इति ङीपि अनुबन्धलोपे नद्ध्र ई इति जाते ईकारात् पूर्वस्य भसंज्ञकस्य अकारस्य लोपे सुविभक्तौ नद्ध्री इति रूपं सिध्यति।

## पाठगतप्रश्नाः -२

१४. तृन् इत्यस्य कोऽर्थः।

१५. तृन्प्रत्ययान्तस्य उदाहरणम् लिखत।

१६. चिकीर्षुः इत्यत्र कः कृत्प्रत्ययः केन।

१७. तृजन्तशब्दयोगेन का विभक्तिः।

१८. तृन्नन्तशब्दयोगेन का विभक्तिः।

१९. च्छ्वोः शूडनुनासिके च इत्यस्य कोऽर्थः।

२०. दाम्नी.....इत्यादिसूत्रम् पूरयत।

२१. शस्त्रम् इत्यत्र इण्निषेधः केन।

२२. पृष्टम् इत्यत्र च्छ् इत्यस्य स्थाने शकारादेशविधायकम् सूत्रम् लिखत।

२३. दाम्न्यादिसूत्रेण कः प्रत्ययः कस्मिन्नर्थे विधीयते।

## पाठसारः

अस्मिन् तृतीये पाठे कानच् -क्वसु -शतृ -शानच् -तृन् -ष्ट्रन् -उ इत्येतेषाम् कृत्प्रत्ययानाम् आलोचना विहिता। तेषु क्वसुकानचौ वैदिकौ प्रत्ययौ। चक्राणः, जगन्वान्, पचन्तम्, पचमानम्, विद्वान्, करिष्यन्तम्, करिष्यमाणम्, कर्ता, चिकीर्षुः, प्राट्, नद्ध्री, दंष्ट्रा, पत्त्रम्, मेढ्रम्, सेक्त्रम्, सेत्रम्, तोत्त्रम्, स्तोत्रम्, योक्त्रम्, योत्रम्, शस्त्रम्, नेत्रम्, दात्रम् इत्येतेषाम् कृदन्तशब्दानाम् प्रक्रियाः अपि प्रदर्शिताः। अत्र च पाठे सत्संज्ञकयोः शतृशानचोः प्रत्यययोः सविस्तरं व्याख्यानम् विहितमस्ति। लटः स्थाने लृटः स्थाने च तौ भवतः। एतयोः शतृप्रत्ययः कर्तरि परस्मैपदस्थले एव भवति। शानच्प्रत्ययस्तु कर्तृकर्मणोः भवति किन्तु केवले आत्मनेपदस्थले एव।

## पाठान्तप्रश्नाः

१. विदेः शतुर्वसुः इति सूत्रं सोदाहरणं व्याख्यात।

२. तृन् इति सूत्रं सोदाहरणं व्याख्यात।

३. लिटः कानज्वा, क्वसुश्च इति सूत्रं सोदाहरणं व्याख्यात।

४. लटः शतृशानचावप्रथमासमानाधिकरणे इति सूत्रं सोदाहरणं व्याख्यात।

५. च्छ्वोः शूडनुनासिके च इति सूत्रं सोदाहरणं व्याख्यात।

६. दाम्नी...इत्यादि सूत्रं प्रपूर्य सोदाहरणं व्याख्यात।

७. चक्राणः इत्यस्य रूपसिद्धिः कार्या।

८. जगन्वान् इत्यस्य रूपसिद्धिः कार्या।

९. पचन्तम्, पचमानम् इत्यनयोः रूपसिद्धिः कार्या।

१०. विद्वान् इत्यस्य रूपसिद्धिः कार्या।

११. करिष्यन्तम्, करिष्यमाणम् इत्यनयोः रूपसिद्धिः कार्या।

१२. कर्ता इत्यस्य रूपसिद्धिः कार्या।

१३. चिकीर्षुः इत्यस्य रूपसिद्धिः कार्या।

१४. स्तोत्रम् इत्यस्य रूपसिद्धिः कार्या।

## पाठगतप्रश्नोत्तराणि

### उत्तराणि-१

१. चक्राणः।

२. जगन्वान्।

३. छान्दसौ।

४. मान्तस्य धातोर्नत्वं म्वोः परतः।

५. लटः शतृशानचावप्रथमासमानाधिकरणे।

६. आने मुक्।

७. परस्मैपदस्थले।

८. आत्मनेपदस्थले।

९. विद्वान्।

१०. शतृशानचौ।

११. लृटः सद्वा।

१२. न भवति।

१३. आम् भवति।

**उत्तराणि-२**

१४. तच्छीलतद्धर्मतत्साधुकारिषु धातोः तृन् प्रत्ययो भवति।

१५. कर्ता (कटान्)।

१६. उप्रत्ययः सनाशंसभिक्ष उः इत्यनेन।

१७. तृजन्तशब्दयोगेन कर्मणि षष्ठी।

१८. तृन्नन्तशब्दयोगेन कर्मणि द्वितीया।

१९. सतुक्कस्य छस्य वस्य च क्रामात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति।

२०. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे।

२१. तितुत्रतथसिसुसरकसेषु च।

२२. च्छ्वोः शूडनुनासिके च।

२३. ष्ट्रन्प्रत्ययः करणेऽर्थे।

।।इति अष्टाविंशः पाठः।।

२९

# उत्तरकृदन्तम्

## प्रस्तावना

अस्मिन् पाठे उत्तरकृदन्तस्थसूत्राणाम् व्याख्यानम् करिष्यते। तत्रादौ तुमुन्प्रत्ययविषये चर्चा करिष्यते। ततः भावार्थे घञ्प्रत्ययः कथं विधीयते इति वक्ष्यते। तुमुन्नन्तशब्दः अव्ययम्। घञन्तशब्दः पुंलिङ्गकः। ततः अच् -अप् -नङ् -कि इत्येतेषाम् प्रत्ययानां प्रयोगः प्रदर्शयिष्यते। ततः स्त्रीत्वविशिष्टे भावे कर्तृभिन्नकारके च क्तिन् -अ -युच् इत्यादीनाम् प्रत्ययानाम् प्रयोगः कथं भवति इति कथयिष्यते। पूर्वं भवन्तः कर्तरि कर्मणि च क्तप्रत्ययो भवति इति ज्ञातवन्तः। अधुना नपुंसके भावेऽपि क्तप्रत्ययो भवति इति ज्ञास्यन्ति। अन्ते क्त्वा -ल्यप् -णमुल् इत्येतेषाम् प्रत्ययानाम् विषये चर्चापि विधास्यते।

## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- कस्मिन्नर्थे तुमुन्प्रत्ययस्य प्रयोगो भवति इति ज्ञास्यति।
- भावे घञ्प्रत्ययो भवति इति सविस्तरम् ज्ञास्यति।
- अच् -अप् -नङ् -कि इत्येतेषाम् प्रत्ययानां प्रयोगान् अधिगमिष्यति।
- स्त्रीत्वविशिष्टे भावे कर्तृभिन्नकारके च के प्रत्ययाः भवन्ति इत्यधिगमिष्यति।
- भावेऽपि क्तप्रत्ययो भवति इति ज्ञास्यति।
- कथं क्त्वाप्रत्ययस्य प्रयोगः कथं च ल्यप्प्रत्ययस्य प्रयोगः इति ज्ञास्यति।
- आभीक्ष्ण्ये णमुल्प्रत्ययविधानम् ज्ञास्यति।

क्रियार्थायाम् क्रियायाम् धातोः तुमुन्प्रत्ययविधायकसूत्रम् प्रारभ्यते -

### [२९.१] तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्॥ (३.३.१०)

**सूत्रार्थः** - क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण तुमुन् -ण्वुलौ प्रत्ययौ विधीयेते। तुमुन्ण्वुलौ (१/२) क्रियायाम् (७/१) क्रियार्थायाम् (७/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भविष्यति गम्यादयः इत्यतः भविष्यति (७/१) इत्यस्य अनुवृत्तिर्भवति। तुमुन् च ण्वुल् च तुमुण्वुलौ इति इतरेतरयोगद्वन्द्वः। क्रिया अर्थः (प्रयोजनम्) यस्याः सा

क्रियार्था, तस्याम् क्रियार्थायाम् इति बहुव्रीहिसमासः। कस्याश्चित् क्रियायाः सिद्धौ यदा अपरा क्रिया क्रियते तदा सा क्रिया पूर्वक्रियायाः कियार्था क्रिया इत्युच्यते। यथा भोक्तुम् व्रजति इत्यत्र भोजनक्रिया, गमनक्रिया चेति क्रियाद्वयम् अस्ति। तत्र च भोजनक्रियायै गमनक्रिया क्रियते। अतः गमनक्रिया भोजनक्रियायाः क्रियार्था क्रिया इति गमनक्रिया क्रियार्था क्रिया इत्युच्यते। सूत्रार्थस्तावत् - क्रियार्थायाम् क्रियायाम् उपपदे सति अर्थात् समीपे उच्चारितायाम् सत्याम् धातोः परौ तुमुन् -ण्वुलौ प्रत्ययौ भवतः भविष्यत्कालवृत्तित्वविवक्षायाम् इति। तुमुनः नकारः इत्संज्ञकः, मकारोत्तरवर्ती उकारश्च उच्चारणार्थः। तुम् -इत्येव शिष्यते। ण्वुलः लकारः हलन्त्यम् इत्यनेन इत्संज्ञकः, णकारश्च चुटू इत्यनेन। तेन वुमात्रमवशिष्यते। अनेन सूत्रेण विहितौ प्रत्ययौ कृत्संज्ञकौ भवतः, कृदतिङ् इत्यधिकारे पाठात्। तयोश्च ण्वुल्प्रत्ययः कर्त्रर्थे विधीयते। अव्ययकृतो भावे इति भाष्यवचनात् तुमुन्प्रत्ययः भावे भवति।

**उदाहरणम् -** कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति।

**सूत्रार्थसमन्वयः - तुमुन्प्रत्ययस्य** उदाहरणम् - कृष्णं द्रष्टुं याति इत्यत्र दर्शनक्रियायै गमनक्रिया क्रियते। अतः गमनक्रिया दर्शनक्रियायाः क्रियार्था क्रिया। सा च क्रियार्था क्रिया समीपे विद्यते इत्यतः प्रकृतसूत्रेण दृशिर् प्रेक्षणे (भ्वादि. परस्मै. अनिट्) इति धातोः भविष्यत्काले भाववाच्ये तुमुन्प्रत्यये अनुबन्धलोपे धातोश्च इरः लोपे दृश् तुम् इति जाते आर्धधातुकं शेषः इत्यनेन तुमः आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते धातोः अनुदात्तत्वात् एकाच उपदेशेऽनुदात्तात् इत्यनेन इण्निषेधः। ततः तुमुन्प्रत्ययः झलादिः अकित् चास्ति अतः तस्मिन् तुमुनि परतः सृजिदृशोर्झल्यमकिति इत्यनेन दृशः अमागमो अनुबन्धलोपश्च भवति। स च मित्त्वात् मिदचोऽन्त्यात्परः इत्यनेन अन्त्यादचः परो भवति। ततः दृ अ श् तुम् इति जाते इको यणचि इत्यनेन ऋकारस्य स्थाने रेफादेशे द्रश् तुम् इति जाते व्रश्चभ्रस्जादिसूत्रेण शकारस्य षकारे ष्टुना ष्टुः इति सूत्रेण ष्टुत्वे तकारस्य टकारे द्रष्टुम् इति जायते। ततः भाववाचकत्वात् औत्सर्गिके प्रथमैकवचने सुप्रत्यये कृन्मेजन्तः इत्यनेन मान्तकृदन्तशब्दत्वात् अव्ययसंज्ञायाम् अव्ययादाप्सुपः इत्यनेन सोः लुकि द्रष्टुम् इति रूपं सिध्यति। ततः अस्माद् वाक्यात् कृष्णकर्मक -भाविदर्शनक्रियार्थगमनक्रियावतः कर्तुः बोधः।

{सूत्रम्. **सृजिदृशोर्झल्यमकिति** (६.१.५८) = सृजिदृशोरमागमः स्याज्झलादावकिति।}

**अत्र विशेषः -** भट्टोजिदीक्षितादयः वदन्ति यत् समानकर्तृकत्वे सत्येव तुमुन्प्रत्ययस्य प्रयोगो भवति। अर्थात् तुमुन्नन्तधातोः कर्ता, क्रियार्थक्रियायाः कर्ता च समानो भवति चेत् तुमुन्प्रत्ययो भवति। अत एव कृष्णं द्रष्टुं याति इत्यत्र दर्शनक्रियायाः गमनक्रियायाः च कर्ता समानोऽस्ति इति हेतोः तुमुन्प्रत्ययो भवति। अनुजानीहि मां गन्तुम् इत्यत्र गमनकियायाः कर्ता अस्मद्, अनुजानीहि इत्यस्य च कर्ता युष्मद् इति कर्तृभेदः स्पष्ट एव। तस्मात् अनुजानीहि मां गमनाय इत्येव स्यात् न तु अनुजानीहि मां गन्तुम् इति।

**ण्वुल्प्रत्ययस्य** उदाहरणम् -

कृष्णं दर्शको याति इत्यत्र भविष्यत्कालिकदर्शनक्रियायै गमनक्रिया क्रियते। अतः गमनक्रिया दर्शनक्रियायाः क्रियार्था क्रिया। सा च क्रियार्था क्रिया समीपे विद्यते इत्यतः प्रकृतसूत्रेण दृशिर् प्रेक्षणे

(भ्वादि. परस्मै. अनिट्) इति धातोः भविष्यत्काले कर्तृत्ववाच्ये ण्वुल्प्रत्यये अनुबन्धलोपे धातोश्च इरः लोपे दृश् वु इति जाते युवोरनाकौ इत्यनेन वु इत्यस्य स्थाने अक इत्यादेशे दृश् अक इति जाते आर्धधातुकं शेषः इत्यनेन ण्वुलः आर्धधातुकसंज्ञायाम् पुगन्तलघूपधस्य च इत्यनेन लघूपधगुणे दर्शक इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां प्रथमैकवचने सुप्रत्यये दर्शकः इति रूपं सिध्यति। अस्माद् च वाक्यात् कृष्णकर्मक -भाविदर्शनक्रियार्थगमनक्रियावतः कर्तुः बोधः। कृद्योगे कर्तृकर्मणोः कृति इत्यनेन अनुक्ते कर्मणि कृष्ण इत्यत्र षष्ठी प्राप्तास्ति। परन्तु अकेनोर्भविष्यदाधमर्ण्ययोः इत्यनेन तन्निषेधः। ततः कर्मणि द्वितीया इति द्वितीयविभक्तिः। ण्वुल्तृचौ इति सूत्रस्थण्वुल्प्रत्यये कृष्णस्य दर्शकः इति कर्मणि षष्ठी। तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इत्यनेन ण्वुल्प्रत्यये तु कर्मणि द्वितीया यथा कृष्णं दर्शकः इत्यत्र। इति उभयोः ण्वुल्प्रत्यययोः विशेषः।

कालार्थेषु उपपदेषु धातोः तुमुन्प्रत्ययविधायकसूत्रम् प्रारभ्यते -

## [२१.२] कालसमयवेलासु तुमुन्॥ (३.३.१६७)

**सूत्रार्थः** - कालार्थेषु उपपदेषु तुमुन्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण तुमुन्प्रत्ययो विधीयते। कालसमयवेलासु (७/३) तुमुन् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। कालश्च समयश्च वेला च कालसमयवेलाः इति इतरेतरयोगद्वन्द्वः, तासु कालसमयवेलासु। कालः, समयः, वेला चेति पर्यायवाचिशब्दग्रहणम् कालवाचिशब्दानाम् उपलक्षणार्थम्। तेन अवसरादिकालवाचिशब्दानामपि ग्रहणम् भवति। सूत्रार्थस्तावत् काल -समय -वेलादिकालवाचकशब्देषु उपपदेषु धातोः तुमुन्प्रत्ययः परो भवति। तुमुन्प्रत्ययः पूर्ववत् अव्ययकृतो भावे इति वचनानुसारं भावार्थे भवति। भावश्च अद्रव्यम् भवति अतः तुमुन्नन्तात् केवलम् औत्सर्गिकम् एकवचनमेव भवति। ततः कृन्मेजन्तः इत्यनेन अव्ययसंज्ञायाम् अव्ययादाप्सुपः इत्यनेन सोः लोपो भवति। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इति कृत्संज्ञकः भवति।

**उदाहरणम्** - कालः समयो वेला वा भोक्तुम्।

**सूत्रार्थसमन्वयः** - प्रस्तुते उदाहरणे - कालसमयवेलाशब्देषु उपपदेषु भुज पालनाभ्यवहारयोः (रुधादि. परस्मै. अनिट्) इति धातोः प्रकृतसूत्रेण भावे तुमुनि अनुबन्धलोपे तुमुनः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इति तन्निषेधे लघूपधगुणे चोः कुः इति जकारस्य गकारे खरि च इति गकारस्य ककारे भोक्तुम् इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां प्रथमैकवचने सुप्रत्यये कृन्मेजन्तः इत्यनेन अव्ययसंज्ञायाम् अव्ययादाप्सुपः इति सोः लुकि भोक्तुम् इति रूपं सिध्यति। अत्र न भविष्यत्कालार्थः न वा क्रियार्था क्रियास्ति। अतः तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम् इति पूर्वयोगेन तुमुन्प्रत्ययः अप्राप्तः। अतोऽयम् सूत्रारम्भः।

अवसरोऽयम् आत्मानं प्रकटयितुम् इत्युदाहरणान्तरम्।



अक्रियार्थोपपदार्थम् अग्रिमसूत्रमारभ्यते -

## [२९.३] समानकर्तृकेषु तुमुन्॥ (३.३.१५८)

**सूत्रार्थः** - इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण तुमुन्प्रत्ययो विधीयते। समानकर्तृकेषु (७/३) तुमुन् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। इच्छार्थेषु लिङ्लोटौ इत्यतः इच्छार्थेषु (७/३) इति पदमनुवर्तते। समानः कर्ता येषां ते समानकर्तृकास्तेषु समानकर्तृकेषु इति बहुव्रीहिसमासः। समानकर्तृकशब्दस्य एककर्तृकः इत्यर्थः। सूत्रार्थस्तावत् - इच्छार्थेषु समानकर्तृकेषु उपपदेषु धातोः तुमुन्प्रत्ययः परो भवति। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति। तुमुण्ण्वुलौ क्रियायाम् क्रियार्थायाम् इति पूर्वसूत्रेण क्रियार्थायाम् क्रियायाम् उपपदे तुमुन्प्रत्ययो विहितः, अनेन तु न तथा, अपि तु इच्छार्थकक्रियामात्रम् उपपदम् अस्ति चेदेव तुमुन्प्रत्ययो विधीयते।

**उदाहरणम्** - इच्छति भोक्तुम्। वष्टि भोक्तुम्। वाञ्छति भोक्तुम्।

**सूत्रार्थसमन्वयः** - इच्छति भोक्तुम् इत्यत्र इच्छार्थकः इष्धातुः उपपदम् अस्ति। किञ्च इष्धातोः कर्ता, भुज्धातोः कर्ता च समान एव। अतः समानकर्तृकेषु तुमुन् इति प्रकृतसूत्रेण तुमुनि भोक्तुम् इति रूपं सिध्यति। प्रक्रिया तु पूर्वसूत्रे उक्तास्ति।

शक्नोत्यादिषु उपपदेषु धातोः तुमुन्प्रत्ययविधायकसूत्रम् आरभ्यते -

## [२९.४] शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-सहार्हास्त्यर्थेषु तुमुन्॥ (३.४.६५)

**सूत्रार्थः** - शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु उपपदेषु धातोस्तुमुन् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकमस्ति। अनेन सूत्रेण तुमुन्प्रत्ययो विधीयते। शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु (७/३) तुमुन् (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। अस्तीति अर्थो येषां ते अस्त्यर्थाः, बहुव्रीहिः। शकश्च धृषश्च ज्ञाश्च ग्लाश्च घटश्च रभश्च लभश्च क्रमश्च सहश्च अर्हश्च, अस्त्यर्थाश्च तेषाम् इतरेतरयोगद्वन्द्वे, शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थाः तेषु शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु। सूत्रे कृतस्य अर्थग्रहणस्य सम्बन्धः अस्तिना सह। अतः आदौ बहुव्रीहिसमासः ततः द्वन्द्वसमासः विधेयः। सूत्रार्थो हि शक् -धृष् -ज्ञा -ग्लै -घट् -रभ् -लभ् -क्रम् -सह् -अर्ह् -अस्त्यर्थकधातुषु उपपदेषु धातुमात्रात् तुमुन्प्रत्ययो भवति इति। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति।

**उदाहरणे सूत्रार्थसमन्वयः** -

तालिकया अस्य सूत्रस्य उदाहरणानि प्रस्तूयन्ते -

| उपपदम् | तुमुन्नन्तशब्दः |
|---|---|
| शक् - शक्नोति | भोक्तुम् |
| धृष् - धृष्णोति | भोक्तुम् |
| ज्ञा - जानाति | भोक्तुम् |
| ग्लै - ग्लायति | भोक्तुम् |
| घट् - घटते | भोक्तुम् |
| आ -रभ् - आरभते | भोक्तुम् |
| लभ् - लभते | भोक्तुम् |
| प्र -क्रम् - प्रक्रमते | भोक्तुम् |
| सह् - सहते | भोक्तुम् |
| अर्ह् - अर्हति | भोक्तुम् |
| अस्त्यर्थधातवः | |
| अस् - अस्ति | भोक्तुम् |
| भू - भवति | भोक्तुम् |
| विद् - विद्यते | भोक्तुम् |

अत्र शक्नोत्यादिषु उपपदेषु भुज्धातोः तुमुन्प्रत्ययः अनेन सूत्रेण विहितः। भोक्तुम् इति तुमुन्नन्तस्य प्रक्रिया पूर्वसूत्रे द्रष्टव्या।

## [२९.५] पर्याप्तिवचनेष्वलमर्थेषु॥ (३.४.६६)

**सूत्रार्थः** - पर्याप्तिः पूर्णता। तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण तुमुन्प्रत्ययो विधीयते। पर्याप्तिवचनेषु अलमर्थेषु इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् इति सूत्रतः तुमुन् (१/१) इति पदस्य अनुवृत्तिर्भवति। पर्याप्तिः उच्यते यैः ते पर्याप्तिवचनाः तेषु पर्याप्तिवचनेषु। अलम् अर्थो येषां ते अलमर्थाः तेषु अलमर्थेषु इति बहुव्रीहिसमासः। सूत्रार्थस्तावत् पूर्णतावाचिषु सामर्थ्यवचनेषु अलमादिशब्देषु उपपदेषु धातोः तुमुन्प्रत्ययः परो भवति इति। प्रतिषेधार्थकेन अलम्शब्दयोगेन तुमुन्प्रत्ययो न भवति किन्तु क्वचित् कवीनाम् तथा प्रयोगो दृश्यते। यथा - अलमात्मानं खेदयितुम् (वेणी २.३)। अलं सुप्तजनं प्रबोधयितुम् (मृच्छकटिकम् ३)। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति। पर्याप्तः, प्रवीणः, कुशलः, पटुः इत्यादयः पर्याप्तिवचनाः सामर्थ्यवचनाः उपपदशब्दाः।

**उदाहरणे सूत्रार्थसमन्वयः** - पर्याप्तो भोक्तुम्, प्रवीणः, कुशलः, पटुः इत्यादि। अत्र पर्याप्तः, प्रवीणः, कुशलः, पटुः इत्येते शब्दाः पूर्णतावाचिनः सामर्थ्यवाचिनश्च शब्दाः। अतः तेषु उपपदेषु सत्सु भुज्धातोः प्रकृतसूत्रेण तुमुन्प्रत्यये अनुबन्धलोपे धातोः लघूपधगुणे जकारस्य कुत्वे गकारे तस्य च चर्त्वे ककारे भोक्तुम् इति जायते। ततः कृदन्तत्वात् प्रातिपदिकसंज्ञा। तुमुन्प्रत्ययः अव्ययकृतो भावे इति वचनानुसारं भावार्थे भवति। भावश्च अद्रव्यम् भवति। अतः तुमुन्नन्तात् केवलम् औत्सर्गिकम् एकवचनमेव भवति। ततः कृन्मेजन्तः इत्यनेन अव्ययसंज्ञायाम् अव्ययादाप्सुपः इत्यनेन सोः लोपे भोक्तुम् इति रूपं सिध्यति।

## पाठगतप्रश्नाः -१

१. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इत्यस्य कोऽर्थः।

२. कालसमयवेलासु तुमुन् इत्यस्य कोऽर्थः।

३. समानकर्तृकेषु तुमुन् इत्यस्य कोऽर्थः।

४. पर्याप्तिवचनेष्वलमर्थेषु इत्यस्य कोऽर्थः।

५. का क्रियार्था क्रिया।

६. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इत्यस्य किम् उदाहरणम्।

७. कालसमयवेलासु तुमुन् इत्यस्य किम् उदाहरणम्।

८. समानकर्तृकेषु तुमुन् इत्यस्य किम् उदाहरणम्।

९. पर्याप्तिः का।

१०. के पर्याप्तिवचनाः सामर्थ्यवचनाः उपपदशब्दाः।

---

इदानीम् घञ्विधायकसूत्राणि व्याख्यायन्ते। तत्रादौ भावे घञ्विधायकसूत्रम् प्रस्तूयते -

## [२९.६] भावे॥ (३.३.१८)

**सूत्रार्थः** - सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् एकपदात्मकम्। अनेन सूत्रेण घञ्प्रत्ययो विधीयते। भावे इति सप्तम्येकवचनान्तम्। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। पदरुजविशस्पृशो घञ् इत्यतः घञ् (१/१) इति पदमनुवर्तते। सामान्यतया भावः, क्रिया इति समानार्थकः। किन्तु अत्र सूत्रे भावशब्दस्य सिद्धावस्थापन्ना क्रिया अर्थः। धात्वर्थः क्रिया द्विविधा भवति - सिद्धावस्थापन्नक्रिया साध्यावस्थापन्नक्रिया च इति। यत्र क्रियायाः क्रियान्तराकाङ्क्षा सा सिद्धावस्थापन्ना क्रिया। यथा - पाकः, त्यागः, भागः इत्यादिषु कृदन्तेषु धात्वर्थः सिद्धावस्थापन्ना क्रिया। यत्र च क्रियायाः क्रियान्तराकाङ्क्षा नास्ति सा साध्यावस्थापन्ना क्रिया। यथा - पचति, त्यजति भजति इत्यादिषु तिङन्तेषु

साध्यावस्थापन्ना क्रिया। सूत्रार्थस्तावत् - यदा धात्वर्थः सिद्धावस्थापन्ना क्रिया भवति तदा धातोः कृत्संज्ञकः घञ्प्रत्ययो भवति। यदा धात्वर्थः सिद्धावस्थापन्ना क्रिया तदा सा द्रव्यवत् भासते (कृदभिहितो भावो द्रव्यवत् प्रकाशते) अत एव लिङ्गसंख्यायोगो भवति। घञः ञकारः हलन्त्यम् इत्यनेन इत्संज्ञकः, घकारश्च लशक्वतद्धिते इत्यनेन। अतः अकारमात्रं शिष्यते। घकारानुबन्धः चजोः कु घिण्ण्यतोः इत्यादिना घित्कार्यार्थः। ञकारानुबन्धश्च अत उपधायाः इति वृद्ध्यर्थः। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति।

**उदाहरणम्** - पाकः।

**सूत्रार्थसमन्वयः** - डुपचष् पाके (भ्वादि. उभय. अनिट्) इति धातोः सिद्धावस्थापन्नभाववाच्ये प्रकृतसूत्रेण घञि अनुबन्धलोपे पच् अ इति जाते ञित्त्वात् अत उपधायाः इत्यनेन उपधावृद्धौ पाच् अ इति जायते। ततः घित्त्वात् चजोः कु घिण्ण्यतोः इत्यनेन धातोः चकारस्य कुत्वे ककारे पाक इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ सकारस्य रुत्वे रेफस्य च विसर्गे पाकः इति रूपं सिध्यति। लिङ्गानुशासनात् घञन्तशब्दः पुंलिङ्गे प्रयुक्तो भवति। पाकः -पाकौ -पाकाः। एवम् अन्यत्र।

अधुना घञ्प्रत्ययविधायकम् अपरम् सूत्रम् आरभ्यते -

## [२९.७] अकर्तरि च कारके संज्ञायाम्॥ (३.३.१९)

**सूत्रार्थः** - कर्तृभिन्ने कारके घञ् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदचतुष्टयात्मकम्। अनेन सूत्रेण घञ्प्रत्ययो विधीयते। अकर्तरि (७/१) च (अव्ययम्) कारके (७/१) संज्ञायाम् (७/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। पदरुजविशस्पृशो घञ् इत्यतः घञ् (१/१) इति पदमनुवर्तते। न कर्तरि अकर्तरि इति नञ्तत्पुरुषः। सूत्रार्थस्तावत् कर्तृभिन्ने कर्मकरणादिकारके वाच्ये धातोः परः घञ्प्रत्ययो भवति संज्ञाविषये। सूत्रस्थस्य संज्ञाशब्दस्य रूढशब्दः अर्थः। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति।

**उदाहरणम्** - रागः।

**सूत्रार्थसमन्वयः** - रज्यते अनेन इति रागः (रञ्जनद्रव्यम्)। अत्र करणकारकविवक्षायाम् रञ्ज रागे (भ्वादि. उभय. अनिट्/ दिवादि. उभय. अनिट्) इति धातोः घञि अनुबन्धलोपे धातोः नकारलोपं विधातुम् अग्रिमसूत्रमारभ्यते -

## [२९.८] घञि च भावकरणयोः॥ (६.४.२७)

**सूत्रार्थः** - रञ्जेर्नलोपः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण नलोपः विधीयते। घञि (७/१) च (अव्ययम्) भावकर्मणोः (७/२) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः

(५/१) इति त्रयम् अधिकृतम्। रञ्जेश्च इत्यतः रञ्जेः (६/१) इति पदमनुवर्तते। श्नान्नलोपः इत्यतः नलोपः (१/१) इति पदमपि अनुवर्तते। भावश्च करणञ्च भावकरणे तयोः भावकरणयोः इति इतरेतरयोगद्वन्द्वः। नस्य लोपः नलोपः इति षष्ठीतत्पुरुषसमासः। सूत्रार्थस्तावत् - भावार्थे करणार्थे च विहिते घञि प्रत्यये परतः रञ्ज्धातोः नकारस्य लोपः स्यात् इति। रञ्ज्धातौ वस्तुतः नकार एव अस्ति तस्यैव लोपो विधीयते सूत्रेणानेन। रञ्ज् इत्यत्र दृश्यमानः ञकारस्तु नश्चापदान्तस्य झलि इति परसवर्णे जातः।

**उदाहरणे सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण रञ्ज्धातोः यो घञ् विहितः सः करणार्थे अस्ति इति हेतोः रन् ज् इत्यस्य नकारस्य लोपे रज् अ इति जायते। ततः घञः ञित्त्वात् अत उपधायाः इति उपधावृद्धौ चजोः कु घिण्ण्यतोः इत्यनेन जकारस्य कुत्वे गकारे राग् अ इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ रागः इति रूपं सिद्ध्यति। अत्रार्थे आचार्यप्रयोगः - तेन रक्तं रागात् इति।

अनया एव प्रक्रियया भावे इति योगेन भावार्थेऽपि रञ्ज्धातोः घञ्प्रत्यये रागशब्दस्य निष्पत्तिर्भवति। तथा च उदाहरणम् - रञ्जनं रागः।

भावार्थे करणार्थे चैव रञ्ज्धातोः नकारस्य लोपो भवति नान्यस्मिन् अर्थे। यथा रज्यति अस्मिन् इति रङ्गः। अत्र अकर्तरि च कारके संज्ञायाम् इति योगेन अधिकरणकारके घञ्प्रत्ययः। अतः न नलोपः।

अधुना घञः अपवादप्रत्ययस्य विधानं क्रियते -

## [२९.९] एरच्॥ (३.३.५६)

**सूत्रार्थः** - इवर्णान्तादच्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् द्विपदात्मकम्। अनेन सूत्रेण अच्प्रत्ययो विधीयते। एः (५/१) अच् (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। इकारस्य षष्ठ्येकवचनान्तम् रूपम् एः इति । एः इति धातोः विशेषणम्। अतः तदन्तविधौ इवर्णान्ताद् धातोः इति अर्थो लभ्यते। सूत्रार्थस्तावत् - इवर्णान्तात् धातोः घञ्प्रत्ययो परो भवति भावे अकर्तरि च कारके संज्ञायाम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्यनयोः अपवादसूत्रमिदम्। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति। अचः चकारस्य हलन्त्यम् इत्यनेन इत्संज्ञा। अतः अ -मात्रम् शिष्यते।

**उदाहरणम्** - चयः। क्षयः।

**सूत्रार्थसमन्वयः** - चयनं चयः। अत्र चिञ् चयने (स्वादि. उभय. अनिट्) इति धातुः इवर्णान्तः। भावार्थे भावे इति सूत्रेण घञि प्राप्ते तम् अपवादत्वेन प्रबाध्य प्रकृतसूत्रेण अच्प्रत्यये अनुबन्धलोपे अकारे अचः तिङ्शिद्भिन्नत्वात् आर्धधातुकसंज्ञायाम् सार्वधातुकार्धधातुकयोः इत्यनेन इकारस्य गुणे एकारे एचोऽयवायावः इत्यनेन एकारस्य स्थाने अयादेशे चय इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ चयः इति रूपं सिध्यति। अच्प्रत्ययान्तशब्दः पुंलिङ्गको भवति। एवमेव जिधातोः भावार्थे जयः इति रूपं भवति इत्येवं भावे उदाहरणम्।



अधुना कर्तृभिन्नकारकार्थे उदाहरणमालोच्यते। क्षियति निवसति अस्मिन्निति क्षयः। अत्र क्षि निवासगत्योः (तुदादि. उभय. अनिट्) इति धातोः अधिकरणकारकार्थे प्रकृतसूत्रेण अच्प्रत्ययः। जयति अनेन संसारम् इति जयः (महाभारतम्) इत्यत्र जि जये (भ्वादि. परस्मै. अनिट्) इति धातोः करणकारके प्रकृतसूत्रेण अच्प्रत्यये जयः इति रूपम्।

घञ्प्रत्ययापवादप्रत्ययविधायकम् अपरम् सूत्रमिदमारभ्यते -

## [२९.१०] ऋदोरप्॥ (३.३.५७)

**सूत्रार्थः** - ऋवर्णान्तादुवर्णान्ताच्चाप्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण अप्प्रत्ययो विधीयते। ऋदोः (५/१) अप् (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। ऋच्च उश्च ऋदुः, तस्मात् ऋदोः इति समाहारद्वन्द्वेऽपि पुंस्त्वम्। ऋदुः इत्यत्र तपरो नास्ति किन्तु उच्चारणार्थः मुखसुखार्थो वा दकारो वर्तते। अतः तात् परः = तपरः इत्यनुसारम् उ इत्यनेन केवलम् उदन्तस्यैव ग्रहणम् न भवति किन्तु उवर्णान्तस्य ग्रहणम् भवति। ऋत् उ च उभयमपि धातोः विशेषणम् अस्ति। अतः तदन्तविधौ ऋदन्तात् उवर्णान्तात् च इत्यर्थलाभः। सूत्रार्थस्तावत् - ऋदन्तात् उवर्णान्तात् च धातोः परः अप्प्रत्ययो भवति भावे अकर्तरि च कारके संज्ञायाम् इति। अपः पकारः हलन्त्यम् इत्यनेन इत्संज्ञको भवति। तेन अ इत्येव शिष्यते। घञबन्तः (लिङ्गानुशासनम् - २.३) इत्यनुसारम् अप्प्रत्ययान्तशब्दः पुंलिङ्गको भवति। पकारानुबन्धः अनुदात्तौ सुप्पितौ इति अनुदात्तस्वरार्थः। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति।

**उदाहरणम्** - करः। गरः। यवः। लवः।

**सूत्रार्थसमन्वयः** - करणं करः इत्यत्र कृ विक्षेपे (तुदादि. परस्मै. अनिट्) इति धातुः ऋदन्तः। अतः प्रकृतसूत्रेण **भावार्थे** भावे इति सूत्रेण घञि प्राप्ते तम् अपवादत्वेन प्रबाध्य प्रकृतसूत्रेण अपि अनुबन्धलोपे अकारे अपः तिङ्शिद्भिन्नत्वात् आर्धधातुकसंज्ञायाम् सार्वधातुकार्धधातुकयोः इत्यनेन ऋकारस्य गुणे अकारे उरण् रपरः इति रपरत्वे अरि क् अर् अ इति जाते वर्णसम्मेलने कर इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ करः इति रूपं सिध्यति। कीर्यते अनेन इत्यर्थे करः इत्यत्र **करणार्थे** घञ्प्रत्ययः। गरणं गरः इति करणार्थकस्थले, गीर्यते इति गिरः (विषम्) इति कर्मार्थकस्थले च गॄ निगरणे इति धातोः प्रकृतसूत्रेण अप्प्रत्ययः।

**उदन्तस्य उदाहरणम्** - यवनं यवः। अत्र यु मिश्रणामिश्रणयोः (अदादि.परस्मै.) इति धातुः उवर्णान्तः। भावार्थे भावे इति सूत्रेण घञि प्राप्ते तम् अपवादत्वेन प्रबाध्य प्रकृतसूत्रेण अप्प्रत्यये अनुबन्धलोपे अकारे अपः तिङ्शिद्भिन्नत्वात् आर्धधातुकसंज्ञायाम् सार्वधातुकार्धधातुकयोः इत्यनेन उकारस्य गुणे ओकारे एचोऽयवायावः इत्यनेन ओकारस्य स्थाने अवादेशे यव इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ यवः इति रूपं



सिध्यति। यूयते पृथक्क्रियते तुषेभ्य इति यवः इत्यत्र कर्मणि अप्प्रत्ययः इति **ह्रस्वस्य** उकारस्य उदाहरणम्।

लवनं लवः। अत्र लूञ् छेदने (क्र्यादि.उभय.) इति धातुः ऊवर्णान्तः। भावार्थे भावे इति सूत्रेण घञि प्राप्ते तम् अपवादत्वेन प्रबाध्य प्रकृतसूत्रेण अप्प्रत्यये अनुबन्धलोपे अकारे अपः तिङ्शिद्भिन्नत्वात् आर्धधातुकसंज्ञायाम् सार्वधातुकार्धधातुकयोः इत्यनेन ऊकारस्य गुणे ओकारे एचोऽयवायावः इत्यनेन ओकारस्य स्थाने अवादेशे लव इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ लव इति रूपं सिध्यति। लूयते छिद्यते समुदायाद् इति लवः इत्यत्र कर्मणि अप्प्रत्ययः इति **दीर्घस्य** ऊकारस्य उदाहरणम्।

अधुना नङ्प्रत्ययविधायकसूत्रम् आरभ्यते -

## [२९.११] यजयाचयतविच्छप्रच्छरक्षो नङ्॥ (३.३.९०)

**सूत्रार्थः** - यज् याच् यत् विच्छ् प्रच्छ् रक्ष् इत्येतेभ्यः धातुभ्यः नङ्प्रत्ययः स्यात् भावे संज्ञाविषयककर्तृभिन्नकारके च।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण नङ्प्रत्ययो विधीयते। यजयाचयतविच्छप्रच्छरक्षः (५/१) नङ् (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। यजश्च याचश्च यतश्च विच्छश्च प्रच्छश्च रक्ष् चेति समाहारद्वन्द्वे यजयाचयतविच्छप्रच्छरक्ष् तस्मात् यजयाचयतविच्छप्रच्छरक्षः। यजादिषु अकारः उच्चारणार्थः। सूत्रार्थस्तावत् यज् याच् यत् विच्छ् प्रच्छ् रक्ष् इत्येतेभ्यः धातुभ्यः परो नङ्प्रत्ययो भवति भावे अकर्तरि च कारके संज्ञायाम्। नङः ङकारस्य इत्संज्ञा हलन्त्यम् इत्यनेन। ङकारानुबन्धः च्छ्वोः शूडनुनासिके च इत्यादिकार्यार्थः, तथा च विश्नः इत्यत्र लघूपधगुणनिषेधार्थः। याच्ञाशब्दं विहाय सूत्रे प्रयुक्ताः अन्ये नङन्ताः शब्दाः पुंलिङ्गका भवन्ति नङन्तः (लिङ्गानुशासनम् - ३९) इत्यनेन। याच्ञा स्त्रियाम् (लिङ्गानुशासनम् - ४०) इत्यनुसारम् याच्ञाशब्दः स्त्रीलिङ्गको भवति। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति।

**उदाहरणम्** - यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः।

**सूत्रार्थसमन्वयः** - यजनम् यज्ञः इत्यत्र यज देवपूजासंगतिकरणदानेषु (भ्वादि. उभय.) इति धातोः प्रकृतसूत्रेण भावे नङ्प्रत्यये यज् न इति जाते। धातोः अनिट्त्वात् नेट्। ततः स्तोः श्चुना श्चुः इत्यनेन श्चुत्वे नकारस्य ञकारे यज्ञ इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ यज्ञः इति रूपं सिध्यति। इज्यते इति यज्ञः इत्यत्र कर्मणि नङ्प्रत्ययः। प्रक्रिया तु पूर्ववत्।

याचनम् याच्ञा इत्यत्र टुयाचृ याच्ञायाम् (भ्वादि. उभय.) इति धातोः पूर्ववत् भावे नङि श्चुत्वे याच् ञ इति जाते स्त्रीत्वविवक्षायाम् अजाद्यतष्टाप् इत्यनेन टापि अनुबन्धलोपे सवर्णदीर्घे याच्ञा इति जायते। ततः अस्मात् आबन्तात् समुदायात् सुविभक्तौ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यनेन सोः

लुकि याच्ञा इति रूपं सिध्यति। याच्धातुः सेट् अस्ति। अतः याच्धातोर्विहितस्य नङः इडागमे प्राप्ते नेड्वशि कृति इति तन्निषेधः।

यतनम् यत्नः इत्यत्र यती प्रयत्ने (भ्वादि. आत्मने.) इति धातोः प्रकृतसूत्रेण भावे नङि विभक्तिकार्ये यत्नः इति रूपम्।

विच्छनम् विश्नः इत्यत्र विच्छ गतौ (तुदादि.परस्मै.) इति धातोः प्रकृतसूत्रेण नङि विच्छ् न इति जाते विच्छधातुः सेट् अस्ति इति कृत्वा इडागमे प्राप्ते नेड्वशि कृति इति तन्ननिषेधः। ततः नङ् इति झलादि ङित् अस्ति इति हेतोः तस्मिन् नङि परतः च्छ्वोः शूडननुनासिके च इत्यनेन सतुकः छकारस्य स्थाने अर्थात् च्छ् इत्यस्य स्थाने शकारादेशे विश् न इति जायते। ततः नङः आर्धधातुकत्वात् पुगन्तलघूपधस्य च इति प्राप्तस्य लघूपधगुणस्य क्ङिति च इत्यनेन निषेधः। तथा च स्तोः श्चुना श्चुः इति प्राप्तस्य श्चुत्वस्य शात् इति सूत्रेण निषेधः। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ विश्नः इति रूपं सिध्यति।

{सूत्रम्. **शात्** (८.४.४४) = शात्परस्य तवर्गस्य चुत्व न स्यात्।}

प्रच्छनम् प्रश्नः इत्यत्र प्रच्छ ज्ञीप्सायाम् (तुदादि.परस्मै.) इति धातोः प्रकृतसूत्रेण नङि प्रच्छ् न इति जाते प्रच्छधातोः अनिट्त्वात् नेट्। ततः नङ् इति झलादि ङित् अस्ति इति हेतोः तस्मिन् नङि परतः च्छ्वोः शूडननुनासिके च इत्यनेन च्छ् इत्यस्य स्थाने शकारादेशे प्रश् न इति जायते। ततः नङः ङित्त्वात् ग्रहिज्यादिसूत्रेण प्राप्तस्य सम्प्रसारणस्य प्रश्ने चासन्नकाले इत्यद्याचार्यनिर्देशात् निषेधः। ततः स्तोः श्चुना श्चुः इति प्राप्तस्य श्चुत्वस्य शात् इति सूत्रेण निषेधः। ततः प्रश्न इत्यस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ प्रश्नः इति रूपं सिध्यति।

रक्षणम् रक्ष्णः इत्यत्र रक्ष पालने (भ्वादि.परस्मै.) इति धातोः प्रकृतसूत्रेण नङि रक्ष् न इति जाते रक्ष् -धातोः अनिट्त्वात् नेट्। ततः नकारस्य रषाभ्यां नो णः समानपदे इति णत्वे विभक्तिकार्ये रक्ष्णः इति रूपं सिध्यति।

## [२१.१२] उपसर्गे घोः किः॥ (३.३.९२)

**सूत्रार्थः** - उपसर्गे उपपदे घुसंज्ञकधातोः किप्रत्ययः स्यात् भावे संज्ञाविषयककर्तृभिन्नकारके च।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण किप्रत्ययो विधीयते। उपसर्गे (७/१) घोः (५/१) किः (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। उपसर्गे इति सप्तम्यन्तम् अतः तत्रोपपदं सप्तमीस्थम् इत्यनुसारम् उपपदम् भवति। दाधाघ्वदाप् इत्यनेन दाधातोः धाधातोश्च घुसंज्ञा विधीयते। सूत्रार्थस्तावत् - भावार्थे संज्ञाविषयककर्तृभिन्नकारकार्थे च उपसर्गे उपपदे घुसंज्ञकाभ्याम् दाधाधातुभ्याम् किप्रत्ययः परे स्यात्। केः ककारः लशक्वतद्धिते इत्यनेन इत्संज्ञकः। तेन इकारमात्रम् शिष्यते। ककारानुबन्धः आतो लोप इटि च इति धातोः आकारलोपार्थः।

**उदाहरणम्** - उपाधिः।

**सूत्रार्थसमन्वयः** - उपाधीयते अनेन इति उपाधिः। अत्र उप - आङ् इति उपसर्गद्वयपूर्वकः डुधाञ् धारणपोषणयोः (जुहोत्यादि. उभय. अनिट्) इति धातुः अस्ति। अस्माद्धातोः करणकारकविवक्षायाम् प्रकृतसूत्रेण किप्रत्यये अनुबन्धलोपे उप आ धा इ इति जायते आतो लोप इटि च इत्यनेन धातोः आकारस्य लोपे उप आ ध् इ इति जाते उपपदमतिङ् इति उपपदसमासे समासत्वात् कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञायाम् सुप्रत्यये उपाधिः इति रूपम् सिध्यति। क्यन्तो घुः (लिङ्गानुशासनम् - ४१) इत्यनुसारम् किप्रत्ययान्तशब्दः पुंलिङ्गको भवति।

विधानम् विधिः इत्यत्र भावे वि -उपसर्गपूर्वकात् धाधातोः किप्रत्ययः। विधीयते विधिः इत्यत्र कर्मणि किप्रत्ययः। विधत्ते विधिः इत्यत्र यद्यपि कर्तरि निषेधोऽस्ति तथापि बहुलग्रहणात् कर्तरि किप्रत्ययो भवति।

सन्धानम् सन्धिः इत्यत्र सम्पूर्वकात् धाधातोः किप्रत्ययो भावे।

## पाठगतप्रश्नाः -२

११. कः भावः।

१२. भावे कर्तृभिन्नकारके च कः कृत्प्रत्ययः भवति।

१३. घञि च भावकरणयोः इति सूत्रेण किं विधीयते।

१४. चयः इत्यत्र कः कृत्प्रत्ययः केन च।

१५. ऋदोरप् इत्यस्य कोऽर्थः।

१६. प्रश्नः इत्यत्र कः प्रत्ययः केन।

१७. उपसर्गे घोः किः इत्यस्य कोर्थः।

१८. उपसर्गे घोः किः इत्यस्य उदाहरणम् किम्।

---

इतः परम् स्त्रियाम् इत्यधिकारे पठितानाम् कृत्प्रत्ययानाम् आलोचना आरभ्यते। तत्र च क्तिन् इति मुख्यम् सूत्रम् आदावेव प्रारभ्यते -

## [२९.१३] स्त्रियां क्तिन्॥ (३.३.९४)

**सूत्रार्थः** - स्त्रीलिङ्गे भावे क्तिन् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण क्तिन्प्रत्ययो विधीयते। स्त्रियाम् (७/१) क्तिन् (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। सूत्रार्थस्तावत् - स्त्रीत्वविशिष्टे भावार्थे संज्ञाविषयककर्तृभिन्नकारकार्थे च धातोः परः कृत्संज्ञकः क्तिन् प्रत्ययो भवति। क्तिनः

ककारनकारौ इतौ। तेन तिमात्रम् शिष्यते। नकारानुबन्धः स्वरार्थः। ककारानुबन्धः गुणनिषेधः, अनुनासिकलोपः, सम्प्रसारणम् इत्यादिकार्यार्थः। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति। भावे इति सूत्रम् सामान्यतः भावार्थे घञ्प्रत्ययस्य विधानं करोति परन्तु स्त्रीत्वविशिष्टे भावे प्रत्ययविधानम् अनेन क्रियते इत्येवम् अयम् क्तिन्प्रत्ययः घञपवादो भवति। यद्यपि एरच् ऋदोरप् इत्युभाभ्याम् विधीयमानौ प्रत्ययौ विशेषधातुविहितत्वात् घञपवादौ भवतः तथापि विप्रतिषेधन्यायेन तौ अपि बाधते अयम् प्रत्ययः।

**उदाहरणम्** - कृतिः। स्तुतिः

**सूत्रार्थसमन्वयः** - करणम् कृतिः इत्यत्र डुकृञ् करणे (तनादि. उभय) इति धातोः प्रकृतसूत्रेण क्तिन्प्रत्यये अनुबन्धलोपे कृ ति इति जाते कृधातोः अनिट्त्वात् नेट्। क्तिनः आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन प्राप्तस्य गुणस्य क्तिनः कित्त्वात् क्ङिति च इति निषेधः। ततः कृति इति समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ मतिशब्दरूपवत् प्रक्रियया कृतिः इति रूपं सिध्यति। क्तिन्नन्तशब्दः क्तिन्नन्तः (लिङ्गानुशासनम् - ९) इत्यनेन स्त्रीलिङ्गको भवति। ष्टुञ् स्तुतौ (अदादि. उभय) इति धातोः क्तिन्प्रत्यये स्तुतिः इति रूपम् भवति। प्रक्रिया तु पूर्ववत् ज्ञेया। एवम् अन्यत्रापि। सेट्धातुभ्यः विहितस्य क्तिनः इडागमो न भवति तितुत्रतथसिसुसरकसेषु च इति निषेधात्। यथा दीप्धातोः क्तिनि दीप्तिः इति रूपम्।

इदानीम् अप्रत्ययविधायकम् सूत्रमिदमारभ्यते -

## [२९.१४] अ प्रत्ययात्॥ (३.३.१०२)

**सूत्रार्थः** - प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अ -प्रत्ययो विधीयते। अः (१/१) प्रत्ययात् (५/१) इति सूत्रगतपदच्छेदः। अ इत्यत्र लुप्तविभक्तिको निर्देशः। स्त्रियां क्तिन् इत्यतः स्त्रियाम् (७/१) इति पदमनुवर्तते। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। प्रत्ययात् इति धातोः विशेषणमस्ति इति हेतोः तदन्तविधौ प्रत्ययान्ताद् धातोः इत्यर्थलाभः। सूत्रार्थस्तावत् - प्रत्ययान्ताद् धातोः अ इति प्रत्ययः स्यात् स्त्रीत्वविशिष्टे भावार्थे संज्ञाविषयककर्तृभिन्नकारकार्थे च। यदा कस्माच्चित् धातोः सन् -यङादिप्रत्ययो भवति अथवा कस्माच्चित् प्रातिपदिकात् काम्यजादिप्रत्ययो भवति तदा सनाद्यन्ता धातवः इत्यनेन धातुसंज्ञा भवति। ततः तस्मात् धातोः स्त्रीत्वविशिष्टे भावार्थे संज्ञाविषयककर्तृभिन्नकारकार्थे च प्रकृतसूत्रेण अप्रत्ययो भवति। अयं प्रत्ययः क्तिन्प्रत्ययस्य अपवादः। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति।

**उदाहरणम्** - चिकीर्षा।

**सूत्रार्थसमन्वयः** - कर्तुमिच्छा चिकीर्षा इत्यत्र डुकृञ् करणे (तनादि. उभय) इति धातोः सनि प्रक्रियया चिकीर्ष इति जायते। ततः अस्य समुदायस्य सनाद्यन्ता धातवः इत्यनेन धातुसंज्ञा भवति। ततः सन्प्रत्ययान्तात् चिकीर्ष इति धातोः स्त्रीत्वविशिष्टाभावार्थे प्रकृतसूत्रेण चिकीर्ष अ इति जाते अप्रत्ययस्य



आर्धधातुकं शेषः इत्यनेन आर्धधातुकसंज्ञायाम् अतो लोपः इति सन अकारलोपे चिकीर्ष् अ इति जायते। पुनः स्त्रीत्वविवक्षायाम् अजाद्यतष्टाप् इति टापि अनुबन्धलोपे सवर्णदीर्घे चिकीर्षा इति आबन्तशब्दात् ङ्याप्प्रातिपदिकात् इत्यधिकारसूत्रसहयोगेन प्रथमैकवचने सुप्रत्यये अनुबन्धलोपे अपृक्तसकारस्य हल्ङ्यादिसूत्रेण लोपे चिकीर्षा इति रूपं सिध्यति। एवमेव पठितुम् इच्छा पिपठिषा इत्यादिरूपं सिध्यति।

{सूत्रम्. **अतो लोपः** (६.४.४८) = आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके।}

अप्रत्ययविधायकम् अन्यदपि सूत्रम् प्रारभ्यते -

## [२९.१५] गुरोश्च हलः॥ (३.३.१०३)

**सूत्रार्थः** - गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण अप्रत्ययो विधीयते। गुरोः (५/१) च (अव्ययम्) हलः (५/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम् इति सूत्राणि अधिकृतानि। अ प्रत्ययात् इत्यतः अ (१/१) इति पदम् अनुवर्तते। हलः इति धातोः विशेषणमस्ति। अतः तदन्तविधौ हलन्तात् धातोः इत्यर्थलाभः। गुरोः इत्यपि धातोः विशेषणमस्ति। परन्तु तदन्तविधिर्नभवति यतो हि हलन्तधातुः कदापि गुर्वन्तो न भवति। अतः गुरुमतः इति मत्वर्थीयवत् प्रयोगः। गुरु अस्य अस्तीति गुरुमान्। संयोगे गुरु, दीर्घञ्च इत्याभ्याम् सूत्राभ्याम् गुरुसंज्ञा भवति। गुरुसंज्ञकः वर्णः यस्मिन् धातौ वर्तते स धातुः गुरुमान् भवति। सूत्रार्थो हि - हलन्तात् गुरुसंज्ञकवर्णयुक्तात् धातोः परे अप्रत्ययो भवति स्त्रीत्वविशिष्टे भावार्थे संज्ञाविषयककर्तृभिन्नकारकार्थे च। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति। अयं योगः क्तिन्प्रत्ययस्य अपवादः।

**उदाहरणम्** - ईहा।

**सूत्रार्थसमन्वयः** - ईह् चेष्टायाम् इति धातुः गुरुमान् अस्ति। हलन्तोऽपि अस्ति। अतः स्त्रीत्वविशिष्टभावार्थे प्रकृतसूत्रेण अप्रत्यये ईह् अ इति कृदन्तसमुदायो जाते। पुनः स्त्रीत्वविवक्षायाम् अजाद्यतष्टाप् इति टापि अनुबन्धलोपे सवर्णदीर्घे ईहा इति आबन्तशब्दात् प्रथमैकवचने सुप्रत्यये अनुबन्धलोपे अपृक्तसकारस्य हल्ङ्यादिसूत्रेण लोपे ईहा इति रूपं सिध्यति।

डुकृञ् करणे (तनादि. उभय. अनिट्) इति धातोः हेतुमति च इति हेतुमण्णिचि अनुबन्धलपे वृद्धौ रपरत्वे कारि इति जाते सनाद्यन्ता धातवः इत्यनेन धातुसंज्ञायाम् प्रत्ययान्तत्वात् स्त्रीत्वविशिष्टभावार्थे अ प्रत्ययात् इत्यनेन अप्रत्यये प्राप्ते सूत्रमिदमारभ्यते -

## [२९.१६] ण्यासश्रन्थो युच्॥ (३.३.१०७)

**सूत्रार्थः** - ण्यन्तात् धातोः आस्धातोः श्रन्थ्धातोश्च युच् -प्रत्ययः स्यात् स्त्रीत्वविशिष्टे भावार्थे संज्ञाविषयककर्तृभिन्नकारकार्थे च।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण युच्प्रत्ययो विधीयते। ण्यासश्रन्थः (५/१) युच् (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम् इति सूत्राणि अधिकृतानि। ण्यासश्रन्थः इति धातोः विशेषणमस्ति। णि (णिच् णिङ्) इति प्रत्ययोऽस्ति। अतः तदन्तविधौ ण्यन्ताद् धातोः इत्यर्थलाभः। आस्, श्रन्थ् इति धातू स्तः। सूत्रार्थस्तावत् ण्यन्ताद् धातोः आस्धातोः श्रन्थ्धातोश्च परे युच्प्रत्ययः स्यात् स्त्रीत्वविशिष्टे भावार्थे संज्ञाविषयककर्तृभिन्नकारकार्थे च। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति। युचः चकारः इत्संज्ञकः हलन्त्यम् इत्यनेन। चकारानुबन्धः चितः इति अन्तोदात्तस्वरार्थः। अत्र स्वार्थिकणिच् हेतुमुण्णिच् इति उभयमि इष्टमस्ति। ण्यन्तधातुभ्यः अ प्रत्ययात् इति प्राप्तस्य अप्रत्ययस्य, आस्धातोः श्रन्थधातोः च गुरोश्च हलः इति प्राप्तस्य अप्रत्ययस्य बाधकोऽयम् योगः।

**उदाहरणम्** - कारणा। हारणा।

**सूत्रार्थसमन्वयः** - पूर्वोक्तप्रकारेण कारि इति धातोः अप्रत्यये प्राप्ते तम् अपवादत्वेन प्रकृतसूत्रेण प्रबाध्य युचि अनुबन्धलोपे युवोरनाकौ इत्यनेन योः स्थाने अनादेशे कारि अन इति जाते णेरनिटि इति णेर्लोपे कार् अन इति जाते अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन नकारस्य णकारादेशे अजाद्यतष्टाप् इत्यनेन टापि अनुबन्धलोपे सवर्णदीर्घे कारणा इति जायते। ततः अस्य समुदायस्य आबन्तत्वात् सुप्रत्यये हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इत्यनेन सोर्लुकि कारणा इति रूपम् जायते। एवमेव हृधातोः प्रक्रियया हारणा इति रूपम् सिध्यति।

अधुना भावार्थकक्तप्रत्ययः निरूप्यते -

## [२१.१७] नपुंसके भावे क्तः॥ (३.३.११४)

**सूत्रार्थः** - क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण क्तप्रत्ययो विधीयते। नपुंसके (७/१) भावे (७/१) क्तः (१/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे इत्यनेन भावसामान्ये घञः विधानम्, स्त्रियां क्तिन् इत्यनेन स्त्रीत्वविशिष्टभावे क्तिनः विधानम् भवति। अतः पारिशेष्यात् पुंस्त्वविशिष्टभावे घञः विधानम् क्रियते सूत्रेणानेन। इतः पूर्वम् निष्ठाप्रत्ययविधायकस्थले भावार्थे क्तप्रत्ययस्य विधानम् कृतमस्ति। किन्तु तद् भूतकालविशिष्टभावे विहितम्। अत्र कालसामान्ये क्तप्रत्ययस्य विधानम् कृतमस्ति इति अस्ति विशेषोऽत्र। सूत्रार्थस्तावत् - नपुंसकत्वविशिष्टे भावार्थे कालसामान्ये धातोः परः क्तप्रत्ययः स्यात्। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकोऽपि भवति। क्तप्रत्ययस्य ककारः इत्संज्ञकः लशक्वतद्धिते इत्यनेन।

**उदाहरणम्** - हसितम्।

**सूत्रार्थसमन्वयः** - हसितम् इत्यत्र हस हसने (भ्वादि. परस्मै. सेट्) इति धातोः नपुंसकत्वविशिष्टे भावार्थे प्रकृतसूत्रेण क्तप्रत्यये अनुबन्धलोपे आर्धधातुकं शेषः इत्यनेन क्तप्रत्ययस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे हसित इति जायते। ततः अस्य

समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ नपुसंकलिङ्गे सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे हसितम् इति रूपं सिध्यति। एवम् अन्यत्रापि।

नपुंसकत्वविशिष्टे भावार्थे ल्युट्प्रत्ययस्यापि विधानाय सूत्रमिदम् प्रारभ्यते -

## [२९.१८] ल्युट् च॥ (३.३.११५)

**सूत्रार्थः** - क्लीबत्वविशिष्टे भावे ल्युट् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् द्विपदम्। अनेन सूत्रेण ल्युट्प्रत्ययो विधीयते। ल्युट् (१/१) च (अव्ययम्) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। नपुसंके भावे क्तः इत्यतः नपुंसके (७/१) भावे (७/१) इत्यनयोः पदयोरनुवृत्तिर्भवति। सूत्रार्थस्तावत् - नपुंसकत्वविशिष्टे भावार्थे धातोः परः ल्युट्प्रत्ययः स्यात्। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकोऽपि भवति। ल्युट्प्रत्ययस्य लकारः इत्संज्ञकः लशक्वतद्धिते इत्यनेन, टकारश्च हलन्त्यम् इत्यनेन। तेन यु -मात्रम् शिष्यते। ल्युटः टकारानुबन्धः टिड्ढाणञादिसूत्रेण ङीब्विधानाय, लकारानुबन्धश्च लिति इति आद्युदात्तस्वरार्थः।

**उदाहरणम्** - हसनम्।

**सूत्रार्थसमन्वयः** - हसनम् इत्यत्र हस हसने (भ्वादि. परस्मै. सेट्) इति धातोः नपुसंकभावे प्रकृतसूत्रेण ल्युट्प्रत्यये अनुबन्धलोपे हस् यु इति जायते। ततः यु इत्यस्य स्थाने युवोरनाकौ इत्यनेन अन इत्यादेशे हस् अन इति जायते। अस्य च समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा। ततः भावे ल्युडन्तः (लिङ्गानुशासनम् - ११९) इति वचनेन भावार्थे विहितः ल्युडन्तः शब्दः नपुंसकलिङ्गे प्रयुक्तो भवति तस्मात् नपुसंकलिङ्गे सुविभक्तौ सोरमादेशे अमि पूर्वः इति पूर्वरूपैकादेशे हसनम् इति रूपं सिध्यति। एवम् अन्यत्रापि।

## [२९.१९] हलश्च॥ (३.३.१२१)

**सूत्रार्थः** - हलन्ताद्घञ्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण घञ्प्रत्ययो विधीयते। हलः (५/१) च (अव्ययम्) इति सूत्रगतपदच्छेदः। करणाधिकरणयोश्च इत्यतः करणाधिकरणयोः (७/२) इति पदमनुवर्तते। अवे स्तॄस्त्रोर्घञ् इत्यतः घञ् (१/१) इति पदमनुवर्तते। पुंसि (७/१) संज्ञायाम् (७/१) घः (१/१) प्रायेण (३/१) इति पदमनुवर्तते। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। हलः इति धातोः विशेषणम् अस्ति। तेन तदन्तविधौ हलन्तात् धातोः इत्यर्थलाभः। सूत्रार्थस्तावत् - करणकारके अधिकरणकारके हलन्तात् धातोः घञ्प्रत्ययः परो भवति पुंस्त्वविशिष्टसंज्ञायाम् वाच्यायाम्। पुंसि संज्ञायाम् घः प्रायेण इति सूत्रेण प्राप्तस्य घप्रत्ययस्य अपवादोऽयं घप्रत्ययः। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति।

**उदाहरणम् -** रमन्ते योगिनोऽस्मिन्निति रामः (दशरथनामधेयम्) अथवा रमते लोकोऽस्मिन्निति रामः दशरथनन्दनः।

**सूत्रार्थसमन्वयः -** रामः इत्यत्र रमु क्रीडायाम् इति हलन्तधातोः (भ्वादि. आत्मने. अनिट्) प्रकृतसूत्रेण अधिकरणकारके घञि अनुबन्धलोपे अत उपधायाः इत्यनेन धातोः उपधावृद्धौ राम इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुविभक्तौ रामः इति रूपं सिध्यति।

## पाठगतप्रश्नाः -३

१९. स्त्रीलिङ्गे भावे कः प्रत्ययः भवति।

२०. स्त्रियां क्तिन् इत्यस्य उदाहरणम् किम्।

२१. अ प्रत्ययात् इत्यस्य कोऽर्थः।

२२. गुरोश्च हलः इत्यस्य कोऽर्थः।

२३. ण्यासश्रन्थो युच् इत्यस्य कोऽर्थः।

२४. नपुंसके भावे क्तः इत्यस्य कोऽर्थः।

२५. ल्युट् च इत्यस्य कोऽर्थः।

२६. हलन्तात् धातोः घञ्प्रत्ययविधायकम् सूत्रम् किम्।

२७. चिकीर्षा इत्यत्र कः कृत्प्रत्ययः।

२८. कारणा, हारणा इत्यादौ कः कृत्प्रत्ययः।

२९. हसितम् इत्यत्र कः कृत्प्रत्ययः केन।

३०. हसनम् इत्यत्र कः कृत्प्रत्ययः केन।

३१. हलश्च इत्यस्य किम् उदाहरणम्।

---

इदानीम् अत्यन्तम् प्रसिद्धस्य क्त्वा -प्रत्ययस्य निरूपणं क्रियते -

## [२९.२०] अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा॥ (३.४.१८)

**सूत्रार्थः -** प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात्।

**सूत्रव्याख्या -** विधिसूत्रमिदम् पदचतुष्टयात्मकम्। अनेन सूत्रेण क्त्वाप्रत्ययो विधीयते। अलंखल्वोः (७/२) प्रतिषेधयोः (७/२) प्राचां (६/१) क्त्वा (१/१) इति सूत्रगतपदच्छेदः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। अलं च खलु च अलंखलू, तयोः अलंखल्वोः इति इतरेतरयोगद्वन्द्वः। अलंखल्वोः इति सप्तम्यन्तम् अस्ति। अतः तत्रोपपदं सप्तमीस्थम् इत्यनुसारम्

उपपदम् अस्ति। सूत्रार्थस्तावत् - प्रतिषेधार्थे वर्तमानयोः अलंखल्वोः उपपदयोः धातोः परः क्त्वाप्रत्ययः स्यात् इति। अयं च अर्थः प्राचीनैः आचार्यैः आविष्कृतः, तेषां सम्मानाय सूत्रे आचार्येण पाणिनिना प्राचांग्रहणम् कृतम्। क्त्वा इत्यत्र ककारस्य इत्संज्ञा लशक्वतद्धिते इत्यनेन। तेन त्वा इत्येव शिष्यते। ककारानुबन्धः गुणवृद्धिनिषेधसम्प्रसारणादिकार्यार्थः। क्त्वातोसुन्क्वसुनः इत्यनेन क्त्वान्तस्य अव्ययसंज्ञा, किञ्च क्त्वाप्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः अपि। अव्ययकृतो भावे इत्यनेन अयम् प्रत्ययः भावे भवति।

**उदाहरणम् -** अलं दत्त्वा। पीत्वा खलु।

**सूत्रार्थसमन्वयः -** अलं दत्त्वा इति उदाहरणे अलम् इति निषेधार्थकम् अव्ययम् उपपदम् अस्ति। अतः डुदाञ् दाने (जुहोत्यादि. उभय. अनिट्) इति धातोः प्रकृतसूत्रेण भावे क्त्वाप्रत्यये अनुबन्धलोपे धातोः अनुदात्तत्वात् इण्निषेधे दो दद्घोः इत्यनेन दा इत्यस्य स्थाने दथ् इति सर्वादेशे खरि च इत्यनेन चर्त्वे अलम् दत्त्वा इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायाम् औत्सर्गिके प्रथमैकवचने सुविभक्तिर्भवति। क्त्वातोसुन्क्वसुनः इत्यनेन क्त्वान्तस्य अव्ययसंज्ञायाम् अव्ययादाप्सुपः इत्यनेन सोः लुक् किञ्च अव्ययत्वात् अलम् इत्यस्य पदान्तमकारस्य मोऽनुस्वारः इत्यनेन अनुस्वारे अलं दत्त्वा इति प्रयोगो भवति।

पीत्वा खलु इति उदाहरणे अलम् इति निषेधार्थकम् अव्ययम् उपपदम् अस्ति। अतः पा पाने (भ्वादि. परस्मै. अनिट्) इति धातोः प्रकृतसूत्रेण भावे क्त्वाप्रत्यये अनुबन्धलोपे धातोः अनुदात्तत्वात् इण्निषेधो भवति। ततः हलादिः कित् आर्धधातुकक्त्वाप्रत्ययः परोऽस्तीति कृत्वा घुमास्थागापाजहातिसां हलि इति सूत्रेण पा इत्यस्य आकारस्य स्थाने ईकारादेशे पूर्ववत् विभक्तिकार्ये पीत्वा खलु इति प्रयोगः सिध्यति।

अधुना क्त्वाप्रत्ययविधायकम् अतीव प्रसिद्धं सूत्रम् आरभ्यते -

## [२९.२१] समानकर्तृकयोः पूर्वकाले॥ (३.४.२१)

**सूत्रार्थः -** समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्।

**सूत्रव्याख्या -** विधिसूत्रमिदम् पदद्वयात्मकम्। अनेन सूत्रेण क्त्वाप्रत्ययो विधीयते। समानकर्तृकयोः (६/२ -निर्धारणे षष्ठी/सप्तमी) पूर्वकाले (७/१) इति सूत्रगतपदानां विभक्तिनिर्देशः। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा इत्यतः क्त्वा (१/१) इत्यस्य अनुवृत्तिर्भवति। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। भावे, अकर्तरि च कारके संज्ञायाम् इत्युभयमपि सूत्रमनुवर्तते। समानः कर्ता ययोः तौ समानकर्तृकौ तयोः समानकर्तृकयोः इति बहुव्रीहिसमासः। पूर्वश्चासौ कालः पूर्वकालः। सूत्रे अधिकृतस्य धातोः इत्यस्य धात्वर्थः इत्यर्थः। ततः धात्वर्थेन सह समानकर्तृकयोः, पूर्वकाले इत्यनयोः सम्बन्धः भवति। सूत्रार्थस्तावत् - समानकर्तृकयोः धात्वर्थयोः यः धात्वर्थः पूर्वकाले वर्तमानः तद्वाचकात् धातोः परः क्त्वाप्रत्ययः स्यात्। अनेन सूत्रेण विहितः प्रत्ययः कृदतिङ् इत्यनेन कृत्संज्ञकः भवति।

**उदाहरणम् -** भुक्त्वा व्रजति।

**सूत्रार्थसमन्वयः -** भुक्त्वा व्रजति इत्यत्र भोजनक्रिया गमनक्रिया चेति क्रियाद्वयमस्ति। तत्र च भोजनक्रिया पूर्वकालिका यतो हि कर्ता आदौ ताम् क्रियां करोति। अतः पूर्वकालिकभोजनक्रियावाचकात् भुज्धातोः (भुज पालनालव्यवहारयोः रुधादि. परस्मै. अनिट्) प्रकृतसूत्रेण क्त्वाप्रत्यये अनुबन्धलोपे चोः कुः इत्यनेन जकारस्य गकारे खरि च इत्यनेन गकारस्य ककारे भुक्त्वा इति जायते। ततः भुक्त्वा इत्यस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां औत्सर्गिके प्रथमैकवचने सौ तस्य च लुकि भुक्त्वा इति रूपम् सिध्यति। क्त्वाप्रत्ययः वलादिः आर्धधातुकः प्रत्ययः। अतः इडागमः लघूपधगुणश्च प्राप्तः। तत्र इटः एकाच उपदेशेऽनुदात्तात् इति निषेधः। क्त्वः कित्त्वात् क्ङिति च इति गुणनिषेधः। यत्र च अनेके धात्वर्थाः सन्ति। तत्रापि ये तावत् पूर्वकालिकाः धात्वर्थाः तद्वाचकेभ्यः धातुभ्यः क्त्वाप्रत्ययः भवति। तेन भुक्त्वा पीत्वा व्रजति इत्यादिप्रयोगाः सिध्यन्ति।

समासे क्त्वः स्थाने ल्यबादेशं विधातुम् सूत्रमिदमारभ्यते -

## [२१.२२] समासेऽनञ्पूर्वे क्त्वो ल्यप्॥ (७.१.३७)

**सूत्रार्थः -** अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात्।

**सूत्रव्याख्या -** विधिसूत्रमिदम् पदचतुष्टयात्मकम्। अनेन सूत्रेण ल्यप् इत्यादेशो विधीयते। समासे (७/१) अनञ्पूर्वे (७/१) क्त्वः (६/१) ल्यप् (१/१) इति सूत्रगतपदच्छेदः। न नञ् अनञ् इति नञ्तत्पुरुषसमासः। अनञ् पूर्वम् (पूर्वपदम्) यस्मिन् सः अनञ्पूर्वः। तस्मिन् अनञ्पूर्वे इति बहुव्रीहिसमासः। अनञ्पूर्वे इति समासे इत्यस्य विशेषणमस्ति। अनञ् इति पर्युदासप्रतिषेधः। पर्युदासः सदृशग्राही। अतः नञ् इत्यनेन तद्भिन्नतत्सदृशस्यैव ग्रहणम्। नञ् इति अव्ययम्। तेन अनञ् इत्यनेन नञ्भिन्ननञ्सदृशस्यैव कस्यापि भिन्नस्य अव्ययस्य ग्रहणम् भवति। सूत्रार्थस्तावत् - यस्मिन् समासे नञ्भिन्ननञ्सदृशम् भिन्नम् कश्चित् अव्ययम् पूर्वपदम् भवति तस्मिन् समासे उत्तरपदस्थस्य क्त्वः स्थाने ल्यप् इत्यादेशो भवति। क्त्वा आर्धधातुकः कित्प्रत्ययोऽस्ति। अतः तस्य स्थाने विधीयमानः ल्यबादेशोऽपि स्थानिवदादेशोऽनल्विधौ इत्यनेन प्रत्ययः, कित्, आर्धधातुकः चास्ति। क्त्वातोसुन्क्वसुनः इत्यनेन क्त्वान्तस्य अव्ययसंज्ञा, अतः ल्यबन्तस्यापि अव्ययसंज्ञास्ति। ल्यपः प्रत्ययसंज्ञकत्वात् लशक्वतद्धिते इत्यनेन लकारस्य इत्संज्ञा, पकारस्य हलन्त्यम् इत्यनेन। तेन य -मात्रम् शिष्यते। ल्यपः अनेकाल्त्वात् अनेकाल्शित्सर्वस्य इत्येनन सर्वादेशः। पकारानुबन्धः पित्कार्यार्थः। लकारानुबन्धः लिति इति आद्युदात्तस्वरार्थः।

**उदाहरणम् -** प्रकृत्य।

**सूत्रार्थसमन्वयः -** (प्रकर्षेण कृत्वा) प्रकृत्य इत्यत्र डुकृञ् करणे (तनादि. उभय. अनिट्) इति धातोः पूर्वकाले समानकर्तृकयोः पूर्वकाले इत्यनेन क्त्वाप्रत्यय अनुबन्धलोपे क्त्वः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् इति तन्निषेधे कित्त्वात् आर्धधातुकगुणस्यापि निषेधे कृ त्वा इति जायते। ततः प्र इत्यव्ययेन सह कृत्वा इत्यस्य कुगतिप्रादयः इत्यनेन प्रादिसमासः। समासे प्र कृत्वा इत्यत्र प्र इति अव्ययम्। तच्च नञः भिन्नम्। अतः उत्तरदस्थस्य

क्त्वः स्थाने ल्यबादेशे अनुबन्धलोपे प्र कृ य इति जाते ह्रस्वस्य पिति कृति तुक् इत्यनेन तुगागमे अनुबन्धलोपे कित्त्वात् आद्यन्तौ टकितौ इति परिभाषया अन्त्यावयवे प्र कृ त् य इति जायते। अस्य च समुदायस्य समासत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायाम् औत्सर्गिके प्रथमैकवचने सुविभक्तौ ल्यबन्तस्य अव्ययसंज्ञकत्वात् अव्ययादाप्सुपः इत्यनेन सोः लुकि प्रकृत्य इति रूपं सिध्यति।

**अत्र विशेषः** - धातुना सह यदा उपसर्गयोगो भवति तदा ल्यप्प्रत्ययः। केवलात् धातोस्तु क्त्वाप्रत्ययः इत्यस्ति विशेषः अत्र।

णमुल्प्रत्ययविधायकम् अग्रिमम् सूत्रम् प्रारभ्यते -

## [२९.२३] आभीक्ष्ण्ये णमुल् च॥ (३.४.२२)

**सूत्रार्थः** - आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च॥

**सूत्रव्याख्या** - विधिसूत्रमिदम् पदत्रयात्मकम्। अनेन सूत्रेण णमुल्प्रत्ययो विधीयते। आभीक्ष्ण्ये (७/१) णमुल् (१/१) च ( अव्ययम्) इति सूत्रगतपदानां विभक्तिनिर्देशः। प्रत्ययः (१/१), परः (१/१), धातोः (५/१) इति त्रयम् अधिकृतम्। समानकर्तृकयोः (७/२) पूर्वकाले (७/१) इति सूत्रमनुवर्तते। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा इत्यतः क्त्वा (१/१) इति पदमनुवर्तते। अनेन सूत्रेण विहितः प्रत्ययः कृत्संज्ञकः भवति। अभीक्ष्णम् पुनः पुनः। अभीक्ष्णम् इत्यस्य भावः आभीक्ष्ण्यम् पौनःपुन्यम्। पौनःपुन्ये द्योत्ये समानकर्तृकयोः धात्वर्थयोः यः धात्वर्थः पूर्वकाले वर्तमानो भवति तद्वाचकात् धातोः परे णमुल्प्रत्ययः क्त्वाप्रत्ययः च स्यात्। णमुलः लकारः हलन्त्यम् इत्यनेन इत्संज्ञकः, णकारश्च चुटू इत्यनेन। उकारश्च उच्चारणार्थः। तेन अम् -मात्रम् शिष्यते। णकारानुबन्धः वृद्धियुगागमाद्यर्थः। लकारानुबन्धः लिति इति उदात्तस्वरार्थः।

**उदाहरणम्** - स्मारम् स्मारम् नमति शिवम्। अत्र स्मृ चिन्तायाम् (भ्वादि. परस्मै. अनिट्) इति धातुः, नम् (णम प्रह्वत्वे शब्दे च, भ्वादि. परस्मै. अनिट्) इति धातुः चेति उभौ अपि समानकर्तृकौ। अत्र स्मृधात्वर्थः स्मरणम् पूर्वकालिकमस्ति। किञ्च स्मृधात्वर्थस्य पौनःपुन्यमपि द्योत्यमस्ति। अतः प्रकृतसूत्रेण स्मृधातोः पर्यायेण णमुल् क्त्वा च प्रत्ययौ भवतः। णमुल्पक्षे अनुबन्धलोपे स्मृ अम् इति जाते णमुलः णित्त्वात् अचो ञ्णिति इत्यनेन अजन्ताङ्गस्य वृद्धौ स्मारम् इति जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा। ततः कृन्मेजन्तः इत्यनेन अव्ययसंज्ञायाम् औत्सर्गिके एकवचने सुप्रत्यये अव्ययादाप्सुपः इत्यनेन सोः लुकि स्मारम् इति रूपम् भवति। तच्च पदसंज्ञकम् अस्ति। ततः अस्य कृदन्तस्य द्वित्वार्थम् अग्रिमसूत्रमारभ्यते -

## [२९.२४] नित्यवीप्सयोः॥ (८.१.४)

**सूत्रार्थः** - आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम् एकपदात्मकम्। अनेन सूत्रेण द्वित्वम् विधीयते। नित्यवीप्सयोः इति सप्तमीद्विवचनान्तम्। पदस्य (६/१) इति अधिकारसूत्रम् अपकृष्यते। सर्वस्य (६/१) द्वे (१/२) इति

सूत्रमधिक्रियते। नित्यं च वीप्सा च नित्यवीप्से तयोः नित्यवीप्सयोः इति इतरेतरयोगद्वन्द्वः। अत्र नित्यशब्दस्य पौनःपुन्यम् अर्थः। व्याप्तुम् इच्छा वीप्सा। केनचित् गुणेन कयाचित् क्रियया वा अनेकान् अर्थान् व्याप्य विवक्षा अस्ति चेत् वीप्सा कथ्यते। नित्यवीप्सयोः अर्थयोः द्योत्ययोः सम्पूर्णस्य पदस्य स्थाने द्वे शब्दरूपे आदेशौ भवतः इति सूत्रार्थः। एतेन तस्य कृदन्तपदस्य द्विः आवृत्तिः भवति।

**उदाहरणम् -** आभीक्ष्ण्यं तिङन्तेषु अव्ययसंज्ञकेषु कृदन्तेषु च एव सम्भवति। पचति पचति। पठति पठति। इति तिङन्तस्य उदाहरणम्। अव्ययसंज्ञककृदन्तस्य उदाहरण्म् - स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा। इति।

**सूत्रार्थसमन्वयः -** पूर्वोक्तप्रकारेण स्मारम् इत्यस्य अव्ययसंज्ञककृदन्तत्वात् स्थानिवद्भावेन पदसंज्ञकत्वात् च नित्यवीप्सयोः इति स्मारम् इत्यस्य द्वित्वे मोऽनुस्वारे स्मारं स्मारं नमति शिवम् इति प्रयोगः सिध्यति।

आभीक्ष्ण्ये णमुल् च इति योगेन णमुला सह क्त्वाप्रत्ययस्यापि विधानम् कृतमस्ति। अतः क्त्वाप्रत्यये स्मृत्वा इत्यस्य अव्ययसंज्ञकपदत्वात् प्रकृतसूत्रेण द्वित्वे स्मृत्वा स्मृत्वा नमति शिवम् इति प्रयोगोऽपि भवति। एवमन्यत्रापि।

## पाठगतप्रश्नाः -४

३२. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा इति सूत्रेण कः कृत्प्रत्ययो विधीयते।

३३. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा इति सूत्रे प्राचांग्रहणम् विकल्पार्थम् पूज्यार्थम् वा।

३४. समानकर्तृकयोः पूर्वकाले इत्यस्य कोऽर्थः।

३५. क्ता -प्रत्ययस्य स्थाने ल्यबादेशविधायकम् सूत्रम् किम्।

३६. आभीक्ष्ण्ये णमुल् च इत्यस्य कोऽर्थः।

३७. नित्यवीप्सयोः इति सूत्रेण किं विधीयते।

३८. आभीक्ष्ण्ये णमुल् च इत्यस्य किम् उदाहरणम्।

## पाठसारः

अस्मिन् पाठे तुमुन्प्रत्ययः कस्मिन्नर्थे विधीयते इत्येतत्सम्बन्धिनी चर्चा आदौ विहिता। तुमुन्प्रत्ययविषये पञ्च सूत्राणि सोदाहरणं व्याख्यातानि। ततः भावार्थे घञ्प्रत्ययः कथं विधीयते इत्युक्तम्। तदनन्तरम् अच् -अप् -नङ् -कि इत्येते प्रत्ययाः ससूत्रं व्याख्याताः। तदनु स्त्रीत्वविशिष्टे भावे कर्तृभिन्नकारके च क्तिन् -अ -युच् इत्यादीनाम् प्रत्ययानाम् प्रयोगः कथं भवति इति सविस्तरम् चर्चितम्।

भावेऽपि क्तप्रत्ययो भवति इति कथितम्। ततः प्रकृत्य इति उदाहरणपुरस्सरम् क्त्वाल्यप्प्रत्ययविषयिणी चर्चा विहिता। किञ्च अन्ते स्मारम् स्मारम् नमति शिवम् इत्यत्र कथं णमुल्प्रत्ययो भवतीति प्रदर्शितम्।

## पाठान्तप्रश्नाः

१. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इति सूत्रं सोदाहरणं व्याख्यात।

२. शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् इति सूत्रं सोदाहरणं व्याख्यात।

३. तुमन्प्रत्ययविषये लघुप्रबन्धो लेख्यः।

४. भावे घञ्प्रत्ययविषये लघुप्रबन्धो लेख्यः।

५. उपसर्गे घोः किः इति सूत्रं सोदाहरणं व्याख्यात।

६. अ प्रत्ययात् इति सूत्रं सोदाहरणं व्याख्यात।

७. स्त्रियां क्तिन् इति सूत्रं सोदाहरणं व्याख्यात।

८. ण्यासश्रन्थो युच् इति सूत्रं सोदाहरणं व्याख्यात।

९. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा इति सूत्रं सोदाहरणं व्याख्यात।

१०. समानकर्तृकयोः पूर्वकाले इति सूत्रं सोदाहरणं व्याख्यात।

११. समासेऽनञ्पूर्वे क्त्वो ल्यप् इति सूत्रं सोदाहरणं व्याख्यात।

१२. आभीक्ष्ण्ये णमुल् च इति सूत्रं सोदाहरणं व्याख्यात।

१३. कृष्णं द्रष्टुं याति। भोक्तुम् कालः। भोक्तुम् इच्छति। भोक्तुम् शक्नोति। भोक्तुम् पटुः। अत्र वाक्येषु कथं तुमुन्नन्तस्य प्रयोगः।

१४. पाकः, रागः, करः इत्येतेषाम् रूपसिद्धिः कार्या।

१५. उपाधिः इत्यस्य रूपसिद्धिः कार्या।

१६. प्रश्नः इत्यस्य रूपसिद्धिः कार्या।

१७. चिकीर्षा इत्यस्य रूपसिद्धिः कार्या।

१८. कारणा इत्यस्य रूपसिद्धिः कार्या।

१९. हसितम्, हसनम् इत्यनयोः रूपसिद्धिः कार्या।

२०. भुक्त्वा व्रजति इत्यत्र कथं क्त्वाप्रत्ययः।

२१. प्रकृत्य इत्यस्य रूपसिद्धिः कार्या।

२२. स्मारम् स्मारम् नमति शिवम् इत्यत्र स्मारम् स्मारम् इति प्रयोगः कथम्।

## पाठगतप्रश्नोत्तराणि

### उत्तराणि-१

१. क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोः तुमुन्ण्वुलौ स्तः।

२. कालार्थेषु उपपदेषु तुमुन्प्रत्ययः स्यात्।

३. इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात्।

४. पर्याप्तिः पूर्णता। तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात्।

५. कस्याश्चित् क्रियायाः सिद्धौ यदा अपरा क्रिया क्रियते तदा सा क्रिया पूर्वक्रियायाः कियार्था क्रिया इत्युच्यते।

६. कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति।

७. कालः समयो वेला वा भोक्तुम्।

८. इच्छति भोक्तुम्। वष्टि भोक्तुम्। वाञ्छति भोक्तुम्।

९. पूर्णता।

१०. पर्याप्तः, प्रवीणः, कुशलः, पटुः इत्यादयः पर्याप्तिवचनाः सामर्थ्यवचनाः उपपदशब्दाः।

### उत्तराणि-२

११. सिद्धावस्थापन्ना क्रिया भावः।

१२. घञ्।

१३. नलोपः।

१४. एरच् इत्यनेन अच्प्रत्ययः।

१५. ॠवर्णान्तादुवर्णान्ताच्चाप्।

१६. यजयाचयतविच्छप्रच्छरक्षो नङ् इत्यनेन नङ्प्रत्ययः।

१७. उपसर्गे उपपदे घुसंज्ञकधातोः किप्रत्ययः स्यात् भावे संज्ञाविषयककर्तृभिन्नकारके च।

१८. उपाधिः, विधिः, सन्धिः इत्यादीनि।

### उत्तराणि-३

१९. क्तिन्।

२०. कृतिः, स्तुतिः।

२१. प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात्।

२२. गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात्।

२३. ण्यन्तात् धातोः आस्धातोः श्रन्थधातोश्च युच् प्रत्ययः स्यात् स्त्रीत्वविशिष्टे भावार्थे

संज्ञाविषयककर्तृभिन्नकारकार्थे च।

२४. क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्।

२५. क्लीबत्वविशिष्टे भावे ल्युट् स्यात्।

२६. हलश्च।

२७. अ -प्रत्ययः।

२८. युच्।

२९. नपुंसके भावे क्तः इति क्तप्रत्ययः।

३०. ल्युट् च इति ल्युट्प्रत्ययः।

३१. रामः।

**उत्तराणि-४**

३२. क्त्वा।

३३. पूज्यार्थम्।

३४. समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्।

३५. समासेऽनञ्पूर्वे क्त्वो ल्यप्।

३६. पौनःपुन्ये द्योत्ये समानकर्तृकयोः धात्वर्थयोः यः धात्वर्थः पूर्वकाले वर्तमानो भवति तद्वाचकात् धातोः परे णमुल्प्रत्ययः क्त्वाप्रत्ययः च स्यात्।

३७. पदस्य द्वित्वम्।

३८. स्मारम् स्मारम् नमति शिवम्।

।।इति नवविंशः पाठः।।

# एतत्पुस्तकस्थसूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम् - अष्टाध्ययीक्रमः**

[२८.१२] दाम्नीशसयुयुजस्तुतु०॥ (३.२.१८२)
[२७.१६] दो दद्घोः॥ (७.४.४६)
[२६.१] धातोः॥ (३.१.९१)
[२३.१] ध्रुवमपायेऽपादानम्॥ (१.४.२४)
[२३.९] न लोकाव्ययनिष्ठा०॥ (२.३.६८)
[२७.३] नन्दिग्रहिपचादिभ्यो०॥ (३.१.१३४)
[२९.१७] नपुंसके भावे क्तः॥ (३.३.११४)
[२४.६] नमःस्वस्तिस्वाहा०॥ (२.३.१६)
[२९.२४] नित्यवीप्सयोः॥ (८.१.४)
[२७.१०] निष्ठा॥ (३.२.१०२)
[२७.१५] निष्ठायां सेटि॥ (६.४.५२)
[२७.१४] पचो वः॥ (८.२.५२)
[२९.५] पर्याप्तिवचनेष्वलमर्थेषु॥ (३.४.६६)
[२६.१०] पोरदुपधात्॥ (३.१.९८)
[२५.९] प्रसितोत्सुकाभ्यां०॥ (२.३.४४)
[१९.१] प्रातिपदिकार्थलिङ्ग ०॥ (२.३.४६)
[२९.६] भावे॥ (३.३.१८)
[२३.२] भीत्रार्थानां भयहेतुः॥ (१.४.२५)
[२६.१४] मृजेर्विभाषा॥ (३.१.११३)
[२६.१७] मृजेर्वृद्धिः॥ (७.२.११४)
[२८.३] म्वोश्च॥ (८.२.६५)
[२९.११] यजयाचयतविच्छ ०॥ (३.३.९०)
[२५.१२] यतश्च निर्धारणम्॥ (२.३.४१)
[२७.२] युवोरनाकौ॥ (७.१.१)
[२४.४] येनाङ्गविकारः॥ (२.३.२०)
[२७.११] रदाभ्यां निष्ठातो नः०॥ (८.२.४२)
[२२.५] रुच्यर्थानां प्रीयमाणः॥ (१.४.३३)
[२८.४] लटः शतृशानचाव ०॥(३.२.१२४)
[२८.१] लिटः कानज्वा॥ (३.२.१०६)
[२९.१८] ल्युट् च॥ (३.३.११५)
[२६.२] वासरूपोऽस्त्रियाम्॥ (३.१.९४)
[२८.६] विदेः शतुर्वसुः॥ (७.१.३६)
[२९.४] शक-धृष-ज्ञा-ग्ला०॥ (३.४.६५)
[२६.१२] शास इदङ्हलोः॥ (६.४.३४)
[२७.१३] शुषः कः॥ (८.२.५१)
[२५.१] षष्ठी शेषे॥ (२.३.५०)
[२५.३] षष्ठी हेतुप्रयोगे॥ (२.३.२९)
[२५.५] षष्ठ्यतसर्थप्रत्ययेन॥ (२.३.३०)
[२७.१२] संयोगादेरातो०॥ (८.२.४३)
[२८.१०] सनाशंसभिक्ष उः॥ (३.२.१६८)
[२३.११] सप्तम्यधिकरणे च॥ (२.३.३६)
[२९.२१] समानकर्तृकयोः०॥ (३.४.२१)
[२९.३] समानकर्तृकेषु तुमुन्॥ (३.३.१५८)
[२९.२२] समासेऽनञ्पूर्वे क्त्वो०॥ (७.१.३७)
[१९.२] सम्बोधने च॥ (२.३.४७)
[२५.४] सर्वनाम्नस्तृतीया च॥ (२.३.२७)
[२४.५] सहयुक्तेऽप्रधाने॥ (२.३.१९)
[२२.२] साधकतमं करणम्॥ (१.४.४२)
[२५.१०] साधुनिपुणाभ्यामर्चायां०॥ (२.३.४३)
[२९.१३] स्त्रियां क्तिन्॥ (३.३.९४)
[२२.७] स्पृहेरीप्सितः॥ (१.४.३६)
[२२.१] स्वतन्त्रः कर्ता॥ (१.४.५४)
[२५.११] स्वामीश्वराधिपति०॥ (२.३.३९)
[२९.१९] हलश्च॥ (३.३.१२१)
[२६.१३] ह्रस्वस्य पिति०॥ (६.१.७१)

# राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानम्

## माध्यमिककक्षायाः पाठ्यक्रमः

## संस्कृतव्याकरणम् (२४६)

### औचित्यम्

भावविनिमयमाध्यमं हि भाषा। भाषायाः उन्नतिः समाजस्य उन्नतिं द्योतयति। समाजः उन्नतान् विविधान् भावान् प्रकटयितुम् भाषाम् व्यवहरति। यदि भाषा त्रुटिता स्यात् तर्हि भावप्रकटने काठिन्यं भवति एव। तदा भाषाकोविदाः भाषाव्यवहारकर्तारः च भाषायां परिवर्तनं कुर्वन्ति। भाषाम् उपयोगिनीं विदधति। क्रमशः भाषायाः परिवर्तनस्य नियमाः जायन्ते। ईदृशानां भाषानियमानां संकलनमेव व्याकरणम्। प्रतिदेशं भाषा भिन्ना। प्रतिराज्यं भाषा भिन्ना। अत एव अन्यैः सह भावविनिमयः दुष्करः। एकभाषासु विद्यमानाद् उत्तमाद् वाङ्मयाद् अन्यभाषिका वञ्चिता भवन्ति। अयं महान् अन्तरायः वर्तते। अतः तथा काचित् महीयसी पवित्रा च भाषा ग्राह्या, सकलभाषाः यस्याः सन्ततिस्वरूपाः। संस्कृतमेव सा भाषा। सा एव भाषासमस्यानाम् एकमेव समाधानम्। संस्कृतभाषायाः सुदृढं व्याकरणमस्ति। नवीनशब्दनिर्माणसामर्थ्यमपि अस्ति। दशसहस्रवर्षपूर्वतनं ग्रन्थम् वयम् अद्यापि पठितुं बोद्धुं शक्नुमः यदि वयं संस्कृतं जानीमः। अद्य अस्माभिः निर्मितं साहित्यं सहस्रवर्षोत्तरमपि जनाः पठितुं शक्ष्यन्ति यदि वयं संस्कृतेन लेखनं कुर्मः। अतः विश्वस्मिन् विश्वे संस्कृतमेव सर्वश्रेष्ठा भाषा। संस्कृतशिक्षया संस्कृतशब्दानाम् उच्चारणमात्रं जातिः गौरवान्विता शक्तिभृता च भवति। भारते यः संस्कृतं जानाति तं विरुद्ध्य न कोऽपि वक्तुं शक्नोति। धर्मरहस्यं काव्यरहस्यं दर्शनरहस्यं च अस्यां भाषायां निबद्धमस्ति। यो भाषां जानाति तस्य पुरः ज्ञानभाण्डार उद्घाटितः तिष्ठति। न केवलमेतावन्मात्रम्। स्वामी विवेकानन्दः उक्तवान् – 'निम्नजातीयान् वदामि – युष्माकम् अवस्थायाः उन्नतिसाधनस्य एकमात्रोपायः संस्कृतभाषाशिक्षणम्।' समाजे जातिभेदस्य नाशोऽपि संस्कृताध्ययनेन भवेत्। अतः न केवलम् उच्चजातीनाम् कृते अपि तु सर्वेषां कृते संस्कृतम् अत्यन्तम् उपकारकम् अस्ति।

जगति प्रायः सर्वाः भाषाः संस्कृतभाषात एव समुद्भूताः। सर्वासामपि मूलम् इयं भाषा। भारतस्य प्राचीनेतिहासस्य अध्ययनमपि दैशिका वैदेशिकाः च विद्वांसः चिकीर्षन्ति। परन्तु संस्कृतभाषाज्ञानं विना पङ्गुवत् ते भवन्ति।

भाषा राज्यनिर्माणकाले राज्यभेदानां कारणम् अभवत्। देशे विभाजनस्य कारणं प्रादेशिकभाषाः। परन्तु संस्कृतम् राष्ट्रैक्यस्य कारणमस्ति। बौद्धानां जैनानां हिन्दूनां च मूलग्रन्थाः, नैके दार्शनिकग्रन्थाः, काव्यानि अस्यामेव भाषायां सन्ति। अतः इयं केवलं कस्यचित् एकस्य धर्मस्य भाषा इति वचनं मूर्खजल्पनम्।

काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् इति प्राचीनोक्तिः। अर्थात् आन्वीक्षिकी विद्या (न्यायशास्त्रम्), पाणिनीयं व्याकरणम् अन्येषां सर्वेषामपि शास्त्राणाम् उपकारकमस्ति। अतः संस्कृते यां कामपि शाखां पिपठिषुः न्यायं व्याकरणं च नूनं पठेत्। अतः संस्कृतजिज्ञासूनां कृते व्याकरणस्य आत्यन्तिकीम् उपयोगिताम् अभिलक्ष्य इदं व्याकरणम् पाठ्यविषयत्वेन निर्धारितमस्ति।

महर्षिः पतञ्जलिः अभ्युपगच्छति यत् संस्कृतव्याकरणज्ञानपूर्वकम् यदि संस्कृतभाषाप्रयोगः क्रियते तर्हि प्रयोगकर्ता पुण्यं लभते। अयमपि व्याकरणाध्ययनस्य लाभोऽस्ति। अथापि व्याकरणम् अध्येयम्।

भाषया भावविनिमयकाले क्वचिदपि त्रुटिः भवति चेत् विघ्नः अपि भवितुमर्हति। शत्रवो मित्राणि भवितुमर्हन्ति, मित्राणि शत्रवो भवितुमर्हन्ति। अतः भाषाया अनन्यसाधारणं गुरुत्वमस्ति एव। तथाहि सुभाषितम् -

यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।

स्वजनः श्वजनो माभूत् सकलं शकलं सकृत् शकृत्।।

अर्थात् - (हे) पुत्र, यद्यपि (त्वम्) बहु न अधीषे (पठसि), तथापि व्याकरणम् पठ। (व्याकरणाज्ञानकारणात्) स्वजनः (आत्मीयः) श्वजनो (कुक्कुरः) मा भूत्, सकलं (समग्रम्) शकलं (खण्डम्) मा भूत्, सकृत् (एकवारम्) शकृत् (विष्ठा/मलः) मा भूत्। अथापि अध्येयं व्याकरणम्।

## अधिकारी

अयं पाठ्यविषयः सम्पूर्णरूपेण संस्कृतभाषया लिखितः अस्ति। परीक्षा अपि संस्कृतमाध्यमेन एव भविष्यति। अतः अस्य पाठस्य कः अधिकारी इति नूनम् समुदेति प्रश्नः।

अत्र स छात्रः अधिकृतः यः -

- अधीतकाव्यकोषः अनधीतव्याकरणशास्त्रः।
- सरलसंस्कृतं, संस्कृतसाहित्यास्य सरलगद्यांशान् पद्यांशान् च पठितुम् बोद्धुं च शक्नोति।
- सरलसंस्कृतं बोद्धुं शक्नोति।
- स्वभावं संस्कृतभाषया लिखित्वा प्रकटयितुं शक्नोति।
- संस्कृतव्याकरणं जिज्ञासुरस्ति।

## प्रयोजनम् (सामान्यम्)

माध्यमिककक्षास्तरे पाणिनीयव्याकरणस्य पाठ्यत्वेन योजनस्य कानिचन उद्देश्यानि अत्राधो दीयन्ते।

- न्यायशास्त्रं व्याकरणशास्त्रं च सर्वशास्त्राणाम् अध्ययने अति उपकारकम् अस्ति। अतः व्याकरणज्ञानं छात्रस्य भवतु इति लक्ष्यम्।
- जगति सुप्रसिद्धस्य पाणिनीयव्याकरणस्य सामान्यं ज्ञानं छात्रस्य भवतु।
- संस्कृतव्याकरणाध्ययनेन समर्थः छात्रः अन्यासां भाषाणामपि तुलनात्मकाध्ययने प्रवर्तताम्।
- संस्कृतभाषाजिज्ञासूनां जिज्ञासाप्रशमनाय अध्येता समर्थो भवतु।
- संस्कृतस्य संस्कृतेश्च रक्षणाय व्याकरणज्ञानेन समर्थः प्रयत्नपरः श्रद्धाशीलः भवतु छात्रः।
- राष्ट्रस्तरे प्राकृतिक-सामाजिक-सांस्कृतिक-वैज्ञानिक-मानविक-मानसिक-आध्यात्मिक-चेतनायाः जागृतिः भवतु।
- शुद्धभाषाप्रयोगेण आत्मविश्वासस्य दृढतासम्पादनम्।
- उचितभाषाप्रयोगेण भावविनिमयात् व्यक्तित्वविकासः भवतु।
- अति प्राचीनाया भारतीयज्ञानसम्पदः वैज्ञानिकतां सर्वजनोपकारितां महिमानं च सगर्वं जगति प्रसारयेत् छात्रः।
- संस्कृतव्याकरणस्य सामान्यज्ञानवर्धनं भविष्यति येन संस्कृतस्य सरलान् अंशान् पठित्वा छात्राः तेषाम् अंशानाम् अर्थान् ज्ञास्यन्ति। ते स्वतः मौखिकीं लिखितां च अभिव्यक्तिं कर्तुं शक्ष्यन्ति।
- संस्कृतव्याकरणं पठित्वा छात्राः महाविद्यालयस्तरे विश्वविद्यालयस्तरे च प्रवर्तमानेषु पाठ्यक्रमेषु अध्ययनार्थम् अवसरं प्राप्तुं समर्थाः भविष्यन्ति।
- भाषाशास्त्रचिन्तने शक्ताः भविष्यन्ति।

## प्रयोजनम् (विशिष्टम्)

**व्याकरणे प्रवेशस्य सामर्थ्यम्**

- महर्षेः पाणिनेः अष्टाध्यायी इति सुविख्यातस्य ग्रन्थस्य अध्ययने समर्थः भवेदध्येता।
- व्याकरणं द्वादशभिः वर्षैः पठ्यते। सविशालो विस्तरो विद्यते। इमं विषयं पठित्वा पाणिनीयव्याकरणे प्रवेशं कुर्यात्।
- व्याकरणाध्ययनं सोपनक्रमेण भवति। यावत् अयं पाठ्यविषयः पठ्यते तावद् अन्यत्र व्याकरणं न पठितुं शक्यते। अतः अनिवार्योऽयं विषयः।
- सूत्राणां रचना कथं कृता इति स्पष्टं ज्ञानं भवेत्।
- पठितसामग्रीम् आश्रितानां प्रश्नानाम् उत्तराणि दातुं योग्यो भविष्यति।

**सूत्रव्याख्याने सामर्थ्यम्**

- संज्ञा परिभाषा इत्यादीनि विविधानि सूत्राणि जानीयात्।
- बहून् व्याकरणस्य पारिभाषिकशब्दान् जानीयात्।
- अधिकारः अनुवृत्तिः पदयोजना च कथं भवति इति ज्ञास्यति
- सूत्रार्थकरणे अन्येषां सूत्राणाम् उपयोगिताम् अवगच्छेत्।
- सूत्रे पदानां परस्परम् अन्वयं कर्तुं प्रभवेत्।
- सूत्रव्याख्याने समर्थो भवेत्।

**सूत्रप्रयोगस्य सामर्थ्यम्**

- सूत्रं लक्षणं कथ्यते। सूत्रं यस्य संस्कारं करोति तत् लक्ष्यं कथ्यते। किं सूत्रं कस्य लक्ष्यस्य संस्कारं करोति इति ज्ञात्वा छात्रः लक्ष्यसंस्कारं कर्तुं शक्ष्यति।
- लक्ष्यसंस्कारकाले सूत्राणां परस्परविरोधं परिहर्तुं समर्थो भविष्यति।
- समग्रं साधुरूपं साधुवाक्यं वा सूत्रप्रयोगपुरःसरं निष्पादयितुं समर्थो भविष्यति।

**साधुशब्दप्रयोगस्य सामर्थ्यम्**

- सूत्राणि व्यवहृत्य साधुशब्दं निष्पाद्य निःसंकोचं व्यवहर्तुं योग्यः भविष्यति।
- स्वयं संस्कृतभाषाप्रयोगकाले स्वभाषादोषान् ज्ञात्वा व्याकरणसाहाय्येन दोषान् दूरीकृत्य शुद्धभाषाप्रयोगे समर्थो भविष्यति।
- अन्यप्रयुक्तायाः दुष्टभाषायाः अपि संशोधने समर्थो भविष्यति।

## पाठ्यसामग्री

पाठ्यक्रमेण सह निम्नलिखितसामग्री समायोजिता भविष्यति-

- त्रीणि मुद्रितानि पुस्तकानि।
- एकं शिक्षकाङ्कित-मूल्याङ्कनप्रपत्रम् प्रदास्यते। अनेन सह छात्रैः एकं परियोजनाकार्यमपि करणीयम्।
- व्याकरणस्य शिक्षणं प्रायोगिकरूपेण अपि भविष्यति। परन्तु प्रायोगिकपरीक्षा कापि नास्ति।
- पाठनिर्माणे संपर्ककक्षासु च अध्यापनकाले छात्रेषु जीवनकौशलानां सम्यक् विकासः भवेत् इति ध्यातव्यम् भविष्यति। अनेन तेषु स्वतः युक्तिसमन्वितचिन्तनशक्तेः विकासः भविष्यति।

- मुक्तविद्यालये प्रवेशोत्तरं पाठ्यक्रममिमं विद्यार्थी एकवर्षत: अधिकाधिकं पञ्चवर्षेषु पूरयितुं शक्नोति।

## अङ्कमूल्यायनप्रविधिः परीक्षायोजना च

- पत्रस्य (१००) शतम् अङ्काः सन्ति। परीक्षाकालः होरात्रयात्मकः। अस्य पत्रस्य लिखितस्वरूपमेवास्ति (Theory)। प्रायोगिकरूपं (Practical) किमपि नास्ति। क्रमिकम् (Formative) समुच्चितं (Summative) चेति द्विविधं मूल्यायनं भविष्यति।
- **क्रमिकं मूल्यायनम्** - विंशतेः अङ्कानां (२०) शिक्षकाङ्कितस्य कार्यस्य (TMA) एकं पत्रं स्यात्। अस्य मूलायनम् अध्ययनकेन्द्रे (Study Centre) भवेत्। अस्य कार्यस्य अङ्काः अङ्कपत्रिकायां (Marks sheet) पृथक् उल्लिखिताः स्युः।
- **समुच्चितं मूल्यायनम्** - वर्षे वारद्वयं (मार्चमासि अक्टोबरमासि च) बाह्यपरीक्षा भविष्यति। तत्र परीक्षायां समुच्चितं मूल्यायनं भविष्यति।
- प्रश्नपत्रे ज्ञानम् (Knowledge), अवगमम् (Understanding) अभिव्यक्तिं (Application skill) चावलम्ब्य युक्तानुपातेन प्रश्नाः समाविष्टाः स्युः।
- परीक्षासु अतिलघूत्तरात्मक- लघूत्तरात्मक-निबन्धात्मक-प्रश्नानामपि समावेशः भविष्यति।
- सूत्रार्थः सूत्रव्याख्या रूपसाधनम् इति त्रयो मुख्याः विषयाः स्युः। अन्ये प्रसक्तानुप्रसक्ताः केचिद् विषयाः अपि स्युरिति अवधेयम्।
- **उत्तीर्णतायै पणः** (condition) - प्रतिशतं त्रयस्त्रिशद् (३३%) अङ्काः उत्तीर्णतायै पणः (मानदण्डः) वर्तते।
- संस्थानस्य परीक्षायाम् उत्तरलेखनभाषा - संस्कृतम् (अनिवार्यम्)

## अध्ययनयोजना

- निर्देशभाषा (Medium of instruction) - संस्कृतम्।
- स्वाध्यायाय कालावधिः (Self-study hours) २४० होराः
- न्यूनतः त्रिंशत् (३०) सम्पर्ककक्षाः (Personal Contact Programme - PCP) अध्ययनकेन्द्रेषु भविष्यन्ति।
- भारांशः - सैद्धान्तिकः (Theory) शतं प्रतिशतम्।
- प्रायोगिकम् (Practical) - नास्ति।

## अङ्कविभाजनम्

अग्रे सारण्यां द्रष्टव्यम्

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

दशम्याः श्रेण्याः व्याकरणस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति। विवरणमधस्तादुपन्यस्यते।-

समग्रस्य पाठ्यविषयस्य त्रयो भागाः प्रकल्पिताः सन्ति। प्रतिभागम् कति पाठाः, स्वाध्यायाय कति होराः, सैद्धान्तिकपरीक्षायाम् कियान् अंशः, प्रायोगिकपरीक्षायाम् कियान् अंशः, प्रत्यध्यायम् अङ्कविभाजनं चेति विषयाः अत्र प्रदीयन्ते।

## अध्यायः - १ सञ्ज्ञापरिभाषम्

**अध्यायस्य औचित्यम्**

सुदृढं संस्कृतव्याकरणम्। अतः सुदृढा संस्कृतभाषा। तत्रापि पाणिनिव्याकरणम् व्याकरणान्तराणि अतिशेते। तस्मिन् व्याकरणे प्रवेशस्य कश्चित् विशिष्टः क्रमः अस्ति। अतः व्याकरणप्रवेशाय अपेक्षिताः संज्ञाः परिभाषाः च अत्र सूत्रशः आलोच्यन्ते। उदाहरणानि प्रदर्श्यन्ते। अयं विभागः व्याकरणस्य भित्तिभूतः अत्र उपन्यस्यते।

## अध्यायः - २ सन्धिः

**अध्यायस्य औचित्यम्**

द्वयोः वर्णयोः सामीप्ये सति वर्णपरिवर्तनं सम्भवति। एवमयं विषयः शब्दनिर्माणप्रक्रियायाम् अत्यन्तम् उपकारः अस्ति। तत्र अति उपकारकानि कानिचन सूत्राणि सोदाहरणं व्याख्यास्यन्ते। अनेन अग्रे सूत्राध्ययने अति सौकर्यम् अनुभवति छात्रः।

## अध्यायः - ३ सुबन्तप्रकरणम्

**अध्यायस्य औचित्यम्**

साधुशब्दनिर्माणं व्यवहारश्च व्याकरणस्य मुख्यं लक्ष्यम्। सुबन्ततिङन्तभेदेन पदं द्विविधम्। सुबन्तमपि अजन्तहलन्तभेदेन द्विविधम्। अस्मिन् विभागे अजन्तपदसाधनस्य हलन्तपदसाधनस्य च प्रक्रिया सूत्रव्याख्यानपुरःसरं प्रदर्श्यते। तत्र अजन्तपुंलिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्गशब्दानां केषाञ्चित् रूपाणि ससूत्रं संसाध्यन्ते।

तत्र हलन्तपुंलिङ्ग–नपुंसकलिङ्गशब्दानां केषाञ्चित् रूपाणि ससूत्रं संसाध्यन्ते। शब्दनिर्माणस्य व्याकरणप्रक्रिया अत्र प्रमुखो विषयः। कथं शब्दः सृज्यते संस्कृते इति आकर्षकोऽयं विषयोऽत्र।

## अध्यायः - ४ विभक्त्यर्थः

**अध्यायस्य औचित्यम्**

व्याकरणप्रक्रियया निर्मितानां शब्दनां वाक्यव्यवहारकाले कस्य अर्थस्य प्रकटनाय तस्य किं रूपं प्रयोज्यम् इति प्रायोगिकः अयं विषयः। शब्दोत्तरं विभक्तियोजनेन विभिन्नाः अर्थाः विभिन्नेषु प्रसङ्गेषु भवन्ति पदानाम्। तत्र कदा कोऽर्थः भवति इत्यादिज्ञानाय इदं प्रकरणम् एकमेव अस्ति। अतः सिद्धशब्दप्रयोगस्य कौशलम् ससूत्रम् उपन्यस्यते अस्मिन् विभागे।

## अध्यायः - ५ कृदन्तम्

**अध्यायस्य औचित्यम्**

सुबन्तपदस्य प्रकृतिषु अन्यतमो भवति कृदन्तशब्दः। स च धातुतः कृत्प्रत्यययोगेन निष्पद्यते। विविधाः कृत्प्रत्ययाः। अतः विभागशः तज्ज्ञानाय अयं विभागः साहाय्यं करोति। पूर्वोत्तरकृदन्तभेदेन मुख्यम् विभागद्वयमत्र वर्तते।

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| १ | अध्यायः– १ | **सञ्ज्ञापरिभाषम्–** | ४६ | २५ |
| | पाठः – १ | व्याकरणम्– व्याकरणपदाचार्यग्रन्थपरम्परापरिचयः, कार्यम्, सूत्रवार्तिकलक्षणम् | | |
| | पाठः – २ | संज्ञा– माहेश्वरसूत्राणि, इत्, लोपः, ह्रस्वादि, उदात्तादि | | |
| | पाठः – ३ | संज्ञा– सवर्णः, ग्रहणकम्, येन विधिः, तपरः इत्यादिसंज्ञाः | | |
| | पाठः – ४ | संज्ञा– गुणः, वृद्धिः, धातु, उपधा इत्यादिसंज्ञाः | | |
| | पाठः – ५ | परिभाषा– षष्ठी स्थानेयोगा, इको गुणवृद्धी, तस्मिन्निति, तस्मादिति इत्यादयः परिभाषाः | | |
| २ | अध्यायः– २ | **सन्धिप्रकरणम्** | ३६ | १४ |
| | पाठः – ६ | संहिता – अच्सन्धिः– यण् , जश्त्वम् , अयवायावः | | |
| | पाठः – ७ | संहिता – अच्सन्धिः– गुणः, वृद्धिः, सवर्णदीर्घः, प्रकृतिभावः | | |
| | पाठः – ८ | संहिता – हल्सन्धिः– रुत्वम् , विसर्गः, श्चुत्वम् , ष्टुत्वम् | | |
| | पाठः – ९ | संहिता – विसर्गसन्धिः– अनुस्वारः, विसर्गः, रो रि | | |
| ३ | अध्यायः– ३ | **सुबन्तप्रकरणम् –** | ८१ | २७ |
| | पाठः – १० | सुबन्ते अजन्तपुंलिङ्गम्– प्रातिपदिकम् , रामशब्दस्य रामान् इति रूपं यावत् रूपाणि | | |
| | पाठः – ११ | सुबन्ते अजन्तपुंलिङ्गम्– रामशब्दस्य रामेण इत्यतः रामेषु इति रूपाणि, सर्वनाम्नां रूपाणि च | | |
| | पाठः – १२ | सुबन्ते अजन्तपुंलिङ्गम्– हरिविश्वपागोप्रधीशब्दानां रूपाणि | | |
| | पाठः – १३ | सुबन्ते अजन्तस्त्रीलिङ्गम्– रमानदीशब्दयोः रूपाणि | | |
| | पाठः – १४ | सुबन्ते अजन्तनपुंसकलिङ्गम्– ज्ञानश्रीपावारिदधिशब्दानां रूपाणि | | |
| | पाठः – १५ | सुबन्ते हलन्तपुंलिङ्गम्– लिह्–दुह् इत्यादिशब्दानां रूपाणि | | |
| | पाठः – १६ | सुबन्ते हलन्तपुंलिङ्गम्– इदम् राजन् अष्टन् इत्यादिशब्दानां रूपाणि | | |
| | पाठः – १७ | सुबन्ते हलन्तपुंलिङ्गम्– तत् युष्मद् अस्मद् इति शब्दानां रूपाणि | | |
| | पाठः – १८ | सुबन्ते हलन्तपुंलिङ्गम्– महत् विद्वत् भवत् इत्यादिशब्दानां रूपाणि | | |

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| **४** | **अध्यायः– ४** | **विभक्त्यर्थप्रकरणम्** | **४९** | **२२** |
| | पाठः – १९ | कारकविभक्तिप्रकरणम्– कारकसामान्यपरिचयः, प्रथमाविभक्तिः | | |
| | पाठः – २० | कारकविभक्तिप्रकरणम्– द्वितीया – कर्तुरीप्सिततमं कर्म | | |
| | पाठः – २१ | कारकविभक्तिप्रकरणम्– द्वितीया – अकथितं च | | |
| | पाठः – २२ | कारकविभक्तिप्रकरणम्– तृतीया, चतुर्थी | | |
| | पाठः – २३ | कारकविभक्तिप्रकरणम्– पञ्चमी षष्ठी सप्तमी | | |
| | पाठः – २४ | उपपदविभक्तिप्रकरणम्– द्वितीया, तृतीया, चतुर्थी, पञ्चमी | | |
| | पाठः – २५ | उपपदविभक्तिप्रकरणम्– षष्ठी, सप्तमी | | |
| **५** | **अध्यायः– ५** | **कृदन्तप्रकरणम्** | **२८** | **१२** |
| | पाठः – २६ | कृदन्तप्रकरणम्– कृत्यम् | | |
| | पाठः – २७ | कृदन्तप्रकरणम्– पूर्वकृदन्तम् - १ | | |
| | पाठः – २८ | कृदन्तप्रकरणम्– पूर्वकृदन्तम् - २ | | |
| | पाठः – २९ | कृदन्तप्रकरणम्– उत्तरकृदन्तम् | | |

# प्रश्नपत्रस्य प्रारूपम् (Question Paper Format)

विषयः - संस्कृतव्याकरणम् (२४६) (Sanskrit Vyakaran) स्तरः- माध्यमिककक्षा

परीक्षाकालावधिः (Time)- होरात्रयम् (३ hrs) पूर्णाङ्काः (Full Marks)- १००

## लक्ष्यानुसारि अङ्कविभाजनम्

| विषयाः | अङ्काः | प्रतिशतं योगः |
|---|---|---|
| ज्ञानम् (Knowledge) | २५ | २५% |
| अवबोधः (Understanding) | ४५ | ४५% |
| अनुप्रयोगकौशलम् (Application Skill) | ३० | ३०% |
| **महायोगः->** | **१००** | |

## प्रश्नप्रकारेण अङ्कभारविभाजनम्

| प्रश्नप्रकारः | प्रश्नसंख्या | अङ्काः | योगः |
|---|---|---|---|
| दीर्घोत्तरीयप्रश्नाः (LA) | ५ | ६ | ३० |
| लघूत्तरात्मकप्रश्नाः (SA) | १० | ४ | ४० |
| सुलघूत्तरीयप्रश्नाः (VSA) | १० | २ | २० |
| बहुविकल्पीयप्रश्नाः एकाङ्कप्रश्नाः स्तम्भमेलनं रिक्तस्थानपूर्तिः च | १० | १ | १० |
| **महायोगः->** | **३५** | | **१००** |

## पाठ्यविषयविभागानुसारि भारांशः

| विषयघटकाः | अङ्काः | स्वाध्यायाय होराः |
|---|---|---|
| १. संज्ञापरिभाषम् | २५ | ४६ |
| २. संधिप्रकरणम् | १४ | ३६ |
| ३. सुबन्तप्रकरणम् | २७ | ८१ |
| ४. विभक्त्यर्थप्रकरणम् | २२ | ४९ |
| ५. कृदन्तप्रकरणम् | १२ | २८ |
| **महायोगः ->** | **१००** | **२४०** |

## प्रश्नपत्रस्य काठिन्यस्तरः

| प्रश्नस्तरः | अङ्काः |
|---|---|
| कठिनः (Difficult) (मेधावी एव उत्तरदाने समर्थः) | २५ |
| मध्यमः (Medium) (नित्यं पठन् अध्यवसायी छात्रः उत्तरदाने समर्थः) | ५० |
| सरलः (Easy) (समग्रां पाठसामग्रीम् अल्पशः पठन् छात्रः उत्तरदाने समर्थः) | २५ |

# प्रश्नपत्रप्रतिमा

अस्मिन् प्रश्नपत्रे ... प्रश्नाः सन्ति। .... मुद्रितपुटानि च सन्ति।

| Roll No.<br>अनुक्रमाङ्कः | ४ | ५ | ० | १ | ५ | ९ | १ | ८ | ३ | ० | ० | १ | Code No.<br>गूढसंख्या | ५५/SS/A/S |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|

SET
स्तबकः **A**

# संस्कृतव्याकरणम्

## Sanskrit Vyakaran

## (२४६)

Day and Date of Examination
परीक्षादिनं दिनाङ्कश्च ..... ______________________

Signature of two Invigilators
निरीक्षकयोः हस्ताक्षरम् १) ______________________

२) ______________________

# सामान्या निर्देशाः

१. अनुक्रमाङ्कः प्रश्नपत्रस्य प्रथमपुटे नूनं लेख्यः।

२. निरीक्ष्यताम् यत् प्रश्नपत्रस्य पुटसंख्या प्रश्नानां च संख्या प्रथमपुटस्य प्रारम्भे प्रदत्तसंख्या समाना न वा। प्रश्नक्रमः सम्यग् न वा।

३. वस्तुनिष्ठप्रश्ननाम् (क), (ख), (ग), (घ) एषु विकल्पेषु युक्तम् उत्तरं चित्वा उत्तरपत्रे लेख्यम्।

४. समेषां प्रश्नानाम् उत्तराणि निर्धारितसमये एव लेख्यानि।

५. उत्तरपत्रे आत्मपरिचयात्मकं लेखनम् अथवा निर्दिष्टस्थानं विहाय अन्यत्र क्वापि अनुक्रमाङ्कलेखनं सर्वथा वर्जितमस्ति।

६. स्वस्य उत्तरपत्रे प्रश्नपत्रस्य गूढसंख्या नूंन लेख्या।

७. समेषां प्रश्नानाम् उत्तराणि संस्कृतभाषया एव लेख्यानि।

# संस्कृतव्याकरणम् (Sanskrit Vyakaran)

## (२४६)

**परीक्षासमयावधिः (Time) होरात्रयम् (३ Hrs)** **पूर्णाङ्काः (Full Marks) - १००**

**निर्देशाः -**

१. अस्मिन् प्रश्नपत्रे [A] भागे १०, [B] भागे १०, [C] भागे १०, [D] ५ इति आहत्य ३५ प्रश्नाः सन्ति।

२. प्रश्नस्य दक्षिणे पार्श्वे संख्यासु (अङ्काःx प्रश्नाः=पूर्णाङ्काः) इति एवम् अङ्कान् निर्दिशति।

३. समे प्रश्ना अनिवार्याः।

### [A] कामं दशानां युक्तं विकल्पं चिनुत। १ x १०=१०

१) पाणिनेः गुरुः कः।

(क) पतञ्जलिः (ख) महेश्वरः (ग) इन्द्रः (घ) उपवर्षः

२) जश्-प्रत्याहारे अयं नास्ति।

(क) ग (ख) झ (ग) ब (घ) ड

३) सम्बन्धार्थे षष्ठी अस्ति, किन्तु सम्बन्धस्य अनुयोगी नास्ति चेत् सा...

(क) स्थानषष्ठी (ख) अवयवषष्ठी (ग) अभेदषष्ठी (घ) कारकषष्ठी

४) जनावस्ति इति सन्धौ कस्य स्थाने आदेशः।

(क) पूर्वस्य (ख) परस्य (ग) पूर्वपरयोः (घ) पररूपम्

५) वणिज् छात्रः इति स्थिते प्रथमं किं सूत्रं प्रवर्तेत।

(क) चोः कुः (ख) खरि च (ग) झलां जशोऽन्ते (घ) वा पदान्तस्य

६) रामेषु इति रूपे केन सूत्रेण मूर्धन्यादेशः।

(क) इण्कोः (ख) आदेशप्रत्यययोः (ग) ष्टुना ष्टुः (घ) षः प्रत्ययस्य

७) खगः नगे उपविशति इति वाक्ये नगः किम् कारकम्।

(क) कर्तृ (ख) कर्म (ग) करणम् (घ) अधिकरणम्

८) अजां ग्रामं नयति इति वाक्ये प्रधानं कर्म किम्।

(क) अजा (ख) ग्रामः (ग) अजा ग्रामश्च (घ) एकमपि न

९) इदम् उपपदविभक्तिविधायकं सूत्रम्।

(क) कर्मणि द्वितीया (ख) आधारोऽधिकरणम् (ग) षष्ठी शेषे (घ) चतुर्थी सम्प्रदाने

१०) इदं न कारकम्।

(क) कर्तृ (ख) कर्म (ग) सम्बन्धः (घ) अधिकरणम्

### [B] यथेच्छं दशानां यथानिर्देशम् उत्तराणि लिखत। २ x १०=२०

१) ङिच्च इति परिभाषा कदा प्रवर्तते। इयं कस्य अपवादः। १+१=२

२) अङ्गसंज्ञाविधायकं सूत्रं किम्। अङ्गस्य इति अधिकारः कियद्दूरं व्याप्नोति। १+१=२

३) ष्टुना ष्टुः इति सूत्रस्यार्थं लिखत। तस्य एकम् अपवादसूत्रं लिखत। १+१=२

४) अष्टाभ्य औश् इति सूत्रस्यार्थं लिखत। तस्य उदाहरणं दीयताम्। १+१=२

५) अदसोऽसेर्दादु दो मः इति सूत्रस्यार्थं लिखत। तस्य उदाहरणं दीयताम्। १+१=२

६) शप्श्यनोर्नित्यम् इति सूत्रस्यार्थं लिखत। तस्य उदाहरणं दीयताम्। १+१=२

७) पात्रं हस्तात् पतति इति वाक्ये हस्तात् इति किं कारकम्। केन सूत्रेण। १+१=२

८) मासं गुडधानाः भवन्ति इति वाक्ये द्वितीया केन सूत्रेण। तत्सूत्रार्थश्च कः। १+१=२

९) नन्दनः इत्युदाहरणे कः कृत् प्रत्ययः। केन सूत्रेण विधीयते। १+१=२

१०) वासरूपोऽस्त्रियाम् इति कीदृशं सूत्रम्। इदं सूत्रं क्व न प्रवर्तते। १+१=२

**[C] स्वच्छन्दं दश अनतिदीर्घोत्तरैः समाधत्त। ४ x १०=४०**

१) अलोऽन्त्यस्य इति अनेकाल्शित् सर्वस्य इति वा सूत्रं व्याख्यात।

२) परः सन्निकर्षः संहिता इति सुप्तिङन्तं पदम् इति वा सूत्रं व्याख्यात।

३) तपरस्तत्कालस्य इति सूत्रं व्याख्यात।

अथवा -

स्तम्भयोः योग्यं युग्मं चिनुत।

| | |
|---|---|
| (क) नदी | (i) रामान् इत्यत्र आन् |
| (ख) घि | (ii) वधू |
| (ग) टि | (iii) पठ् अ ति इत्यत्र पठ् अ समुदायः |
| (घ) अङ्गम् | (iv) कवि |

४) एङि पररूपम् इति वृद्धिरेचि इति अनयोरेकं सूत्रं व्याख्यात।

५) औतोऽम्शसोः इति सूत्रं व्याख्यात।

६) अस्मत् त्वम् इत्यनयोः एकं रूपं साधयत।

७) गोपः गां पयः दोग्धि इति अथवा मेघात् जलं पतति इति अनयोः एकं प्रयोगं साधयत।

८) कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रं व्याख्यात।

९) तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इति सूत्रं व्याख्यात।

१०) लटः शतृशानचावप्रथमासमानाधिकरणे इति ण्वुल्तृचौ इति अनयोरेकं सूत्रं व्याख्यात।

**[D] छन्देन पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०**

१) बाह्ययत्नान् परिचाय्य कस्य कः बाह्ययत्नः इति विस्तारयत।

२) इको यणचि इति अथवा आदिरन्त्येन सहेता इति सूत्रं व्याख्यात।

३) अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यस्य सूत्रं व्याख्यात। अथवा कृत्यप्रत्ययान् परिचाययत।

४) रामः मत्याम् इत्यनयोरेकं रूपं ससूत्रं साधयत।

५) कर्तुरीप्सिततमं कर्म इति अथवा ध्रुवमपायेऽपादानम् सूत्रं व्याख्यात।

--)(O)(--

# प्रश्नपत्रप्रतिमाया उत्तरमाला

**[A] दशानां युक्तः विकल्पः।** १ x १०=१०

१) (घ), २) (ख), ३) (क), ४) (क), ५) (क), ६) (ख), ७) (घ), ८) (क), ९) (ग), १०) (ग)

**[B] दशानां यथानिर्देशम् उत्तराणि।** २ x १०=२०

१) अल्समुदायबोधकात् पदात् स्थानषष्ठी अस्ति चेत्, आदेशः च अनेकाल् किञ्च ङित् स्यात् चेत् ङिच्च इति परिभाषा प्रवर्तते। इयम् अनेकाल्शित् सर्वस्य इति परिभाषायाः अपवादः। १+१=२

२) यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। ई च गणः (७.४.९७) इति सप्तमाध्यायस्य अन्तिमसूत्रं यावत् पञ्चसु पादेषु व्याप्नोति। १+१=२

३) ष्टुना ष्टुः इति सूत्रस्यार्थस्तावत् - सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः। अस्य अपवादो हि तोः षि इति सूत्रम्। १+१=२

४) अष्टाभ्य औश् इति सूत्रस्यार्थः - कृताकारात् अष्टनः जश्शसोः औश् इति सूत्रार्थः। उदाहरणं तावद् अष्टौ इति। १+१=२

५) अदसोऽसेर्दादु दो मः इति सूत्रस्यार्थः - अदसः असान्तस्य दात्परस्य उदूतौ स्तः दस्य मः च इति। तस्य उदाहरणं हि - अमू इति।। १+१=२

६) शप्श्यनोर्नित्यम् इति सूत्रस्यार्थो हि शप्श्यनोः आत्परो यः शतुः अवयवः तदन्तस्य नित्यं नुम् स्यात् शीनद्योः इति। तस्य उदाहरणं च भवति पचन्ती इति। १+१=२

७) पात्रं हस्तात् पतति इति वाक्ये हस्तात् इति अपादानकारकम्। ध्रुवमपायेऽपादानम् सूत्रेण। १+१=२

८) मासं गुडधानाः भवन्ति इति वाक्ये द्वितीया कालाध्वनोरत्यन्तसंयोगे सूत्रेण। तत्सूत्रार्थश्च भवति - कालस्य अध्वनः वा द्रव्येण गुणेन क्रियया च सह अत्यन्तसंयोगे सति कालवाचकात् अध्ववाचकात् च शब्दात् द्वितीयाविभक्तिः भवति। १+१=२

९) नन्दनः इत्युदाहरणे ल्युः कृत् प्रत्ययः। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः इति सूत्रेण विधीयते। १+१=२

१०) वासरूपोऽस्त्रियाम् इति परिभाषासूत्रम्। इदं सूत्रं स्त्र्यधिकारे न प्रवर्तते। १+१=२

**[C] स्वच्छन्दं दश अनतिदीर्घोत्तरैः समाधत्त।** ४ x १०=४०

१) बिन्दुः ५.४ / ५.६ द्रष्टव्यः

२) बिन्दुः ४.६ / ४.१२ द्रष्टव्यः

३) बिन्दुः ३.३ द्रष्टव्यः

अथवा तृतीयः पाठः द्रष्टव्यः (उत्तरं दत्तमस्ति)

स्तम्भयोः उत्तराणि - (क)-(ii), (ख)-(iv), (ग)-(i), (घ)-(iii)

४) बिन्दुः ७.७ / ७.४ द्रष्टव्यः

५) बिन्दुः १२.१५ द्रष्टव्यः

६) बिन्दुः १७.१६ / १७.४ द्रष्टव्यः

७) बिन्दुः २१.१ / २३.१ द्रष्टव्यः

८) बिन्दुः २२.४ द्रष्टव्यः

९) बिन्दुः २९.१ द्रष्टव्यः

१०) बिन्दुः २८.४ / २७.१ द्रष्टव्यः

[D] छन्देन पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०

१) बिन्दुः ३.१ द्रष्टव्यः।

२) बिन्दुः ६.२ / २.१ द्रष्टव्यः

३) बिन्दुः १०.१ द्रष्टव्यः

४) बिन्दुः १०.८ / १३.१२ द्रष्टव्यः

५) बिन्दुः २०.१ / २३.१ द्रष्टव्यः

--)(O)(--